प्राच्यविद्या-ग्रन्थमालायाः प्रथमं रत्नम्



विज्ञानभिक्षुविरचितं

# ब्रह्मसूत्र-
# विज्ञानामृतभाष्यम्




सम्पादकः

पं० केदारनाथत्रिपाठी

न्याय-वेदान्त-सांख्ययोगाचार्यः साहित्यरत्नम्

काशीहिन्दूविश्वविद्यालयस्य प्राच्यविद्याधर्मविज्ञानसंकाये

दर्शनविभागस्य भू० पू० अध्यक्षः

प्रकाशकः

काशी हिन्दू विश्व विद्यालयः

वाराणसी-५

Prācyavidya Series: First Issue

# Vijñānabhikṣu's Vijñānāmrta-bhāṣyam on Brahmasūtras




*Critically Edited*

*by*

Pt. Kedāranātha Tripāṭhī
Ācārya in Nyāya-Vedānta-Sāṅkhyayoga and Sāhityaratna
Ex. Head of Deptt. of Darśana
**Faculty of Oriental Learning & Theology**
**Banaras Hindu University**

*Publisher*
**BANARAS HINDU UNIVERSITY**
**VARANASI—221005, U. P.**
**INDIA**

## सम्पादयितुः परिचयः

सारण्य (सारन) मण्डले पुण्ये ग्रामे विष्णुपुराभिधे ।
अवाप्तो यो जनिं रामविहारीति त्रिपाठिनः ॥ १ ॥

न्यायवैशेषिके शुक्लात् सूर्यनारायणाद् गुरोः ।
कृपालुश्रीहरिहराद् वेदान्तांश्च द्विवेदिनः ॥ २ ॥

श्रुत्वा, वादविदग्रणीः स विदितः केदारनाथः कृती,
षड्वह्निद्युदृगञ्चिते (२०३६) शुभतमे संवत्सरे वैक्रमे ।
शुच्याख्येऽमलमासि वै सितदले पूर्णत्वमाप्ते विधौ
भाष्यं तत् समपीपदद् यतिपतेर्विज्ञानभिक्षोः 'ऋजु' ॥ ३ ॥

### सम्पादयितुरन्याः कृतयः

१. तर्कसंग्रह-न्यायबोधिन्याः संस्कृत-'कला'-व्याख्या (प्रकाशिता)।
२. तर्कसंग्रह-दीपिकायाः हिन्दी-'कला'-व्याख्या (प्रकाशिता)।
३. सांख्ययोगकोशः (मौलिको ग्रन्थः) (प्रकाशितः)।
४. आत्मतत्त्वविवेकस्य (प्राचीनन्याये) राष्ट्रभाषानुवादः सटिप्पणः (अप्रकाशितः)।
५. जन्मान्तरवादः (अप्रकाशितः)।

# धन्यवादाः

प्राच्यविद्याधर्मविज्ञानसंकाये दर्शनविभागप्राध्यापकेन पं० श्रीकेदारनाथत्रिपाठिना
मम संकायप्रमुखत्वकाले निदेशकत्वे च पञ्चमपञ्चवर्षीययोजनान्तर्गतं
ब्रह्मसूत्रविज्ञानामृतभाष्यस्य प्रकाशनकार्यमारब्धम्, चतुर्मासा-
भ्यन्तर एवैतादृशं महत्त्वपूर्णग्रन्थं निजवैदुष्यपूर्ण-
टिप्पणीभिः सह सम्पाद्य अध्यवसायिनाऽनेन
विद्वत्प्रवरेण महदुपकृतं संस्कृतस्य ।

मन्ये, दुर्लभस्योक्तग्रन्थस्य प्रकाशनेन विश्वविद्यालयानुदानायोगः, अयं
विश्वविद्यालयः, संकायश्चायमिति त्रयोऽप्येभिर्गौरवान्विताः कृताः ।
विद्वद्वर्गस्य छात्रसमुदायस्य चैतन्महद्धितमनुष्ठितमिति मन्वानः
संपादकप्रवराय श्रीत्रिपाठिवर्याय धन्यवादान् व्याहरन्नेतस्य
प्रयासस्य पूर्णसाफल्यं कामये ।

राजमोहन उपाध्यायः
ज्योतिषविभागाध्यक्षः,
भू० पू० संकायप्रमुखश्च
काशीहिन्दूविश्वविद्यालयः

दिनाङ्कः १५-७-१९७९

# प्राक्कथनम्

संस्कृतशिक्षा काशीहिन्दूविश्वविद्यालयस्य प्रथममुद्देश्यम्। संस्कृतं च श्रुतिमहती सरस्वती। श्रुतिश्च वेदः। वेदान्ताश्च वेदानां हृदयम्। तानाश्रित्य निर्मितेषु ब्रह्म-सूत्रेष्वपि गीतायामिव वेदान्तप्रस्थानत्वमिदंवर्षप्रेक्षावत्सु सुप्ररूढम्। आदिशङ्कराचार्या अत एव वेदान्तान् व्याकृत्य ब्रह्मसूत्राण्यपि शारीरकभाष्यनाम्ना काव्योपमेन भाष्यरत्नेन व्याचक्रुः। तत्र परितोषमपश्यन्तः परेऽपि साम्प्रदायिकाः प्रावर्तन्त भाष्यकर्मणि सूत्राणामेषाम्। तेषु विज्ञानभिक्षुरन्यतमः। सांख्य-योग-सिद्धान्तेषु भृशं श्राद्धेन भिक्षुणानेन ब्रह्मसूत्र-सिद्धान्तानां दर्शनान्तरैरविवादः प्रतितिष्ठापयिषिष्यते। स्तुत्य एष प्रयासः। मतिस्वातन्त्र्यं हि भारतीयानां सांसिद्धिकोऽधिकारः। अतोऽत्र वाचस्पतिमिश्रैरिव तटस्थैर्विद्वद्भिरधरोत्तरत्व-विचारः शक्यक्रियः। पुस्तकालाभे नास्त्यवकाशो विचारस्येति पुस्तकमिदं प्राच्यविद्याग्रन्थ-मालायां काशीहिन्दूविश्वविद्यालयस्य अष्टादशानामपि विद्यास्थानानामध्यापनभूमिः प्राच्य-विद्याधर्मविज्ञानसंकाय एष प्रकाशयति चिरं प्रकाशितपूर्वमपि।

ग्रन्थमिममेतस्य प्रकाशितदुर्लभानि पुस्तकानि समालोच्य संकायस्यास्य सांख्ययोग-विषय उपाचार्याः पं० श्रीकेदारनाथत्रिपाठिनः पाठशोधनेन मूल्यवत्तरं समपादयन्निति यत्सत्यं प्रसादस्य विषयः। पाठशोधनेऽपि मतिभेदा विज्ञेषु स्वाभाविकाः। अयमेव हि मञ्चो यमारुह्य सप्रहर्षं नर्नृतीति भगवती ब्राह्मी। नृत्यमङ्गलमिदं नैरन्तरीमाप्नुयादिति विषये राष्ट्रमिदं पूर्ववदिदानीमपि बद्धाभिलाषमेव। अत एवास्य पूर्वपक्षेष्वपि भूयान् मानः। मन्ये ब्रह्मसूत्राणां विज्ञानामृतभाष्येणानेन भगवती ब्रह्मविद्या प्रसत्स्यति विश्व-विद्यालयस्यास्य जनयितॄणां महामनसां पं० श्रीमदनमोहनमालवीयानाममृतगर्भा शेमुषीव।

विश्वविद्यालयानुदानायोग-राशिना संकाय एष इतरानपि दुर्लभान् ग्रन्थान् मुद्रयति तानपि सुमेधोभ्य उपदीकृत्यैव संवत्सर एष विरंस्यतीति दृढं प्रत्येति—

रेवाप्रसादो द्विवेदी

आषाढशुक्ला त्रयोदशी, वि० सं० २०३६ काशीहिन्दूविश्वविद्यालयस्य प्राच्यविद्याधर्मविज्ञान-

दिनाङ्कः ७-७-७९ संकाये साहित्यविद्याध्यक्षः संकायप्रमुखश्च

# प्रास्ताविकम्

अथेदानीं प्रस्तूयते सर्वदर्शनमूर्धन्यभूतं वेदानां रहस्यार्थप्रदर्शकतयाऽन्वर्थाभिधानं सबहुमानमादृतं नैकभाष्यकाराणां वेदान्तदर्शनमिदं श्रीमद्विज्ञानभिक्षुप्रणीतेन ऋजुभाष्येत्यपराभिधानेन विज्ञानामृतभाष्येण संवलितं सम्पाद्य प्रकाशमानीतमिति महान् प्रमोदावसरः ।

वेदान्तदर्शनं हि साक्षाद् वेदार्थमीमांसापरम्, इतरदर्शनानि तु न्यायप्रभृतीनि परम्परया तस्यैवोपोद्बलकभूतानीति वेदान्तस्य सर्वदर्शनमूर्धन्यत्वं सर्ववैदिकजनसम्मतम्, यतो वेदार्थरक्षणार्थमेव हि तेषामपि प्रयासः । जैमिनीयमीमांसादर्शनमपि यद्यपि साक्षादेव श्रुत्यर्थमीमांसापरतया सुप्रसिद्धं तथापि तस्य बाह्यकर्मनिरूपणपरत्वेन न चरमरहस्यार्थनिरूपकत्वमिति वैयासकस्य मीमांसादर्शनस्य वेदान्तत्वं दर्शनेषु मूर्धन्यत्वञ्च सुस्थमेव । अतएव मनुना—

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥

इति ब्रुवता प्रवृत्तिनिवृत्त्यात्मकधर्मनिर्णये तर्काणां वेदाविरोधित्वमावश्यकममन्यत । नैयायिकप्रवरेण श्रीमदुदयनाचार्येण च बौद्धाधिकारे बाह्यार्थभङ्गभङ्गप्रसङ्गे "वेदनये जयश्रीः" इत्युद्घोषयता कण्ठत एव वेदान्तमहत्त्वमुररीकृतम् । अतएव च महर्षिगौतमेनापि "तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत्" इति सूत्रितम् । तत्त्वं च पारमार्थिकम्, तच्च वस्तुतो वेदान्तप्रतिपाद्यमेवास्ति, वेदरहस्यार्थभूतत्वादिति मन्यतेऽभियुक्तैः ।

एतच्च दर्शनं भगवत्पादश्रीमच्छङ्करप्रभृतिभिराचार्यैः कृतभाष्यमपि तत्रापरितोषमनुभूयेवाचार्यविज्ञानभिक्षुणा विज्ञानामृताख्यमृजुभाष्यमिदं प्राणायि । तत्र के तावदपरितोषविषयाः सन्तीति तदीयभाष्यावलोकनेन स्थाने स्थाने 'आधुनिकास्तु वेदान्तिब्रुवास्तु' इत्यादिपदघटितैस्सन्दर्भैः स्फुटं प्रतीयते । एतद्भाष्यप्रसङ्गेनाचार्यविज्ञानभिक्षुर्विशेषतोऽद्वैतवादं वादान्तरञ्च क्वचिन्निरसितुं प्रयस्यति । अत्रापि च निमित्तं सांख्ययोगसिद्धान्तं प्रति तदीयो विशेषाग्रहो न्यायादिदर्शनैः सह वेदान्तदर्शनस्य तदीया समन्वयबुद्धिश्च वर्तेते इति प्रतियन्ति विपश्चितः ।

यत् किमपि भवतु । एतद्भाष्यग्रन्थस्य काशीहिन्दूविश्वविद्यालयतः प्रकाशने मद्द्वारा सम्पादने चेदमेव प्रयोजनमभूद्यद्विचारदृष्ट्या समृद्धमपि भाष्यमिदमितः पूर्वं ममैव प्रस्तावाद् दर्शनविभागीयपाठ्यसमित्या आपणेष्वप्यनुपलम्भात् पुस्तकालयेष्वप्यसौलभ्याच्चात्रत्यशास्त्राचार्यपरीक्षापाठ्यसारिणीतो निःसारितम् । तदानीमेव मया मनसि संकल्पितं यदवश्यं बहुलाशुद्धिरयं भाष्यग्रन्थो मया संशोध्य विश्व-

विद्यालयतः प्रकाशयितव्य इति। स च संकल्पोऽद्य भगवता विश्वेश्वरेण पूरित इति महान् सन्तोषः। एतत्प्रकाशने आदर्शभूतग्रन्थस्यैका प्रतिः काशीहिन्दूविश्वविद्यालयीयकेन्द्रीयपुस्तकालये दृष्टा, एकैका च प्रतिः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीये सरस्वतीभवनपुस्तकालये गोयनकासंस्कृतमहाविद्यालयीये विश्वनाथपुस्तकालये च वर्तते।

आदर्शभूतग्रन्थोऽयं १९०१ तमे खीरताब्दे अडकरोपनामकेन श्रीमुकुन्दशास्त्रिणा सम्पादितः काशीस्थविद्याविलासमुद्रणालये श्रीहरिकृष्णदासेन मुद्रयित्वा प्रकाशितोऽशुद्धिबहुलोऽपि प्रकाशनेऽस्मिन् मम प्रकामं साहाय्यमकरोदिति नात्र सन्देहः। तं विना प्रकाशनमिदमसंभवमेवासीत्।

किन्तु प्रकाशनात् पूर्वं तत्रत्यानां प्रतिपत्रमशुद्धपाठानां संशोधनं सन्दिग्धपाठानां निर्धारणञ्चात्यावश्यकं महत्कार्यमासीत् कस्यापि सम्पादकस्य। इतोऽष्टसप्ततिवर्षेभ्यः पूर्वमेतद्भाष्यग्रन्थस्य सम्पादनं कुर्वाणाः श्रीशास्त्रिणस्तदानीं समुपलब्धादर्शभूतमातृकागताशुद्धीः प्रूफगताशुद्धीर्वोपैक्षिषतेति मन्ये। तत्रोपेक्षायाः किं कारणमिति नो वयं विद्मः।

कार्येऽस्मिन् सावहितं परिश्रम्यापि मया कियत् साफल्यमध्यगामीति विपश्चित एवात्र साक्षितामश्नुवीरन्निति त एव प्रमाणम्। उदाहरणार्थमिह कतिपयस्थलानि प्रदर्श्यन्ते। यथा—

८ पृष्ठे १ पङ्क्तौ 'अकर्तुम्' इति पूर्वमुद्रितपुस्तके एकतरहस्तलिखितपुस्तके च पाठोऽयुक्तः।

२४ पृष्ठेऽन्तिमपङ्क्तौ "प्रवृत्त्याम्नायते" इति मु० पु० पाठोऽसङ्गतः।

३० पृष्ठे १७ पङ्क्तौ "तस्मातन्तमसैवात" इति पाठो न सम्यक्।

४० पृष्ठे १७ पङ्क्तौ "चैतन्ये वृत्तिविम्ब" इति मु० पु० पाठोऽसम्यक्।

६५ पृ० २२ पङ्क्तौ "हिरण्यगर्भ इति रिक्तं च" इति मु०पु० पाठोऽनुचितः।

२६१ पृ० १० पङ्क्तौ "ब्रह्मचर्यमस्ति तर्हि" इति मु० पु० पाठोऽशोभनः।

२९३ पृ० १२ पङ्क्तौ "स्नेहे योगं च" इति पाठोऽतीवायुक्तः।

३०२ पृ० १७ पङ्क्तौ "पश्वेपुत्वेंव संगति" इति मु० पु० पाठो विश्रृङ्खलः।

३१२ पृ० ७ पङ्क्तौ 'वर्णयन्ति' इत्यनन्तरम् 'तन्न' इत्यपेक्षितोऽपि पाठो नास्ति मुद्रितपुस्तके।

३२७ पृ० २१ पङ्क्तौ "अवश्वहवैन्यश्वान्तुवौ" इति मुद्रितपुस्तकपाठः सुरगुरुणाप्यवगतार्थीकर्तुं न पार्येत। सामस्त्येन पाठदोषास्तु प्रतिपत्रं सङ्केतचिह्नित एव द्रष्टुं शक्येरन्निति कतिपयस्थलान्येव स्थालीपुलाकन्यायेनेह प्रदर्शितानि।

अत्रत्यपाठसंशोधननिर्धारणयोः संपूर्णानन्दसंस्कृतविश्वविद्यालयस्य सरस्वती-

भवनपुस्तकालयीया हस्तलिखिता मातृकाद्वयी मयोपायोजि। एका २८१०९ संख्याका १९५४ तम-संवति लिपिबद्धकृता, द्वितीया च २८२११ संख्याका १९४४ तम-संवति लिपिबद्धकृता। इमे उभे अपि मातृके पूर्णे स्तः।

इदं मातृकाद्वयमपि क्वचिल्लुप्तैः, क्वचित् सन्दिग्धैः, क्वचिदस्फुटैर्विपरीतैश्च क्वचिद् वर्णपदवाक्यैः संवलिततया, क्वचिद् दुष्पठतया च पाठसंशोधने पर्याप्तमनुपकुर्वदपि प्राप्तमुद्रितपुस्तकपाठैः सह विमृश्यमाणं सत् मन्दप्रकाशो दीप इव जनमर्थजातं प्रति प्रापयत्येव शनैर्निर्णयं प्रति मानसमिति नेह सन्देहलेशोऽपि। एतच्च स्थाने स्थाने दीयमानटिप्पणीरालोक्यानुभवितुं शक्नुवन्ति विद्वांसः। क्वाचित्कस्तु पाठः प्राक्तनशिलालेखादिरिव दुर्बोधार्थोऽबोध्यार्थो वास्ति, यथा—"अवश्चहचैन्यश्चान्तुवौ" इत्यादिः।

पाठनिर्धारणं च मयाऽनेकप्रकारेण दर्शितम्। क्वचिन्मुद्रितपुस्तकस्यासंगतं प्रतीयमानमेव पदं यथावद् धृत्वा टिप्पण्यां संगतः पाठो दत्तः। स च पाठः क्वचित् स्थले उभाभ्यां हस्तलिखितपुस्तकाभ्यां सह संवादं प्राप्तो भवति, क्वचित्त्वेकतरेणव हस्तलिखितपुस्तकेन सह संवादमन्यतरेण च विसंवादं प्राप्नुवन् भवति। क्वचित्तु स्थले मुद्रितपुस्तकानुसारिणा असङ्गतेन पाठेन सहैव तत्रत्यो युक्तः पाठः कोष्ठके प्रदत्तः। तत्रापि मुद्रितपाठमनुसरन्तावननुसरन्तौ वा उभयहस्तलिखितपाठनिर्देशावपि टिप्पण्यां दत्तौ। क्वचित्तु मुद्रितपुस्तकस्थस्यातिस्फुटाशुद्धपाठस्य स्थाने शुद्धपाठः काञ्चित् टिप्पणीं विनैव दत्त इति।

क्वाचित्कस्तु विवादास्पदीभूतपाठः उभयपार्श्वगतकोष्ठकमध्यगतत्वेन, क्वचिच्चन्द्रकादिचिह्नविशेषमध्यगतत्वेन, क्वचिच्च संख्याविशेषमध्यगतत्वेन वा कृत्वा दर्शितः। तत्रत्या टिप्पण्यपि तथाविधसंकेतेनैव मया दत्ता। मुद्रितपुस्तके श्रीमुकुन्दशास्त्रिधृता टिप्पणी मयापि तथैव रक्षिता, किन्तु तत्र "२ पु० नास्ति, १ पु० नास्ती"ति टिप्पणीषु १–२ इति संख्याभ्यां के पुस्तके निर्दिष्टे इति न तेन महोदयेन क्वापि स्पष्टीकृतम्।

एवं ग्रन्थस्यास्य यथासंभवं शुद्धसंस्करणस्य प्रस्तुतौ सावधानतया प्रयतमानेऽपि मयि मानुष्यकनान्तरीयकतया सञ्जातास्त्रुटीः क्षंस्यन्ते संशोधयिष्यन्ति च स्वयं विद्वांस इति तान् प्रति सप्रश्रयमहं निवेदये।

### विज्ञानभिक्षोर्व्यक्तित्वं कृतयः सिद्धान्तश्च

यद्यपि विज्ञानभिक्षुर्ब्रह्मसूत्रभाष्यकारेष्वत्याधुनिक आसीत् तथापि तस्य जन्मकालयोः पितुर्मातुर्वा नामोल्लेखो न क्वाप्युपलभ्यते। स्वयमपि तेन स्वस्थानकालादिसम्बन्धे न किञ्चिन्निर्दिष्टम्। तथापि तस्य विशालग्रन्थराशिमाधृत्य तदीयव्यक्तित्वविषये आभासः शक्यतेऽधिगन्तुम्। कतिपयविद्वांसो जनश्रुत्या तं गौडदेशवास्तव्यमाचक्षते, कतिपये चोत्तरभारते तस्य क्वचिन्निवास इति प्रतिपादयन्ति। आचार्या-

न्तरवत् न तस्य किमपि स्मारकमुपलभ्यते, नापि तन्नाम्ना कश्चित् सम्प्रदायो मठादिकं वास्ति। प्रचलितसम्प्रदायेषु कस्मिंश्चिदप्यश्रद्धानात् प्रत्युत तीक्ष्णशब्दैस्तत्खण्डनात्, जनमानसावर्जकसम्प्रदायविशेषाप्रवर्तनाच्च तदीयं मतं प्रति सामान्यजनेषु नितरामौदासीन्यमासीत्। अतिस्वतन्त्रप्रकृतितया राजाश्रयोऽपि कश्चित्तस्य न प्राप्त आसीदिति सम्भाव्यते। एतान्येव कारणानि प्रतीयन्ते यत्तस्य लघुरपि स्मारकविशेष इदानीं नोपलभ्यत इति।

एवं सत्यपि तदीयदेशकालयोर्निर्धारणाय सयत्ना अभूवन् एतद्देशीया विदेशीयाश्च विद्वांसः। तथाहि,—विज्ञानभिक्षुः स्वग्रन्थेषु प्रयागस्य त्रिवेण्याश्चोल्लेखं करोति। यथा—"स्यादेवं प्रयागादौ ब्रह्मादीनां यागादिश्रवणात्" (ब्र० सू० वि० भा० पृ० २२१ चौखम्बाप्रकाशनम्), स्वर्गिणां भारतवर्षमागत्य...प्रयागादौ" (यो० वा० पृ० १६१ चौ० प्रका०), "निरीश्वरवादे तु त्रिवेणीवदन्योन्याविभक्ततया" (सां० प्र० भा० पृ० ३४) इति। अनेन प्रयागत्रिवेण्योर्बहुधोल्लेखेन प्रतीयते यत् प्रयागो विज्ञानभिक्षोर्जन्मभूमिर्निवासभूर्मिर्वाऽवश्यमासीत्। ग्रन्थप्रणयनादिकार्यं प्रयाग एव कृतवान् भवेदित्यपि तेन सम्भाव्यते। विज्ञानभिक्षुः संन्यासी आसीत्। संन्यासकाल एव च तेन ग्रन्था लिखिता इति तदीयग्रन्थान्तपुष्पिकातः प्रमाणितं भवति, तत्र 'यति-यतिवर-यतीन्द्र, इत्यादिशब्दप्रयोगदर्शनात्। अतः सम्भाव्यते यत् स प्रयागस्थ एव भवेत्। अथवा स्थानान्तरादागत्य प्रयागे कृतनिवासो भवेत्, प्रयागस्तस्य साधनाक्षेत्रं वा स्वीकृतो भवेदिति।

ग्रन्थेषु कतिपयहिन्दीक्षेत्रप्रभावितानां संस्कृतशब्दानां प्रयोगेणापि प्रतीयते यदमुष्य जन्मभूमिः कश्चिद् हिन्दीप्रदेश एवासीत्, स विहारो वा स्यादुत्तरप्रदेशो वा, मध्यप्रदेशो वेति। घोटक-विलम्वसिद्धि-मिलन-रात्रिदिन-तुल्यायव्ययेत्यादिपदानि, नारायणोऽयं भासते-मुखलग्नां मसीमिव-धानस्थतण्डुलस्य चावघातेनेत्यादिलोकोक्तयश्च प्रायो हिन्दीप्रदेशेषु प्रयुज्यन्ते। सूर्यार्थे नारायणशब्दव्यवहार इह प्रदेशे दृश्यते। धानशब्दप्रयोगोऽपीहत्य एवास्ति। अस्य प्रियशिष्यो भावागणेशः काशीस्थ आसीत्। अतोऽप्यस्यैतत्प्रदेशस्थत्वमास्थीयते। अस्य विचरणस्थलन्तु दक्षिण-भारतं, राजस्थानम्, उत्तरप्रदेशस्य पश्चिमभागो, वङ्गप्रदेशस्योत्तरभागश्चासीदिति 'नीलगिरि-स्वाम्यर्थमुष्ट्रकुङ्कुमवहनवत्-पनसाम्रदाडिमादिः' इत्यादिशब्दप्रयोगादुन्नीयते। एवं योगवार्तिके मङ्गलश्लोके "भूदेवैरमृतम्" इत्युल्लेखाद् ब्राह्मणकुलोत्पन्नत्वमपि तस्य सम्भाव्यते।

यद्यपि विज्ञानभिक्षोरात्मगोपनप्रवृत्त्या देशवत् तस्य समयोऽपि दुर्निर्धारण एवास्ति, तथापि भारतीयवाङ्मयस्येतिहासवेत्तारस्तं सामान्यतः षोडश्यां शताब्द्यां वर्तमानमाचार्यं मन्यन्ते। तेषु प्रो० ए० बी० कीथ, डा० एफ० ई० हाल, डा० रिचर्डगार्वे, प्रो० विन्टरनिट्ज, डा० एन० एन० दासगुप्त, डा० राधाकृष्णन् महोदयाः प्रमुखाः सन्ति। पर्याप्तसामग्र्यभावात् एभिर्विद्वद्भिर्यद्यपि नोपयुक्तास्तर्काः समु-

परस्थापितास्तथापि क्वचिद् विरोधाभावात् षोडशशताब्दी तस्य कालोऽभ्युपगतः। डा० पी० के० गोडेमहोदयस्तु विज्ञानभिक्षुकालनिर्णयाय नूतनं तर्कमुद्भावयति यत्—विज्ञानभिक्षुशिष्येण भावागणेशेन कृतहस्ताक्षरमेकं निर्णयपत्रं त्र्यशीत्यधिकपञ्चदशशतख्रीस्ताब्दीयं ( १५८३ ई० ) समधिगतम्। एतदाधारेण तस्य समयः षोडशी शताब्दी निश्चेतुं शक्यत इति। यद्यप्यस्मिन्नपि तर्के केषांचन विरोधो वर्तते तथापि विरोधोऽयं न प्रबलप्रमाणमूलक इति पूर्वोक्तविदुषां निर्णय एव साधीयान्।

एवं कीथनिर्णीतात् सदानन्दयतिसमयात् किञ्चित् पूर्ववर्ती विज्ञानभिक्षुरित्यपि केचन मन्यन्ते। यतो हि सदानन्दयतिना विज्ञानभिक्षुमतखण्डनं तन्नामोल्लेखपूर्वकं कृतमस्ति। सदानन्दयतिश्च १५०० शताब्दीतः किञ्चित् पूर्वमासीत् इति कीथेन निर्णीतम्। एतदनुसारेण विज्ञानभिक्षुश्चतुर्दशशताब्दीतः पश्चाद्वर्ती कथमपि भवितुं नार्हतीति। अत १३५० तमख्रीस्ताब्दस्य समीपे विज्ञानभिक्षोरवस्थितिरिति तेषां मतम्। किन्त्विदं कथनमपि न सम्यक्, कीथनिर्णीतस्योक्तसदानन्दयतिसमयस्य बहुभिरनङ्गीकारात्। यतो हि सदानन्दयतिः रघुनाथशिरोमणेरतिपश्चाद्वर्ती आसीत्। तस्मात् वेदान्तसारकर्तुः सदानन्दयतेः समयः सप्तदशशताब्द्येवासीत् न तु चतुर्दशशताब्दी पञ्चदशशताब्दी वा। अस्य मतस्य समर्थकाः डा० सुरेशचन्द्रश्रीवास्तवप्रभृतयः सन्ति। एभिराधारभूतैः प्रमाणैर्विज्ञानभिक्षुसमयस्यान्तिमोऽवधिः १६०० तमं ख्रीस्तवर्षमस्ति। अयमेव च समयः सर्वैः पौर्वात्यपाश्चात्यविद्वद्भिः सह संवादात् स्वीकर्तुमुचित इति मन्ये।

कृतयः

लेखसमृद्धेन विज्ञानभिक्षुणा निजायुषो दीर्घावधौ प्रायः षोडशग्रन्था निर्मिताः सांख्ये योगे वेदान्ते च। सांख्ये द्वावपि ग्रन्थौ प्रकाशितौ, १–सांख्यप्रवचनभाष्यम्, २–सांख्यसारश्च। योगे १—योगवार्तिकं योगसारसङ्ग्रहश्चेत्युभावपि प्रकाशितौ। वेदान्ते तु प्रकृतं ब्रह्ममीमांसाभाष्यं विज्ञानामृताख्यमृजुभाष्यापराभिधानं केवलं प्रकाशितं पूर्वं काश्यां चौखम्बास्थविद्याविलासमुद्रणालयतः। इतरे त्वेकादशवेदान्तग्रन्था अप्रकाशिता एव सन्ति। ते च ग्रन्थाः—१—ईश्वरगीताभाष्यम्, २—कठवल्ल्युपनिषदालोकः, ३—कैवल्योपनिषदालोकः, ४—मैत्रेय्युपनिषदालोकः, ५—माण्डूक्योपनिषदालोकः, ६—मुण्डकोपनिषदालोकः, ७—प्रश्नोपनिषदालोकः, ८—तैत्तिरीयोपनिषदालोकः, ९—श्वेताश्वतरोपनिषदालोकः, ( एते वेदान्तालोकनाम्नाप्यभिधीयन्ते ) १०—ब्रह्मादर्शः, ११—उपदेशरत्नमाला चेति। एतेऽमुद्रिता ग्रन्थाः पाण्डुलिपिरूपेण प्राप्यन्त इत्युदलेखि डा० सुरेशचन्द्रश्रीवास्तवेन तदीये प्रकाशिते शोधप्रबन्धग्रन्थे। यदि विज्ञानभिक्षोरेतेऽपि ग्रन्थाः कुतोऽपि प्रकाश्येरन्, तदा संस्कृतवाङ्मयस्य विशिष्ट उपकारो जायेत तदीयः सिद्धान्तश्च तैर्विशदः स्यादिति मन्ये।

**सिद्धान्तः**

सर्वाणि भारतीयास्तिकदर्शनानि वेदमूलकतया कतिपयांशेषु परस्परं समनुयन्त्यपि बहुषु मुख्यांशेष्वपि परस्परं विरुन्धानान्येव सन्ति, न तेषां कथञ्चित् समन्वयोऽस्तीति प्रायो रूढिः। एतद्वासनयैव सर्वाणि दर्शनानि विशेषतो न्यायवेदान्तमीमांसादर्शनानि परस्परखण्डनमण्डनसोपानान्यारुह्येदानीं चरमोत्कर्षभाञ्जि समवलोक्यन्ते। वैशेषिकदर्शनं न्यायसमानतन्त्रतया न्यायादविशेषमेव। स्वसिद्धान्तमात्रप्रतिपादनप्रवणेषु सांख्ययोगग्रन्थेषु न तादृशी खण्डनाद्यात्मिका बहुला प्रवृत्तिर्दृश्यते। सांख्यसूत्रेषु तु दृश्यमानापि खण्डनमण्डनप्रवृत्तिः सूत्राणामर्वाक्कालिकतयाऽर्वाचीनैवेति विपश्चितां विश्वासः। आचार्यविज्ञानभिक्षुस्तु मन्यते—सर्वाण्येव दर्शनानि तात्पर्यतः परस्परमविरोधीन्येव। यत्रांशे तु विरोधो दृश्यते, तत्र न तस्य तस्य दर्शनस्य तात्पर्यमिति दर्शनानामविरोधवाद एव परमार्थः विरोधवादस्तु न तेषां मुख्यः कल्प इति वस्तुगत्याऽविरोध एवेति। तदयं विज्ञानभिक्षोर्वेदान्तसिद्धान्तसारः—

प्रकृतिपुरुषातिरिक्तत्वेन ब्रह्मणोऽस्तित्वमस्ति, प्रकृतिपुरुषौ च ब्रह्मणोऽन्तर्लीनशक्तिरूपौ स्तः, कालोऽदृष्टादयश्चापि तस्यैव शक्तिरूपाः सन्ति। ब्रह्मास्तित्वे आगमत्वेन श्रुतिस्मृतयः, प्रत्यक्षत्वेन योगिप्रत्यक्षं, तथा अनुमानमिति प्रमाणत्रयमपि साधकमस्ति। ब्रह्म यद्यप्यतीन्द्रियं, तथापि योगिप्रत्यक्षविषयत्वं तस्मिन्नस्त्येव। अचिन्त्या खलु योगजधर्मस्य शक्तिरिति। एतन्मते ब्रह्मणि फलव्याप्यत्वमप्यस्ति न केवलं वृत्तिव्याप्यत्वमात्रम्। फलव्याप्यत्वाभावे श्रवणादिव्यवहारजातमसम्भवि स्यात्। अत एव ब्रह्म न स्वप्रकाशमपि वर्तते। स्वप्रकाशत्वे कर्मकर्तृविरोधापत्तेः। अतएवाखण्डत्वमपि ब्रह्मणो नास्ति। एतन्मते ब्रह्म चिन्मात्रमस्ति न त्वानन्दरूपमपि। आनन्दादयो वस्तुतः प्रधानस्य धर्माः सन्ति। स्थूलदृष्ट्योपासकेभ्यस्तु क्वचित् श्रुत्या प्रधानधर्मा अपि तदुपहितब्रह्मधर्मत्वेन प्रतिपादिताः। विज्ञानभिक्षुमते ईश्वरो विभुस्तदुपाधिर्मायापि विभुस्तयोः संयोगश्च नित्योऽस्ति। अतः सृष्टिस्थितिलयपरम्परा न कदापि विच्छिद्यते। ब्रह्मोपाधिभूता माया ब्रह्मशक्तिभूतायाः प्रकृतेर्भिन्नैवास्ति, माया अपरिणामिनी प्रकृतिश्च परिणामिनी वर्तते।

कार्योपाधिकं चैतन्यं जीवः। स चानेको, बन्धमोक्षादिव्यवस्थाया अन्यथानुपपत्तेः। जीवस्यानेकत्वे ब्रह्मभिन्नत्वेऽपि च नाद्वैतश्रुतिविरोधः, अद्वैतश्रुतेर्जातिपरत्वेन चित्सामान्याद्वैतपरत्वेन चोक्तविरोधाभावात्। वस्तुतस्तु अग्निस्फुलिङ्गवज्जीवब्रह्मणोरंशांशिभावसम्बन्धसत्त्वाद् भेदाभेदावेव तयोर्विज्ञानभिक्षुसम्मतौ। भेदाभेदावपि विभागाविभागरूपौ स्तोऽतो नात्र विरोधः। जीवस्यांशत्वं च सजातीयत्वे सति अविभागप्रतियोगित्वरूपमस्ति। स्वव्यापारे जीवोऽपि कर्ता भवति किन्तु तत्कर्तृत्वं बुद्धिकर्तृत्वौपाधिकं स्वतस्तु जीवोऽकर्तैव परमार्थतः।

यद्यपि प्रकृतिरेव जगदुपादानं तथापि प्रकृतेर्ब्रह्मान्तर्लीनशक्तिभूततया ब्रह्म सृष्ट्युपादानमुच्यते। ब्रह्मणो जगत्कर्तृत्वं स्वोपाधिमायोपाधिकमुपादानत्वञ्च प्रकृतित-

त्कार्यत्वौपाधिकमिष्यते। सृष्टिप्रक्रियाविषये आचार्यविज्ञानभिक्षुणा पञ्चीकरण-प्रक्रिया निराकृता स्वीकृता च त्रिवृत्प्रक्रिया। तत्रायं सृष्टिक्रमः—मायोपहितब्रह्मा-धिष्ठिताया ब्रह्मान्तर्लीनायास्तदीयशक्तिभूतायाः प्रकृतेः प्रथमं प्राणवृत्त्यात्मकक्रिया-शक्तिविशिष्टस्य अध्यवसायशक्तिविशिष्टस्य च महत्तत्त्वस्योत्पत्तिर्भवति। महतो-ऽहङ्कारो जायते। अहङ्कारात् मनःसहितानां सर्वेन्द्रियाणामिव परस्परकार्यकारणभा-वानापन्नानां पञ्चतन्मात्राणामुत्पत्तिर्भवति। तन्मात्राणि च सूक्ष्मतमभूतान्युच्यन्ते। तन्मात्रेभ्यश्च स्थूलमहाभूतानां हेतुभूताः सूक्ष्मपरमाणव उत्पद्यन्ते। एते च सूक्ष्म-भूतनाम्नाऽऽख्यायन्ते। तदनन्तरमाकाशादिक्रमेण महाभूतान्युत्पद्यन्ते। तत एव च ब्रह्माण्डान्तसृष्ट्युत्पत्तिर्भवतीति।

मतेऽस्मिन् ब्रह्म कूटस्थनित्यम्, जगत्प्रपञ्चश्च शाश्वतिकोऽपि न कूटस्थनित्यो न वा गन्धर्वनगरादिवत् प्रातिभासिकः, किन्तु परिणामिनित्यः। अस्य परिणामवादो न साक्षाद् ब्रह्मपरिणामवादः किन्तु ब्रह्मशक्तिप्रकृतिपरिणामवाद एव स्वीकृतोऽस्ति।

महदादिष्वव्यक्तलीनेषु सत्सु पुरुषस्य कैवल्याख्यो मोक्षो जायते। विकारवि-लयद्वारा चिन्मात्ररूपेण पुरुषस्यावस्थानमेव मोक्षः। विज्ञानभिक्षुरपि ज्ञानमेव मुख्यतया मुक्तिसाधनमङ्गीकरोति तथापि तत्त्वज्ञानानन्तरमसम्प्रज्ञातसमाधिसिद्धौ तु प्रारब्धमप्यतिक्रम्य झटिति मोक्षप्राप्तिर्भवतीति तन्मतविशेषः। एतन्मतानुसारेण ब्रह्मतत्त्वज्ञानवत् जीवतत्त्वज्ञानमपि मुक्तिसाधनं भवति, तथापि मुक्तौ ब्रह्मतत्त्वज्ञानं मुख्यकल्पत्वेन जीवतत्त्वज्ञानं चाधमकल्पत्वेन स्वीकरोत्याचार्यविज्ञानभिक्षुः। अस्य मतेऽधिकारिणामवस्थाभेदेन क्वचित् केवलं ज्ञानं, क्वचित् ज्ञानकर्मसमुच्चयः, क्वचिच्च ज्ञानपूर्वकं कर्मैव मुक्तिप्रयोजकमस्ति। अतः पक्षत्रयमपि स स्वीकरोति। मुक्तिं प्रति त्रिविधाधिकारिषु योगमारुरुक्षोः कृते कर्मैव मुख्यं साधनं, तत्त्वज्ञानन्तु तदङ्ग-भूतम्। युञ्जानस्य कृते ज्ञानकर्मसमुच्चयो मुक्तिसाधनौपयिकतां धत्ते। योगारूढावस्था-यान्तु ज्ञानमेव प्रधानरूपेण मुक्तिहेतुर्भवतीति। एवं सत्यपि तत्त्वज्ञानस्यैव प्रधान-साधनत्वं सोऽभिप्रैतीति संक्षेपः।

## कृतज्ञताज्ञापनम्

एतद्ग्रन्थस्य प्रकाशनकार्ये यैर्महानुभावैः साक्षात् परम्परया वा साहाय्यं विहितं तान् प्रति निजां कृतज्ञतां हृदयेन विनिवेदयामि। सर्वप्रथममस्मत्कुलपतीन् विज्ञान-विद्यावदातयशसो डा० श्रीहरिनारायणमहाभागान् प्रति कृतज्ञतां प्रकटयितुमहं स्वकर्तव्यं मन्ये, येषां विशेषावधानमादरबन्धश्च संस्कृतविद्यानां सर्वविधाभ्युन्नतय इदानीं प्राप्तौ स्तः। स्वसंकायप्रमुखान्, स्वविभागीयसमितिसदस्यानध्यापकान्, विश्वविद्यालयाधिकारिणश्च प्रति स्वकृतज्ञतां ज्ञापयामि, यैः समये समयेऽस्य दुष्प्राप्य-ग्रन्थस्य प्रकाशनावश्यकतामाकलय्य समर्थ्य च मदीय एतद्ग्रन्थप्रकाशनप्रस्तावः स्वीकृतोऽग्रेसारितश्च। विशेषतोऽहं भूतपूर्वस्वसंकायप्रमुखान् पण्डितप्रवरश्रीराजमोहनो-पाध्यायमहोदयान् प्रति निजकृतज्ञतां ज्ञापयितुमिच्छामि, येषां निदेशकत्वे स्वीकृतो

मया सम्पाद्यमानोऽयं ग्रन्थः प्रकाशितप्रायतामासाद्य मूर्तरूपतामलभत। वर्तमान-संकायप्रमुखानां साहित्यविद्यावाप्तप्रतिष्ठानां डा० श्रीरेवाप्रसादद्विवेदिमहोदयानामपि भृशं कृतज्ञोऽस्मि, यैरस्य प्रकाशनस्य प्राक्कथनलेखनेनाहमनुगृहीतो विहितः। भूत-पूर्वसंकायप्रमुखानां डा० श्रीसीतारामशास्त्रिमहोदयानामपि धन्यवादान् प्रकाशयामि, यदीयं सततमेव प्रोत्साहनं कार्येऽस्मिन् प्राप्तम्।

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयपुस्तकाध्यक्षान् डा० श्रीलक्ष्मीनारायण-तिवारीमहानुभावान् प्रत्यपि निजकृतज्ञभावविज्ञापनं न विस्मरामि, य एतद्ग्रन्थ-संशोधनपाठनिर्धारणादिकार्येषु परमोपयोगितामादधत्योः सरस्वतीभवनस्थयोः पूर्व-निर्दिष्टयोः पाण्डुलिप्योः प्रापणेन मम महत्साहाय्यमन्वतिष्ठन्। गोयनकासंस्कृतमहा-विद्यालयीयविश्वनाथपुस्तकालयाध्यक्षस्य श्रीदेवमणियाज्ञिकमहोदयस्याप्यहं कृतज्ञो-ऽस्मि, येनैतत्प्रकाशनोपयोगार्थं पाण्डुलिपिनिर्माणाय श्रीमुकुन्दशास्त्रिसम्पादितं ब्रह्म-सूत्रविज्ञानामृताख्यभाष्यं पूर्वमुद्रिततयाऽऽदर्शभूतं कतिपयमासानां कृते प्रदत्तम्।

प्रसङ्गेऽस्मिन् तान् निजशोधान्तेवासिनोऽपि शुभाशीर्भिर्योजयामि यैर्विवि-धापेक्षितसामग्रीसङ्कलनादिभिरत्र कार्ये सहयोगो दत्तः। संकायेऽस्मिन्नचिरमेव प्रका-शनाधीक्षकसहायकपदयोर्नियुक्तौ पण्डितश्रीजगदीशचतुर्वेदी श्रीकपिलदेवगिरिश्चापि नूनं धन्यवादार्हौ, याभ्यां ग्रन्थस्यास्य बाह्यसज्जाविधौ सहयोगप्रदानं कृतम्। प्रस्तुत-भाष्यकर्तुरैतिहासिकपरिचयप्रस्तुतौ येषां कृतयः सहायीकृतास्तेषु प्रामुख्येन श्रीमदुदय-वीरशास्त्रि-श्रीसुरेशचन्द्रश्रीवास्तवावपि मम धन्यवादार्हौ स्तः।

अन्ततः काशीहिन्दूविश्वविद्यालयमुद्रणालयाधिकारिणे श्रीभरतनारायणगुप्त-महाशयाय तत्सहयोगिकर्मचारिभ्यश्च धन्यवादप्रदानौचितीं नोपेक्षिष्ये, यैरविरललग्न-तया प्रयस्य ग्रन्थोऽयं सुरुचिपूर्णमुद्रणपूर्वकं चतुर्मासैरेवाध्येतृजनदृग्गोचरतामनायि।

पुनश्च विद्वद्भ्यो भूयो भूयो नमन् ममानवधानान्मुद्रणदोषाद् वा जातानां स्खलनानां क्षमार्थं परिमार्जनार्थञ्च तानभ्यर्थये इति शम्।

विदुषामाश्रवः

**केदारनाथत्रिपाठी**

काशी हिन्दू विश्वविद्यालयः

गुरुपूर्णिमा २०३६ वि० सं०

( ९-७-१९७९ )



## संकेतार्थाः

| | | |
|---|---|---|
| मु० पु० पा० | = | मुद्रितपुस्तकपाठः |
| अ० श्लो० | = | अध्यायः श्लोकः |
| मु० शा० टि० | = | मुकुन्दशास्त्रिटिप्पणी |
| अं०अ० श्लो० | = | अंशः, अध्यायः, श्लोकः |
| म० भा० मो० प० | = | महाभारतमोक्षपर्व |
| ह० लि० पु० पा० | = | हस्तलिखितपुस्तकपाठः |
| उ० ह० लि० पु० पा० | = | उभयहस्तलिखितपुस्तकपाठः |
| २ पु० ना० | = | द्वितीयपुस्तके नास्ति |
| १ पु० ना० | = | प्रथमपुस्तके नास्ति |
| मनु० | = | मनुस्मृतिः |
| कूर्म पु० | = | कूर्मपुराणम् |
| विष्णु पु० | = | विष्णुपुराणम् |



## ब्रह्मसूत्रविज्ञानामृतभाष्यस्य विषयानुक्रमणिका

### प्रथमाध्यायप्रथमपादः

| विषयः | पृष्ठम् |
|---|---|
| ब्रह्मशब्दप्रवृत्तिनिमित्तनिरूपणम् | १९ |
| जीवब्रह्मणोरखण्डत्वं जीवेऽपि ब्रह्मशब्दस्य मुख्यत्वञ्चेति मतखण्डनम् | २० |
| भेदश्रुतीनामनुवादमात्रत्वमभेदश्रुतीनामेव च सम्यग्ज्ञानपरत्वमिति मतखण्डनम् | २१ |
| भेदनिन्दावाक्यानां विभागलक्षणभेदनिन्दापरत्ववर्णनम् | २२ |
| बन्धमोक्षव्यवस्थानुपपत्त्यादिनाऽऽत्मनानात्वनिरूपणं प्रतिबिम्बवादखण्डनञ्च | ,, |
| अवच्छेदवादखण्डनम् | २३ |
| आत्मनानात्वे प्रसङ्गात् कापिलसूत्रपञ्चकस्य व्याख्याप्रदर्शनमात्मनानात्वोपसंहारश्च | २४ |
| जीवब्रह्मणोर्भेदाभेदाभ्यामंशांशिभावनिरूपणम् | २६ |
| जीवेषु निरवयवस्यापि ब्रह्मणो मुख्यांशत्वोपपादनम् | २७ |
| जीवब्रह्मणोरंशांशिभावोऽग्निस्फुलिङ्गपितापुत्रवद्देवेति निरूपणम् | ,, |
| अंशांशिनोरभेदप्रतिपादनस्य फलनिरूपणम् | २८ |
| अंशांशिभावज्ञानस्य ब्रह्मात्मज्ञानप्रयोजकत्वोपपादनम् | ,, |
| जीवेश्वरयोर्गौणमुख्यात्मत्वप्रतिपादनम् | २९ |
| अस्मद्द्वयपक्षे ब्रह्मात्मताज्ञानस्याविद्यानिवृत्तिमोक्षजनकत्वे द्वारवर्णनम् | ३० |
| "तत्त्वमसि" वाक्यस्य ब्रह्मात्मतापरत्वोपपादनम् | ,, |
| अत्राधुनिकमतेऽनुपपत्तिप्रदर्शनम् | ३१ |
| अभेदवाक्यानां तार्किकोक्तोपासनामात्रपरत्वनिरासः | ३२ |
| ब्रह्मशब्दार्थोपसंहारस्तत्र विशेषप्रतिपादनञ्च | ,, |
| चैतन्यं नात्मनो गुणः, किन्तु द्रव्यविशेष इत्युपपादनम् | ३३ |
| ब्रह्मण आनन्दरूपत्वखण्डनम् चैतन्यानन्दयोर्विरोधोपपादनञ्च | ,, |
| आनन्दरूपताबोधकवाक्यानां तात्पर्योपवर्णनम् | ३४ |
| मोक्षस्य सुखरूपत्वनिरासो दुःखनिवृत्तेरेव पुरुषार्थत्वोपपादनञ्च | ,, |
| भोगस्वरूपकथनं तस्यात्मनिष्ठत्वनिरूपणञ्च | ३५ |
| दुःखनिवृत्तेः पुरुषार्थत्वे आक्षेपस्तत्समाधानञ्च | ,, |
| ब्रह्ममीमांसासिद्धान्तानां संक्षेपकथनम् | ,, |
| सांख्यादिवेदान्तयोर्विषयभेदप्रदर्शनम् | ३६ |
| **शास्त्रयोनित्वात् [ सू० ३ ]** | |
| ब्रह्मणि शास्त्रयोनित्वोपपादनम् | ,, |
| ब्रह्मणि शास्त्रमूलकानुमानप्रत्यक्षप्रमाणगम्यत्वनिरूपणम् | ३७ |
| ब्रह्मसिद्धौ अनुमानप्रकारः | ,, |
| ब्रह्मणः शास्त्रादप्रमाणकत्वे आक्षेपस्तत्समाधानञ्च | ,, |
| शब्दस्याप्यशेषविशेषज्ञानजनकत्वसमर्थनम् | ,, |
| निर्विशेषचिन्मात्रस्यापि ब्रह्मणो विशेषोपपादनम् | ३८ |
| अतीन्द्रियस्यापि विशेषस्य योगिमनोगम्यत्वनिरूपणम् | ,, |

| विषयः | पृष्ठम् |
|---|---|

## प्रथमाध्यायतृतीयपादः

## द्वितीयाध्यायद्वितीयपादः

| विषयः | पृष्ठम् |
|---|---|

## द्वितीयाध्यायचतुर्थपादः

विषयः | पृष्ठम्



## तृतीयाध्यायप्रथमपादः

## तृतीयाध्यायद्वितीयपादः

## तृतीयाध्यायतृतीयपादः

विषयः पृष्ठम्

| विषयः | पृष्ठम् |
|---|---|

विषयः | पृष्ठम्

विषयः | पृष्ठम्

## चतुर्थाध्यायप्रथमपादः



## चतुर्थाध्यायद्वितीयपादः

## चतुर्थाध्यायतृतीयपादः

## चतुर्थाध्यायचतुर्थपादः

॥ इति ब्रह्मसूत्रविज्ञानामृतभाष्यस्य विषयानुक्रमणिका पूर्णा ॥

यद्यत् सिद्धान्तागमतर्केषु प्रब्रुवन्ति रागान्धाः ।
अनुमोदामस्तत् तत् तेषां सर्वात्मभावधिया ॥
सर्वाकारो भगवानुपास्यते येन येन भावेन ।
तं तं भावं भूत्वा चिन्तामणिवत् समभ्येति ॥

[ परामर्थसारः ]

श्रीगणेशाय नमः

श्रीसरस्वत्यै नमः

# ब्रह्मसूत्र-विज्ञानामृतभाष्यम्

## विज्ञानभिक्षुविरचितम्

सर्वत्र यो यत्र सर्वं यश्च सर्वमतो भवेत् ।
चिदचिच्छक्तये तस्मै नमश्चिन्मात्ररूपिणे ॥ १ ॥

अन्तर्यामिगुरूद्दिष्टज्ञानविज्ञानभिक्षुणा ।
ब्रह्मसूत्रऋजुव्याख्या क्रियते गुरुदक्षिणा ॥ २ ॥

श्रुतिस्मृतिन्यायवचःक्षीराब्धिमथनोद्धृतम् ।
ज्ञानामृतं गुरोः प्रीत्यै भूदेवेभ्यो नु दीयते ॥ ३ ॥

परिविषय्य सद्बुद्ध्या मोहिन्येवाथ दानवान् ।
कुतर्कान् वञ्चयित्वेदं पीयताममृतेप्सुभिः ॥ ४ ॥

पीत्वैतद् बलवन्तस्ते पाखण्डासुरयूथपान् ।
विजित्य ज्ञानकर्मभ्यां यान्तु श्रीमद्गुरोः पदम् ॥ ५ ॥

"ब्रह्मविदाप्नोति परम्, ब्रह्म वेद ब्रह्मैव भवति, तमेव विदित्वाति मृत्युमेति" इत्यादिश्रुतिसिद्धपरमपुरुषार्थसाधनताके ब्रह्मज्ञाने विधिः श्रूयते—"आत्मेत्येवोपासीत, स म आत्मेति विद्यात्, तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः" इत्यादिरूपः। तत्र किं ब्रह्म, किं वा तस्य ब्रह्मतानिर्वाहकं गुणजातम्, कीदृशं वा तस्य ज्ञानम, कीदृशं वा तस्य फलमित्यादिकं विशिष्य मुमुक्षूणां जिज्ञासितं भवति, श्रुतिष्वापाततोऽन्योन्यविरुद्धार्थतायाः शाखाभेदेन प्रतिभासनादिति। अतस्तन्निर्णयाय ब्रह्ममीमांसाशास्त्रमपेक्षितम्।

नन्व "थातो धर्मजिज्ञासे" त्यादिपूर्वमीमांसयैव ब्रह्मज्ञानरूपधर्मस्यापि मीमांसितत्वान्नास्ति पुनराकाङ्क्षा। ब्रह्मज्ञानस्य च धर्मत्वं चोदनालक्षणत्वात् सिद्धम् "अयं तु परमो धर्मो यद् योगेनात्मदर्शन" मित्यादिस्मृतेश्च। वक्ष्यति चाचार्यः सर्वासु वेदान्तविद्यासु चोदनां "सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषा" दिति सूत्रेण, तत्र कुतर्कजातस्य च पश्चान्निराकरिष्यमाणत्वादिति। मैवम्। सामान्यतो धर्मत्वादिना निरूपणेऽपि अशेषविशेषनिर्धारणार्थं कल्पसूत्रादिवद् ब्रह्ममीमांसाया अप्यपेक्षितत्वात्।

ननु तथापि "सत्यं ज्ञानमनन्तं ब्रह्म, विज्ञानमानन्दं ब्रह्मे" त्यादिश्रुतिसिद्धत्वाद् ब्रह्मस्वरूपे जिज्ञासा नोपपद्यत इति चेन्न, तदेव ज्ञानं किं सांख्ये सिद्धं

जीवचैतन्यं किं वा चैतन्यान्तरमित्येवंस्वरूपजिज्ञासासत्त्वादिति ! तदेवमाकाङ्क्षित-त्वाद् ब्रह्ममीमांसाशास्त्रस्यारम्भं प्रतिजानीते भगवान् वेदव्यासः—

अथातो ब्रह्मजिज्ञासा ॥ १ ॥

अत्राथशब्द उच्चारणमात्रेण मङ्गलरूपोऽधिकारवाचकः। अधिकारश्च प्रकरणं प्राधान्येन निरूपणमिति यावत्। अतो ब्रह्मशेषतयाऽन्येषामपि मीमांसनमर्थाक्षिप्तम्। तथा प्रत्यधिकरणं ब्रह्मशब्दाभावेऽपि प्रकरणितया ब्रह्मैव लब्धव्यमित्यादिकमथशब्दस्य प्रयोजनम्। अत इत्यत्रेदमा प्रकृतं सूत्रमुच्यते, पञ्चमी चावधौ, तथा च इदं सूत्र-मारभ्येत्यर्थः। अर्थज्ञानात् प्रागेव सूत्रस्योपस्थितत्वान्न तत्परामर्शानुपपत्तिः, वक्ष्य-माणस्यापीदमा परामर्शदर्शनात् उत्तरसूत्रमारभ्येत्यर्थस्त्वतिसमीचीनः। तथा च यथा ग्रन्थशेषे "नावृत्तिः शब्दादि" ति समग्रसूत्रद्विरावृत्तिः शास्त्रस्योत्तरावधि-सूचिका तथैवात इति शब्दोऽपि तत्पूर्वावधिवाचकः। एवं हि शास्त्रपूर्वापरान्तद्वया-वधारणे सति ग्रन्थमहावाक्यार्थबोधाय वाक्यान्तराकाङ्क्षया शिष्याणां विलम्बो भवतीत्याशयेन शास्त्रकृद्भिराद्यन्तावधी परिच्छिद्येते। अवश्यं चा 'थातः' शब्दयोर्य-थोक्तार्थतैव शास्त्रान्तरेष्वभ्युपेया, यथा "अथातो व्रतमीमांसे" त्यादिश्रुतौ,

'अथातो गोभिलोक्तानामन्येषां चैव कर्मणाम्।
अस्पष्टानां विधिं सम्यग् दर्शयिष्ये प्रदीपवत्॥[1]

इत्यादिस्मृतौ। न हि तत्राधिकारावधी विहाया 'थातः' शब्दयोरन्यार्थता सम्भवति।

ब्रह्मणो ब्रह्मशब्दार्थस्य जिज्ञासा ब्रह्मजिज्ञासा, अतो विशिष्य पूर्वं ब्रह्मज्ञाना-भावेऽपि शिष्याणां न सूत्रवाक्यार्थबोधासंभवः। ब्राह्मणवेदहिरण्यगर्भादिषु ब्रह्म-शब्दस्य गौणत्वेन न ब्रह्मशब्दार्थतेति वक्ष्यामः। जिज्ञासा चात्र विचारो मीमांसा-परनामकः, जिज्ञासाशब्दस्य मीमांसाशब्दवद् विचारे रूढत्वात्। अथातो धर्म-जिज्ञासेत्याद्यनेकशास्त्रेषु जिज्ञासां प्रतिज्ञाय विचारकरणदर्शनात्। श्रुतावपि ब्रह्म-ज्ञानेच्छयोपसन्नं शिष्यं प्रत्यपि "तद्विजिज्ञासस्व तद्ब्रह्मेति" पुनर्जिज्ञासोपदेशाच्च। अत एव "अजिज्ञासितसद्धर्मो गुरुं मुनिमुपव्रजेदि"त्यादिवाक्येषु विचार एव जिज्ञासा-शब्दः प्रयुज्यमानो दृश्यते, तत्रेच्छार्थकत्वासम्भवात्। तस्माद् योगेन रूढतया च प्रकरणभेदेन जिज्ञासाशब्दो विचारेच्छयोरुभयोरेव वाचक इति बोध्यम्। विचारश्च विवरणं निर्णयहेतुभूतं लिङ्गाद्यवधारणम्। निर्णयश्चोक्तो न्यायाचार्यैः—"विमृश्य पक्ष-प्रतिपक्षाभ्यामर्थावधारणं निर्णयः" इति। स च निर्णयो वेदान्तैरेवेति वक्ष्यति "शास्त्र-योनित्वादि" ति सूत्रेण। तथा चायं सूत्रार्थः— इदं सूत्रमारभ्य प्राधान्येन ब्रह्म-विचारः तच्छास्त्रमस्माभिः क्रियत इति। यदि च जिज्ञासाशब्देन तच्छास्त्रं न लक्ष्यते तदा आचार्येण पूर्वमेव ब्रह्मणो निर्णीतत्वाद् विचारप्रतिज्ञा नोपपद्यते नोपपद्यते च विचारं प्रतिज्ञाय सूत्रपरम्परारचनमिति।

---

[1] कात्यायनकृतकर्मप्रदीपस्थः प्रथमः श्लोकः।

आधुनिकास्तु प्रौढ्या सूत्रमिदमेवं व्याचक्षते—अधीतस्वाध्यायैर्विचारितकर्मकाण्डैरप्यकर्तृत्वादिरूपेणात्मनोऽनवधृतत्वात् तन्निर्धारणे चाविद्यानिवृत्त्या पुरुषार्थसिद्धेस्तन्निर्धारणायात्मनो ब्रह्मणो जिज्ञासा तदुपलक्षितो विचारः शिष्याणां कर्तव्यतया शास्त्रस्यादौ विधीयते "अथातो ब्रह्मजिज्ञासे"ति। अथशब्दो नित्यानित्यवस्तुविवेकेहामुत्रफलभोगविरागशमदमादिसंपन्मुमुक्षुत्वरूपसाधनचतुष्टयानन्तर्यमाह । अतःशब्दश्च वक्ष्यमाणहेतुवाचकः। ज्ञातुं साक्षात्कर्तुमिच्छा जिज्ञासा तद्धेतुको विचारः। तथा चायमर्थः—यस्मादग्निहोत्रादिकमनित्यफलकं ब्रह्मज्ञानं चानन्तफलकमतः सर्वकर्माणि संन्यस्य शमदमादिसाधनचतुष्टयसंपन्नेन विविदिषुणा ब्रह्मविचार. षड्विधलिङ्गैर्वेदान्ततात्पर्यावधारणरूपो ब्रह्मसाक्षात्काराय कर्तव्य इति। "तद्विजिज्ञासस्व तद्ब्रह्मे"ति श्रुतेः। लिङ्गानि च पूर्वाचार्यैरुक्तानि—

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये॥ इति।

तथा च विधिपरं सूत्रमिति वदन्ति।

तत्रेदमुच्यते—कथं पुनः सर्वतन्त्रसाधारणमपेक्षितं चोक्तार्थं हित्वा सामान्याभ्यामथातःशब्दाभ्यामेतादृशोऽर्थविशेषोऽवधारित इति। साधनाध्यायसूत्रेभ्य इति चेत्, अलमत्र तत्सूत्रणेन, एकाक्षरलाघवा ह्याचार्याः पुत्रोत्सवं मन्यन्ते। न वा साधनाध्याये सर्वकर्मत्यागं वा विचाराङ्गत्वेन शमदमादीन् वा विधास्यति, किन्तु विद्याया अकर्मशेषतया पुरुषार्थहेतुत्वं प्रतिज्ञाय तत्साधकत्वेन समाधिनिष्ठानां न्यायसिद्धं कामतः कर्मत्यागमनुवदति "उपमर्दं चेति" सूत्रेण। तथा विद्याप्रधाने संन्यासाश्रमे विधिं व्यवस्थापयिष्यति न सर्वकर्मत्यागे। तथा सम्प्रज्ञातयोगजब्रह्मसाक्षात्काररूपायामेव विद्यायां फलपर्यवसायिन्यां शमदमाद्यन्तरङ्गसाधनं वक्ष्यति "शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वादि" ति सूत्रेण। "तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा आत्मन्येवात्मानं पश्यती"त्यादिश्रुतौ संप्रज्ञातजसाक्षात्काराङ्गतयैव शमदमादिविधानात्। नारदीये नित्यानित्यविवेकादिसाधनचतुष्टयप्रतिपादनानन्तरम्—

चतुर्भिः साधनैरेतैर्विशुद्धमतिरच्युतम्।
सर्वगं भावयेद् विप्राः सर्वभूतदयापरः[1]॥

इति वाक्येन साधनचतुष्टयस्य ध्यानाङ्गताया एव लाभाच्च। तत्र च यदि अङ्गाङ्गतया बहिरङ्गैरग्नीन्धनादिभिः कर्माङ्गैर्विक्षेपात् शमादिर्न संभवति तदा अन्तरङ्गानुरोधेन बाह्याङ्गान्यग्नीन्धनादीनि नापेक्षणीयानीत्येव वक्ष्यति "अत एव चाग्नीन्धनाद्यनपेक्षे" ति सूत्रेण, न तु कर्मत्यागं तेनापि सूत्रेण विधास्यति। तथा सति "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्, सहकारित्वेन चे" त्युत्तरसूत्रविरोधात् "कर्मानपेक्षे" त्यस्यैव वक्तव्यतौचित्याच्च।

---

[1] परम् इति मु० पु० पाठः। बृहन्नारदीये अ० ३१ श्लो० ५४ इति मु० श्रा० टि०।

(मप्र) ...

नन्वेवमपि सूत्रद्वयोक्तयोरग्न्याद्यपेक्षानपेक्षयोर्विरोध एवेति चेन्न, संन्यासिनां बाह्याग्न्याद्यभावेऽपि स्वसमारोपितानां बाह्याग्न्यादीनामन्तरग्निहोत्रकालेऽपेक्षणीयत्वेनाऽविरोधात्। तथा च विष्णुपुराणे संन्यासप्रकरणे—

कृत्वाग्निहोत्रं स्वशरीरसंस्थं, शारीरमग्निं स्वमुखे जुहोति।
विप्रस्तु भैक्ष्योपचितैर्हविर्भिश्चिताग्निना स व्रजति स्वलोकान्[1] ॥ इति

मोक्षधर्मे च संन्यासप्रकरणे—

प्रादेशमात्रे हृदि निश्रितं यत् तस्मिन् प्राणानात्मयाजी जुहोति।
तस्याग्निहोत्रं हुतमात्मसंस्थं सर्वेषु लोकेषु सदैवतेषु ॥
उत्तान आस्येन हविर्जुहोति लोकस्य नाभिर्जगतः प्रतिष्ठा।
तस्याङ्गमङ्गानि कृताकृतं च वैश्वानरः सर्वमिदं प्रपेदे[2] ॥ इति

न्यायाचार्यैश्च "समारोपणादात्मन्यप्रतिषेध" इत्युक्तम्। अग्न्यादीनामात्मन्यारोपणात् कर्मणामप्रतिषेध इत्यर्थः। अत्र मोक्षधर्मवाक्ये अङ्गहानावप्यन्तर्यागो योगिनां न दुष्यतीत्युक्तम्।

एतेन संन्यासिनां सर्वकर्मत्यागोऽशास्त्रार्थः। तथा च श्रुतिरपि "अत ऊर्ध्वममन्त्रवदाचेरदि" ति तथा च श्रुत्यन्तरं "सन्धि समाधावात्मन्याचरेदि" ति च। आत्मनि स्वशरीरे समाधिमात्रेण देवैः सह सन्धि सन्ध्याख्यं कर्माचरेदित्यर्थः। सान्ध्यम् सन्ध्येति। परमात्मात्मनोरैकत्वे[3] विज्ञानेन तयोर्भेद एव विभग्नः। तथा मनौ—

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।
समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति ॥[4]

इत्यनेन ज्ञानस्यात्मयागेन सह समुच्चय उक्तः। आत्मयागश्च स्वशरीरस्थानामेव सर्वदेवानां स्वकीयस्नानाहारादिकालेषु स्वभागैरेव मन्त्रादिनैरपेक्ष्येण यजनम्।

एतानेके महायज्ञान् यज्ञशास्त्रविदो जनाः।
अनीहमानाः सततमिन्द्रियेष्वेव जुह्वति ॥
आत्मैव देवताः सर्वाः सर्वमात्मन्यवस्थितम्।
खं संनिवेशयेत् खेषु चेष्टनस्पर्शनेऽनिलम् ॥

इत्यादिमनुवाक्यान्तरात्। तस्य चात्मयागस्य मनोमात्रसाध्यत्वमाह वशिष्ठः वैदिकं कर्म प्रकृत्य—

बाह्यमाभ्यन्तरं चेति प्रत्येकं मुक्तिसाधनम्।
बाह्यं बहिः क्रियाभिश्च यत्तद् विहितसाधनैः ॥
आभ्यन्तरं तु मनसा विध्यनुष्ठानमात्मनि।
तयोरन्यतरत् कुर्यान्नित्यं कर्म यथाविधि ॥

---

[1] अं० ३ अ० ७ श्लो० ३०। [2] अ० २५४ श्लो० २७।

[3] "तथा च श्रुत्यन्तरं परमात्मात्मनोरैक्यत्वे विज्ञानेन तयोर्भेद एव विभग्नः सान्ध्यं सन्ध्येति" इति मु० पु० पाठाः विशृङ्खला इव भान्ति। [4] अ० १२ श्लो० ९१।

मोक्षधर्मे च —

शान्तियज्ञरतो नित्यं ब्रह्मयज्ञरतो मुनिः।
वाङ्मनः[1]काययज्ञैश्च भविष्याम्युरुगायन ॥ इति।

गौतमीयतन्त्रे च—

केवलं सततं श्रीमच्चरणाम्भोजभाजिनाम्।
संन्यासिनां मुमुक्षूणां मानसः कथितो विधिः ॥

इत्युक्तम्। केवलमित्यनेन बाह्यकर्मणामेव त्यागो लब्धः, मानसकर्मविधानात्। वसिष्ठेनात्मयागस्य प्रशंसा च कृता—

यष्टुमात्मन्यशक्तश्चेत् यजेद् बाह्येषु सर्वदा।
स्वयमुत्पन्नलिङ्गे वा स्थापिते वा विशेषतः ॥

इत्यात्मयागाशक्तावेव बाह्यस्यावश्यकत्वमित्यर्थः। एवं च सति संन्यासिनामप्यन्तरग्निहोत्रं गायत्र्यर्थब्रह्मात्मताध्यानरूपसंध्यादिकं वास्तीति न "यावज्जीवमग्निहोत्रं जुहोती" त्यादिश्रुतिविरोधः। तथा—

नियतस्य तु संन्यासः कर्मणो नोपपद्यते।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥
कर्मणां नियतानान्तु त्यागो नैव विधीयते।
तेषां कर्मफलत्यागः संन्यास इति चोच्यते ॥

इत्येवंविधवाक्यान्यपि संन्यासविधिना न विरुध्यन्त इति मन्तव्यम्। मोहादकर्तव्यताज्ञानात् कर्मत्यागस्य वैधत्वे तु तत्तच्छ्रुतिस्मृतयः संकुच्येरन्। असंकोचेनोपपत्तौ संकोचश्चान्याय्यो वैधस्य रात्रिश्राद्धस्येव प्रतिषेधानुपपत्तिश्च। प्राप्ताप्राप्तविकल्पप्रासात् पर्युदासाश्रयणे च "रात्रौ श्राद्धं न कुर्वीते" त्यादाविव कर्मत्यागवाक्येष्वपि लक्षणाभ्युपगमेन गौरवात्, कर्मत्यागवाक्यानाम् उपदर्शितविकल्पाद्यनुसारेण बाह्यकर्मत्यागपरत्वस्यैवौचित्याच्च। एतेन—

सर्वाणि भूतानि सुखे रमन्ते, सर्वाणि दुःखेषु तथोद्विजन्ति।
तेषां भयोत्पादनजातखेदः, कुर्यान्न कर्माणि हि जातवेदः[2] ॥

इत्यादीनि जातवेदानां विदुषां कर्मत्यागविधायकवाक्यानि बाह्यकर्मत्यागपराण्येवावगन्तव्यानि, "आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठ" इत्यादि श्रुतिभिरात्मारामस्यापि विदुषः कर्मावगमात्।

ज्ञानिनाऽज्ञानिना वापि यावद्देहस्य धारणम्।
तावद् वर्णाश्रमप्रोक्तं कर्तव्यं कर्म मुक्तये ॥
ज्ञानेनैव सहैतानि नित्यकर्माणि कुर्वतः।
निवृत्तफलतृष्णस्य मुक्तिस्तस्य करे स्थिता ॥

---

[1] कर्मयज्ञैश्चेति पुस्तकान्तरपाठः। अ० १७५ श्लोक ३२।

[2] म० भा० मो० प० अ० २४४ श्लोक २५।

इति वशिष्ठकौर्मादिस्मृतिभिर्विदुषोऽपि कर्मावश्यकत्वस्मरणाच्च। तथा कर्मत्याग-हेतोर्हिंसाविक्षेपादेरान्तरकर्मण्यसंभवाच्च। संन्यासिनां कर्माभावे स्वशरीरेऽग्न्यादीनां देवादीनां वारोपणस्य वैफल्यापत्तेश्च।

ननु भवतामप्यारोपणमदृष्टार्थमेवाग्न्यादीनां देहे सत्त्वादिति चेन्न, बाह्याग्नि-सूर्याद्याधारकोपासनापरित्यागजदोषपरीहारस्यैत्र बाह्याग्न्याद्यारोपफलत्वात्। एवं ह्यन्तरेव समष्टिव्यष्टिभेदेन सर्वदेवानां बाह्ययागोऽपि संपद्यत इति। एवमन्यान्यपि वाक्यानि "किमर्था वयं यक्ष्यामहे" "अग्निहोत्रं न जुहवाञ्चक्रिरे", "तस्मात् कर्म न कुर्वन्ति यतयः पारदर्शिनः। यदिदं वेदवचनं कुरु कर्म त्यजेति च॥" इत्येवमादीनि विदुषां हिंसाविशेषादिदोषदुष्टबाह्यकर्मत्यागविधायकान्येव, न त्वावश्यकभिक्षादाव-प्यन्तर्यागस्य नमस्कारजपादेर्वा प्रतिषेधकानि। कर्मत्यागस्य शमादिपालनाय "गुण-लोपो न गुणिन" इति न्यायेन दृष्टार्थकत्वात्। अत एव,

> ऋतुं प्राप्य यथा वृक्षः पत्रं त्यजति निस्पृहः।
> तत्त्वं प्राप्य तथा योगी त्यजेत् कर्मपरिग्रहम्॥

इत्यादिस्मृतिष्वपि कर्मपरिग्रहस्य कर्मोपकरणस्यैव त्यागोऽवगम्यते, अन्यथा त्यजेत् कर्म, इत्येव वक्तुमौचित्यात्। प्रणवजपे च शिखायज्ञोपवीताद्यभावेऽप्यधिकारोऽस्ति। तापनीये "अशिखा अयज्ञोपवीता" इति परमहंसं प्रकृत्य "प्रणवे एव पर्यवसिता" इति श्रवणात्। यत्तु—

> यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः।
> आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते॥
> न केवलेन योगेन प्राप्यते परमं पदम्।
> ज्ञानं तु केवलं सम्यगपवर्गफलप्रदम्॥

इति भगवद्गीताकूर्मयोर्वाक्यं तन्निष्पन्नसमाधियोगिपरम्, तेषां बाह्यसंवेदनाभावेन कर्मसामान्याभावेऽदोषात्। तदुक्तं गीतायाम्—

> सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
> अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥ इति।

तस्मात् स्वयमुद्भवन्समाधिं परित्यज्यान्तरमपि कर्म न कर्तव्यं प्रधानानुरोधेन गुण-त्यागस्य न्यायसिद्धत्वात्। अत एवानेकसंवत्सरं व्याप्यापि बाह्याभ्यन्तरसर्वकर्म-परित्यागेन समाधाववस्थानं परमर्षीणां श्रूयत इति। [1]तैरपि च व्युत्थानकाले यथाशक्ति भिक्षादावन्तर्यागादिः क्रियत एवेति।

> यत्तु— "यथोक्तान्यपि कर्माणि परिहाय द्विजोत्तमः।
> आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवान्॥"

---

[1] "तैरपि च" इत्येकस्मिन् ह० लि० पु० पाठः साधुः।
"तदपि च" इत्यन्यस्मिन् ह० लि० पु० पाठः असाधुः।

इति मनुवाक्यं तदशक्तपरं बोध्यम्। तत्र हि कर्मत्यागो न विधीयते किन्तु रोगाद्यशक्त्या कर्माभावे प्रसक्ते [1]विद्वानात्मज्ञानादितत्परो भवेदित्येव विधीयते।

केचित्तु—"लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ।
ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्॥"

इत्यादिवाक्येभ्यो विद्वदविद्वद्विषयभेदेन कर्मत्यागकर्मणो [2]र्व्यवस्थेति वदन्ति, तन्न, उत्पन्नज्ञानस्यापि कर्मविधिश्रवणेन ज्ञानयोगशब्दस्य समाधिवाचकत्वात्। तथा च एकाग्रतालक्षणज्ञानयोगेन समाध्याख्येन सांख्यानां विवेकाभ्यासिनां निष्ठा ज्ञाननिष्पत्तिः। कर्मयोगेन तु योगिनां योगाभ्यासिनां निष्ठा योगारूढता भवतीत्यर्थः। तथा चोक्तं गीतायामेव—

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते।
योगारूढस्य तस्यैव शमः कारणमुच्यते॥ इति।

नन्वेवं कर्मत्यागस्याविधेयत्वे "विधिर्वा धारणवत्" इति साधनाध्यायस्थसूत्रेण किं विधेयमुक्तमिति चेत्, संन्यासाश्रम इत्यवेहि। कः पुनरयं संन्यासशब्दार्थः? उच्यते, "आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद् गृहाद्" इति मन्वादिवाक्योक्तः स्वशरीरेऽग्न्याद्यारोपणपूर्वकः पुत्रगृहाद्यभिमानत्यागेन गृहात् प्रव्रजनरूप आश्रम इति। अपरश्च केवलकर्माभिमानकर्मफलत्यागादिः "कुर्यात् कर्मसंन्यासचिन्तनम्। काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः" इत्यादियाज्ञवल्क्यगीताद्युक्तो गौणसंन्यास एव। नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति" इति गीतावाक्येन कर्मफलसंन्यासफलस्य नैष्कर्म्यसिद्धिरूपस्य मन्वाद्युक्तसंन्यासाश्रमस्य पूर्वोक्तफलसंन्यासापेक्षया परमत्ववचनादिति। नैष्कर्म्यशब्दश्च अनुगीतादौ संन्यासविशेषवाची दृष्टो, यथा—

अभयं सर्वभूतेभ्यो दत्त्वा नैष्कर्म्यमाचरेत्।
सर्वभूतसमो मैत्रः सर्वेन्द्रिययतो मुनिः[3]॥

इति कर्माभिमानतत्फलत्यागयोश्च गौणसंन्यासत्वेऽपि मुख्यकल्पत्वं मन्तव्यम्। "तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते" इति गीतावाक्ये अभिमानफलत्यागपूर्वकस्य कर्मयोगस्यैव सर्वकर्मत्यागापेक्षया श्रेष्ठत्ववचनात्। समाधिप्रयुक्ताऽशक्त्या रोगदारिद्र्याद्यशक्त्या चैव हि बाह्यकर्मत्यागसिद्धिरिति। अत एव श्रुतिः "आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः" इति। अत एव जनकादिषु वसिष्ठादिषु च ज्ञानकर्मसमुच्चय एव दृश्यत इति। अधिकं तु साधनाध्याये वक्ष्यामः।

तस्मात् श्रवणार्थमविदुषां सर्वकर्मत्यागो बाह्यकर्मत्यागो वा शक्तानां न शास्त्रार्थः। आतुरस्य तु बाह्यकर्माशक्तस्यान्तरकर्मानुष्ठानपूर्वकं जाबालोक्तसंन्यासं नैव निराकुर्मः।

---

[1] "विद्वानात्म" इत्येकस्मिन् ह० लि० पु० पाठः असाधु।
विद्वासत्य इत्यन्यस्मिन् ह० लि० पु० पाठोऽप्यसाधुः।

[2] ह० लि० पु० व्यवस्थेति इत्येव पाठः, किन्त्वशुद्धः।

[3] अश्वमेधपर्व अ० ४५।

[1]प्रकर्तुमसमर्थश्चेज्जुहोति-यजतिक्रियाः ।
अन्धः पङ्गुर्दरिद्रो वा विरक्तः संन्यसेद् द्विजः[2] ।।

इति कूर्मवाक्यादिति ।

यत्र श्रौतोऽयं विविदिषूणामपि सर्वकर्मसंन्यासः "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमान्विताय येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्यामि" ति श्रुतेः । अत्र गुरुमेवेत्येवकारादिभिः सर्वकर्मत्यागावगमादिति । तत्र एवकारादगुरुभावेनोपगमव्यावृत्तेरेव लाभान्न तु कर्मव्यावृत्तेः । "क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठा स्वयं जुह्वन्त एकऋषिं श्रद्धयन्तः तेषामेवैतां ब्रह्मविद्यां वदेदि" ति वाक्यशेषे क्रियावतामेवोद्देश्यत्वविधानात् समित्पाणित्वलिङ्गेन होमावगमाच्च । समित्पाणिशब्दस्योपहारपाण्यर्थकत्वोपवर्णनन्तु स्वाज्ञानवर्णनमेव । नास्त्यकृतः कृतेनेत्यनेन च कर्मणां मोक्षसाधनत्वमेव निराकृतं, फलवत्सन्निधावफलस्यैवाङ्गत्वेन तस्य मोक्षासाधनत्वात्, न तु कर्मत्यागो विधीयत इति । प्रशान्तचित्तायेत्यनेनापि विद्याग्रहणोपयोग्येव प्रशम उक्तः न तु कर्मत्यागः, अर्जुनादिकर्मिभ्योऽपि ब्रह्मविद्योपदेशदर्शनादिति ।

तथा "न कर्मणा न प्रजया न धनेन" त्यादिश्रुतिरपि कर्मादीनामङ्गानामभावेऽपि एकेषां जडभरतादीनां मोक्षमेवानुवदति नतु कर्मत्यागं विदधाति । या च पुत्रैषणादित्यागश्रुतिः, साऽपि पुत्रादीच्छानामेव त्यागं विदधाति न तु कर्मणः ।

त्यज धर्ममधर्मञ्च उभे सत्यानृते त्यज ।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज ।।

इति श्रुतिश्च धर्मादेस्तत्त्यागहेतुविवेकख्यातेश्च रागद्वेषादित्यागं विदधाति । "एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च । कर्तव्यानी" त्यादिगीताद्येकवाक्यत्वात् । अन्यथा जीवतां धर्माधर्मादित्यागासंभवात्, मूत्रोत्सर्गादावप्यन्ततः पिपीलिकादीनां विनाशात्,

न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ।।

इति गीतावाक्यादिति ।

तस्मात् "विद्यां चाविद्यां च यस्तद्वेदोभयं सहे" त्यादिपरब्रह्मप्रकरणस्थवाक्यविरोधात् सर्वकर्माणि सन्न्यस्य श्रवणं कुर्यादित्याधुनिकानां विधिकल्पनं कुकल्पनमेवेति द्रष्टव्यम् । अतएव श्रवणानन्तरमेव मनुना संन्यासाश्रमो विहितः "वेदान्तान् विधि-

---

[1] प्रकर्तुमित्येव पाठ एकस्मिन ह० लि० पु० शुद्धः ।
अकर्तुम् इत्यन्यस्मिन् ह०लि०पु०पा०अशुद्धः । मु०पु० अपि 'अकर्तुम्' इत्येव पाठः ।

[2] कौर्मे अ० २ श्लोक १० ।

वत् श्रुत्वा संन्यसेदनृणो द्विज" इति। तस्मात् संन्यस्य श्रवणं कुर्यादित्यस्यायमेवार्थोऽज्ञस्याशक्त्या बाह्यकर्मत्यागरूपसंन्यासे सति श्रवणमवश्यं कर्तव्यमिति।

ज्ञानकर्मसमुच्चये चायं विशेषः "आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते। योगारूढस्य तस्यैव शमः कारणमुच्यते" इत्यादिवाक्यानुसारेणावगन्तव्यः—आरुरुक्षुत्वेनोत्सर्गतो ब्रह्मचारिगृहस्थयोः कर्माधिक्येनानुष्ठेयं ज्ञानं तु तदुपसर्जनम्, युञ्जमानस्य तथा च वानप्रस्थस्योभे एव समे समुच्चिते, योगारूढतया तु परिव्राजकस्य ज्ञानं प्रधानम् आन्तरं कर्म तदुपसर्जनमिति। एतेषु प्रकारेषूत्तरोत्तरमायासबाहुल्याद् हिंसादिदोषह्रासाच्च मोक्षाख्यफलेऽप्याश्वाशुतरादिरूपेण विशेषो मन्तव्यः।

जन्मान्तरैरभ्यसतो मुक्तिः पूर्वस्य जायते।
विनिष्पन्नसमाधिस्तु [1]मुक्तिम् तत्रैव जन्मनि॥

प्राप्नोतीति विष्णुपुराणादिति। पूर्वस्य पूर्वोक्तस्य युञ्जमानस्येत्यर्थः। यथोक्तव्यवस्थया च प्रत्येकप्राधान्यसमसमुच्चयबोधकवाक्यानां पूर्वोत्तरमीमांसयोश्चाविरोध इति। प्रत्येकप्राधान्यसमुच्चयवाक्यं च यथा मोक्षधर्मे—

ज्ञाननिष्ठां वदन्त्येके मोक्षशास्त्रविदो जनाः।
कर्मनिष्ठां वदन्त्यन्ये यतयः सूक्ष्मदर्शिनः॥
प्रहायोभयमप्येतज्ज्ञानं कर्म च केवलम्।
तृतीयेयं समाख्याता निष्ठा पञ्चशिखेन मे॥
तेनाहं सांख्यमुख्येन स्वदृष्टार्थेन तत्त्वतः।
श्रावितस्त्रिविधं मोक्षं न च राज्याद् विचालितः॥

इति जनकेनोक्तम्। तत्र कर्मप्राधान्यसमसमुच्चयज्ञानप्राधान्यानां फलरूपं त्रिविधं मोक्षं क्रमेणाह तत्त्वसमासाख्यसांख्यस्य भाष्ये पञ्चशिखाचार्यः—

आदौ तु मोक्षो ज्ञानेन द्वितीयो रागसंक्षयात्।
कृच्छ्रक्षयात्तृतीयस्तु व्याख्यातं मोक्षलक्षणम्॥

इति। कृच्छ्रक्षय आत्यन्तिकदुःखाभावः।

इदानीं समाधिरहितस्यापि विविदिषुतामात्रेण सर्वकर्मत्यागे परोक्तकुतर्का अपि परिह्रियन्ते—

ननु श्रुतिस्मृतीनां कर्मत्यागाविधायकत्वेऽपि ज्ञानिनामर्थादेव कर्मत्यागो लभ्यते ज्ञानकर्मणोरेकदा विरोधादिति, मैवम्, यदि ज्ञानशब्देन समाधिरुच्यते तदा एकदा विरोधेऽपि व्युत्थानदशायां भिक्षाटनात्मयागसंभवात्, कालाद्यङ्गहानावपि योगिनामदोषस्योक्तत्वात्। यदि पुनर्ज्ञानशब्देनानुभवमात्रमुच्यते तदा तेन सह कर्माभिमानस्यैव विरोधान्न तु कर्मणः। जडभरतादीनां भिक्षाटनादेर्भवतामप्यभ्युपगमात्,

---

[1] "मुक्तिस्" इति मु० पु० पाठः।

"कुर्याद् विद्वांस्तथाऽशक्तश्चिकीर्षुर्लोकसंग्रहमि" इत्यादिवाक्यैर्वैदिककर्मणामपि विदुषि विधानाच्च। न चाभिमानाद्यभावेन ज्ञानिनां कर्म निष्फलमेवेति तत्त्याग एवोचित इति वाच्यम्,

उत्सिदेयुरिमे लोका न कुर्यां कर्म चेदहम्।
सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः॥

इत्यादिवाक्यतो लोकविनाशनजप्रत्यवायानुत्पत्तेरेव फलत्वसिद्धेः। "योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये" इत्यादिवाक्यैः सत्त्वशुद्ध्याख्यपापक्षयहेतुतयैवाभिमानाख्यसङ्गशून्यकर्मणां साफल्याच्च। अन्यथा पापजन्यरोगादिना शरीरनाशादिभिर्ज्ञानपरिपाके [1]प्रारब्धाक्षयेनैव प्रतिबन्धसंभवात् "कृतनियमलङ्घनादानर्थक्यमिति" सांख्यसूत्रादिभ्य आनर्थक्यं ज्ञानस्येति प्रकृतत्वाल्लभ्यते।

नन्वविद्याया अदृष्टहेतुत्वादविद्यानिवृत्तौ पापोत्पत्तिरेव न सम्भवतीति कुतो मोक्षप्रतिबन्धशङ्केति चेन्न, ज्ञानिभ्योऽपि कर्मविधानाद् वृथाकर्मत्यागजपापातिरिक्तादृष्टेष्वेवाऽविद्याया हेतुत्वावधारणात्। अतएव "आप्रायणात् तथाहि दृष्टमि" ति सूत्रेण मरणपर्यन्तमेवानुभविनोऽपि विद्यावृत्तिं वक्ष्यति प्रतिबन्धनिरासार्थमिति। अतोऽपि चानिर्दिष्टकालविशेषाणां ज्ञानाङ्गकर्मणां ज्ञानकालिकतया मरणपर्यन्तता लभ्यत इति।

ननु अभिमानाभावेनात्मनि नियोज्यत्वप्रत्ययासम्भवाद् विदुषां विद्याकिंकरता न सम्भवतीति चेन्न, अभिमानाऽभावेऽप्युपाधौ नियोज्यत्वप्रत्ययसम्भवात्, अन्यथा भिक्षादावपि नियोज्यत्वप्रत्ययो न स्यात्।

स्यादेतत्, प्रवृत्तौ स्वीयसुखादिसाधनताज्ञानं कारणं, परसुखादिषु तत्साधने वा हानोपादानादर्शनात्। तथा च सुखादीनामनात्मधर्मतया तेषु स्वीयत्वज्ञानाऽसम्भवात् कथं तत्साधने कर्मादौ विदुषां प्रवृत्तिः स्यादिति ? उच्यते, सांख्यादिभिः स्वभोग्यत्वमेव धनादिष्विव सुखदुःखयोरपि स्वीयत्वमुच्यते, न तु नैयायिकादिवत् स्वसमवेतत्वम्। स्वभोग्यत्वं च स्वसाक्ष्यत्वम्। साक्ष्यत्वं चोपाधिवृत्तिविषयत्वं विना भास्यत्वमतो न योगिनां परमेश्वरस्य वा परसुखादिषु स्वीयत्वम्। एतेन ज्ञानिनां स्वकृतिसाध्यतादिज्ञानमप्युपपादितम्। स्वोपाधिकृतावपि साक्ष्यत्वरूपस्वीयत्वसंभवात्, संस्कारादौ धनादौ च स्वीयसुखादिसाधनत्वात् स्वीयत्वम्। नन्वेवं नाहं सुखीत्यादिविवेको नोपपद्येतेति चेत् न, समवायसम्बन्धेन अहं सुखीत्यादिप्रत्ययस्यैवाविद्यात्वेन समवायसम्बन्धावच्छिन्नतदभावप्रत्ययस्यैव विवेकशब्दार्थत्वात्, अविकारित्वेनैव शास्त्रेषु बुद्ध्यादिभ्य आत्मनो विवेचनाच्चेति। तस्माद् विदुषामपि स्वीयसुखादिसाधनताज्ञानं स्वोपाधिप्रवृत्तेर्हेतुः संभवत्येव।

---

[1]"प्रारब्धक्षयैव" इत्येकस्मिन् ह० लि० पु० पाठः अशुद्धो भाति।
"प्रारब्धक्षयेव" इत्यन्यस्मिन् ह० लि० पु० पाठः, अयमपि अशुद्धो भाति।
प्रारब्धाक्षयेनैव इति पाठः समीचनो भाति।

अथ तथापि आत्मतृप्ततया ज्ञानिनां सुखादाविच्छैव नास्तीति चेन्न, रागरूपाया अविद्याजन्येच्छाया एव ज्ञानिनां शास्त्रेषु प्रतिषेधात् "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग" इति न्यायसूत्रादिभिः, न तु लीलारूपादीच्छा प्रतिषिद्धा भिक्षादिदर्शनविरोधात । ननु तथापि देहेन्द्रियादिभिः सम्बन्धाभावाद् विदुषां कथं प्रवृत्तिः ? न ह्यसङ्गस्यात्मनो देहादिभिः सहाभिमानातिरिक्तः सम्बन्धः सम्भवतीति चेन्न, विदुषां ज्ञानोपपत्त्यर्थम् असङ्गवाक्यैर्लेपाख्यस्य विकारहेतुसंयोगस्यैव निषेधात् न तु पुष्करपत्रे जलस्येवासङ्गेऽपि चेतने स्वोपाधेः संयोगविशेषः प्रतिषिध्यते "आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" इति श्रुतेः । स च संयोगविशेषः प्रारब्धकर्मक्षयादेव नश्यतीति सर्वैरेवाभ्युपेयम् ; अन्यथा ज्ञानाद्यनुपपत्तेरिति ।

विषयैः प्रतिविम्बरूपस्य बन्धस्यापि च ज्ञानिसाधारण्याद् विषयभोगोऽपि ज्ञानिनामुपपन्नः । स्वप्रतिविम्बितस्योपाधिसुखस्य भानमेव भोग इति वक्ष्यमाणत्वात् ।

[ न च "सति मूले तद्विपाको जात्यायुर्भोगाः" इतिपातञ्जलसूत्रेण क्लेशसत्त्व एव कर्मविपाको भवतीति वचनात् कथं विदुषां भोगः स्यादिति वाच्यम् "क्लेशाभावे कर्मविपाकारम्भो[1] न भवती" ति तत्सूत्रभाष्यतो विपाकारम्भे क्लेशहेतुताया एव तत्सूत्रार्थत्वात्, ज्ञानिना च प्रारब्धविपाकमेव भुज्यत इति । ][2]

ये त्वभिमानमेव बुद्ध्यात्मनोः सम्बन्धं मन्यन्ते, तेषामेव ज्ञानेन सवासनाज्ञाननिवृत्त्या विदुषां भोगानुपपत्तिः । ज्ञानपरिपाकोत्तरमपि यावद्देहपातमविद्यालेशस्वीकारे च स लेशो न नश्येदेव, देहारम्भककर्मनाशस्य वासनानाशकत्वे प्रमाणाभावात्, अविदुषोऽपि पुनर्जन्मासम्भवाच्च । स्वयं विनाशे कदाचित् ज्ञानं विनाऽपि मुक्तिः स्यात् । अज्ञानज्ञानयोर्नाश्यनाशकभावे व्यभिचारप्रसङ्गाच्च । कार्यतावच्छेदकविशेषस्य च दुर्वचत्वात् ।

किञ्च बुद्ध्यात्मनोरध्यासरूपः सम्बन्धः किमहङ्करोमीत्यादिविशिष्टबुधिनियामकतया कल्प्यते ? किं वा बुद्धिप्रवृत्तिनियामकतया ? नाद्यः, अहङ्करोमीत्यादिप्रतीतेः सम्बन्धविधया स्वविषयत्वे कर्मकर्तृविरोधात्, स्वजनकत्वे तु आत्माश्रयात्, अधिकाधिकाङ्गीकारे चान्योन्याश्रयचक्रकानवस्थादिप्रसङ्गात्, अहं कर्तेत्यादि विशिष्टबुद्धिविवेकज्ञानाऽनाश्यत्वप्रसङ्गाच्च मिथ्याज्ञानरूपसम्बन्धस्य समवायादिवत् पारमार्थिकत्वादिति ।

न द्वितीयः, ईश्वरस्याज्ञानाभावेनोपाधिसम्बन्धाभावप्रसक्त्या तस्य विश्वनिर्मातृत्वानुपपतिः । ननु प्रपञ्चदर्शनानुपपत्त्येश्वरस्याप्यगत्या बाधितार्थाभिमान

---

१ "क्लेशाभावे कर्म विपाकारम्भि न भवति" इति उभय ह० लि० पु० पाठः साधुः प्रतिभाति ।

२ [ ] कोष्ठान्तर्गतः पाठः उभयस्मिन् ह० लि० पु० वर्तते पृ० २३ तथा २२ । कोष्ठान्तर्गतः पाठः २ पु० नास्तीति मु० शा० ।

आहार्यज्ञानरूपः कल्पनीय इति चेन्न, चेतने प्रतिबिम्बितस्यैव विषयभानहेतुताया वक्ष्यमाणत्वान्न त्वज्ञानस्य। अन्यथेश्वरस्य क्लेशकर्मादिशून्यताप्रतिपादकश्रुतिस्मृतिविरोधापत्तेः। नन्वेवमसत्प्रपञ्चाकारा वृत्तिरेवेश्वरोपाधावज्ञानं स्यादेवेति चेन्न, प्रपञ्चस्याऽत्यन्ततुच्छताया निराकरिष्यमाणत्वात्। तस्मात् किमर्थमभिमानस्य सम्बन्धत्वमिति न विद्मः।

अत आत्मानात्मनोः परस्परप्रतिबिम्बो ज्ञाननियामकः सम्बन्धः। बुद्धेः प्रवृत्तिहेतुस्तु पद्मपत्रजलयोरिव संयोगविशेषः सम्बन्धः,

यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान्।
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय॥

इत्यादिवाक्यैर्लेपसङ्गादिनियामकस्य स्वाश्रयविकारहेतोः संयोगविशेषस्यैव प्रतिषेधावगमादिति। [1]आत्मानात्मनोरभेदबुद्धिस्तु भ्रम एवेति न तदर्थं सम्बन्धापेक्षेति।

स्यादेतत्, ज्ञानेन शुक्तिरजतवत् प्रपञ्चस्य बाधे किंगोचरा किमर्था वा प्रवृत्तिः स्यात्? न हि सुप्तोत्थितस्य स्वप्नविषयगोचरा प्रवृत्तिर्दृश्यते। तस्मादविद्यावद्विषयाण्येव सर्वाणि प्रमाणानि शास्त्राणि प्रवृत्तिनिवृत्त्यादयश्चेति। अत्रोच्यते—ईश्वरस्य ज्ञानिनां च प्रवृत्तिभोगादिश्रवणादेव शुक्तिरजतादिविलक्षणव्यावहारिकसत्ता कार्याणामभ्युपगम्यते—

"सद्भाव एषो भवते मयोक्तो, ज्ञानं यथा सत्यमसत्यमन्यत्।
एतच्च यत् संव्यवहारभूतं, तत्रापि चोक्तं भुवनाश्रितं ते[2]॥"

इति विष्णुपुराणादिषु। सदसद्रूपत्वमेव च व्यावहारिकसत्त्वं प्रकृतितत्कार्यसाधारणम्। एकधर्मेण सत्तादशायामपि विकारिपदार्थानां धर्मान्तरेण सदैवासत्तानियमात्। कूटस्थनित्यस्य चात्मनो नास्ति धर्मतोऽप्यसत्त्वमिति स एव परमार्थसन्निति शास्त्रमर्यादा। तथा चोक्ताऽसत्तावधारणमेव बाधः, स च न प्रवृत्त्यादिविरोधी, तस्य विवेकवैराग्यमात्रहेतुत्वादिति।

"वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि" त्यादिश्रुतिरपि दृष्टान्तमुखेनेदृशे एव सत्त्वासत्त्वे ब्रह्मविकारयोः प्रतिपादयति। तस्याश्चायमर्थः—यतः प्रलये च ब्रह्मणि सर्वं विकारजातमव्याकृतरूपामसत्तां गच्छति, अतो वाचा कार्यो नाममात्रशेषश्चेत्यसत्यो भङ्गुरो विकारः, कारणं ब्रह्मैव सत्यं नित्यमिति। अतीतानागतावस्थयोः कार्याणां नाममात्रेणावशेषता तु "नामैवैनं न जहाती" ति श्रवणात्। ननु[3] (न तु) नामधेयशब्दस्यात्यन्ततुच्छत्वमर्थः मृद्विकारस्य[4] तुच्छता (अतुच्छतायाः)

---

[1] अयंपाठः २ पु० ना० इति मु० शा०।
[2] अं० २ अ० १२ श्लो० ४५।
[3] "ननु" इत्युभयत्र ह० लि० पुस्तकयोः मुद्रितपुस्तके च पाठोऽसाधुर्भाति। कोष्ठान्तर्गतौ पाठौ युक्तौ।
[4] "मृद्विकाराणामतुच्छतायाः" इत्येकस्मिन् ह० लि० पु० पा० साधुः भाति।

शतशः साधितत्वेन दृष्टान्तत्वासंभवात् पक्षसमत्वात्। "अपागादग्नेरग्नित्वम्" इति वाक्यशेषे विनाशमात्रश्रवणाच्चेति स्वयमूह्यम्।

"सत्ता सर्वपदार्थानां नान्या संवेदनादृते" "भूतं च सिद्धं च परेण यद्यत्तदेव तत्स्यादिति मे मनीषा" इत्यादिवाक्यानि चानुभवकारणाभ्यां विभागेनानुभूयमान-कार्ययोरसत्त्वमेव बोधयन्ति न तु तयोरत्यन्तासत्त्वमेव, तथा सति ते न स्त इत्येवो-च्येत न तु ताभ्यां सह तयोरभेद इति, सदसतोरभेदायोगात्। एवमेवान्या अप्येवं-विधाः श्रुतिस्मृतयो व्याख्येया इति।

अपि च भवतु ज्ञानकर्मणोर्यथाकथञ्चिद् विरोधस्तथापि विविदिषूणां सर्वकर्म-त्यागोऽनुचित एव। विचारेण सह कर्मणां विरोधस्य भवतामप्यनभ्युपगमात्, तदानी-मभिमानस्य सत्त्वात्। प्रत्युतानुत्पन्नज्ञानस्य सत्यां शक्तौ देवताराधनरूपबाह्याभ्यन्तर-सर्वकर्मत्यागे ज्ञानमेव नोत्पद्येत देवकृतविघ्नसम्भवात्, "तदेतद्देवानां न प्रियं यदेत-न्मनुष्या विद्युरि" ति श्रुतेः।

ननु "विविदिषन्ति यज्ञेन दानेने" त्यादिवाक्याज्जिज्ञासाद्वारैव ज्ञाने कर्मणा-मुपयोग इति जिज्ञासानन्तरमेव तत्त्याज्यमिति चेन्न, तेन वाक्येन यज्ञादीनां ज्ञान-साधनत्वस्यैवावगमात् नत्विच्छासाधनत्वस्य, सर्वत्रैव नामधातुस्थले मूलधात्वर्थेन सहैव कारकाणामन्वयव्युत्पत्तेः। अन्यथा रथेन जिगमिषतीत्यादौ रथादीनामिच्छा-साधनत्वप्रतीतिप्रसङ्गात्, न चैवं संभवति।

न च, "कषायपक्तिः कर्माणि ज्ञानं च परमा गतिः।
कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते॥[1]
पापक्षयाच्छुद्धमतिर्वाञ्छति ज्ञानमुत्तमम्॥"

इत्यादिवाक्येभ्यो वैराग्यजिज्ञासाद्वारैव कर्मणां ज्ञानाङ्गत्वमवसीयत इति वाच्यम्, तथाविधवाक्यानां वैराग्यजिज्ञासाद्वारपरत्वेऽपि द्वारान्तराप्रतिषेधकत्वात्।

कर्मणा सहिताज्ज्ञानात् सम्यग्योगोऽभिजायते।
ज्ञानं च कर्म सहितं जायते दोषवर्जितम्॥[2]

इति कौर्मादिवाक्यैर्जिज्ञासोत्तरं जातेऽपि ज्ञाने सम्यग्योगाख्यसम्प्रज्ञातसमाधौ ज्ञाननिर्दोषत्वे च ज्ञानाभ्याससहभावेन कर्मोपयोगश्रवणात्। दोषाः रागद्वेषमोहाः पापानि च। तथा,

ज्ञानमुत्पद्यते पुंसः क्षयात् पापस्य कर्मणः।
यथादर्शतलप्रख्ये पश्यत्यात्मानमात्मनि॥[3]

इत्यादिवाक्यैर्ज्ञानप्रतिबन्धकपापक्षयद्वाराऽपि कर्मणां ज्ञानहेतुत्वं बोध्यते। तथा

---

[1] म० भा० मो० प० अ० २६४। रसज्ञाने च तिष्ठतीति पाठः भारते दृश्यते इति० मु० शा० टि०। [2] अ० ३ श्लो० २३।

[3] म० भा० मो० प० अ० २०४ श्लो० ८।

"कर्माणीश्वरतुष्ट्यर्थं कुर्यान्नैष्कर्म्यमाप्नुयादि" ति वसिष्ठवाक्यान्नैष्कर्म्याख्यसमाधि-हेतुत्वमीश्वरप्रीतिद्वाराऽपि कर्मणः सिद्धम्[1]।

एवं ज्ञानसमुच्चयवाक्येभ्यो मोक्षप्रतिबन्धकपापक्षयद्वारा मोक्षहेतुत्वमपि कर्मणामनुमेयम्, अन्यथा "सहकारित्वेन च, अग्निहोत्रादि तु तत्कार्यायैव" इति वक्ष्यमाणसूत्रद्वयविरोधात्। तथा च जिज्ञासामात्रेण न कर्मत्यागः, जिज्ञासोत्तरमपि ज्ञाने योगे मोक्षे च प्रतिबन्धकसम्भवादिति। "जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते" इति वाक्यं च परम्परया विधिकिंकरत्वाभावं फलं बोधयति "अनेकजन्मसंसिद्धस्ततो याति परां गतिमि" ति वाक्यशेषात्, ननु (न[2] तु) योगजिज्ञासामात्रेण कर्मत्यागम्। "सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यत" इति च कर्मणां ज्ञानाङ्गत्वं बोधयति। "अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भवे" ति वाक्यं चाऽभ्यासाऽसमर्थस्य केवलं कर्म विदधाति परमशब्दादिति। तस्मात् सर्वकर्माणि संन्यस्य श्रवणं कुर्यादित्यपसिद्धान्तः कल्कित एव—

पुंसां जटाधरणमौढ्यवतां वृथैव
मोघाशिनामखिलशौचबहिष्कृतानाम्।
पिण्डप्रदानपितृतोयविवर्जितानां
सम्भाषणादपि नरा नरकं प्रयान्ति[3]॥

इति विष्णुपुराणात्। वृथा समाधिरोगाद्यशक्तिं विनैवेत्यर्थः। तथा—

यस्तु विद्याभिमानेन वेदमार्गप्रवर्तनम्।
छलजात्यादिभिर्जह्यात् स महापातकी भवेत्॥
श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्तते।
आज्ञाछेदी ममद्वेषी मद्भक्तोऽपि न मे प्रियः॥
दुःखमित्येव यत्कर्म कायक्लेशभयात् त्यजेत्।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत्॥

इत्यादिस्मृतेश्चेत्यवधेयम्।

यच्चान्यैरुक्तम्—विचारविधिपरमिदं सूत्रमिति, तदपि मन्दम्, श्रुतावेव "तद्विजिज्ञासस्व, आत्मा वा अरे श्रोतव्यः" इति विचारे निःसन्दिग्धविधिसत्त्वेन तत्र सूत्रवैफल्यात्, शास्त्रादावभिधेयाप्रतिज्ञायामुन्मत्तप्रलापवदुपेक्षणीयतापत्तेः, सर्वशास्त्रदृष्टप्रतिज्ञापरत्वसम्भवे तत्त्यागानौचित्याच्च। अत एव पूर्वपक्षसूत्रवदस्य शिष्यप्रश्नसूत्रत्वमपि नोचितम्, अभ्यर्हिताया ग्रन्थारम्भप्रतिज्ञाया एव संभवादिति।

ननु यदि शमदमादिसंपन्नः सर्वकर्मसंन्यासी नात्राधिकारी तदाऽस्या ब्रह्ममीमांसायाः कीदृशोऽधिकारीति वक्तव्यम्। उच्यते—शास्त्रार्थग्रहणोपयोगिशमादियुक्तो

---

[1] सिद्धेः इति मु० पु० पाठोऽसाधुर्भाति।

[2] ननु इति मु० पु० पा० असम्यग् भाति।
"न तु" इत्युभयत्र ह० लि० पु पाठः साधुः।

[3] अं० ३ अ० १८ श्लो० १०३।

गुरुभक्तिनित्यकर्मतपआदिसम्पन्नो जिज्ञासुः कर्मफलविरक्त इति। "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायादि" त्याद्युक्तश्रुतेः,

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥ इत्यादिश्रुतेश्च।

इदं ते नातपस्काय नाभक्ताय कदाचन।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति॥

इत्यादिस्मृतेश्चेति। शास्त्रोक्तविद्याभ्यासे पुनरधिकारी योगशास्त्रोक्तयोगाङ्गादिसम्पन्नः श्रवणमननाभ्यां कोमलकण्टकन्यायेनोत्पन्नज्ञानो नारदीयोक्तनित्यानित्यविवेकादिसाधनचतुष्कवान् "शान्तो दान्त उपरत" इत्याद्युक्तश्रुतेः। तत्र चोपरतिर्योगविरोधिकर्मभ्य उपरम इति। तत्रापि मन्दाधिकारी गृहस्थादित्रिदण्डिपर्यन्तः। उत्तमाधिकारी च परमहंसः,

चतुर्विधा भिक्षवः स्युः कुटीचकवहूदकौ।
हंसः परमहंसश्च श्रेयांश्चैषां यथोत्तरम्॥
आत्मनिष्ठः स्वसंसक्तः त्यक्तसर्वपरिग्रहः।
चतुर्थोऽयं महानेषां ध्यानभिक्षुरुदाहृतः॥

इति विष्णुधर्मसंहितादिवाक्यात्। परमश्चासौ हंसश्चेति परमहंसः परमात्मा "यमाहुः परमहंसमि" ति स्मृतेः। तन्निष्ठत्वाद् यतिरपि परमहंस उच्यते। हंसशब्दश्चात्मवाची—

सकारेण बहिर्याति हकारेण विशेत् पुनः।
हंस हंसेति वै मन्त्रं जीवो जपति सर्वदा॥

इतिस्मरणात्। हंसाश्रमस्तु केवलजीवोपयोगीति विवेकः। ते त्वाद्यास्त्रिदण्डिविशेषास्तेषां लिङ्गानि धर्माश्च तत्रैव विष्णुधर्मसंहितायामुक्ता विस्तरभयान्न लिख्यन्ते।

तत्र विविदिषुसंन्यास आद्ययोरेव तयोस्तपःप्रधानत्वात् "तपसा ब्रह्म विजिज्ञासस्वे" ति श्रुतेः। मनौ—

वेदसंन्यासिकानान्तु कर्मयोगं निबोधत।[1]
संन्यस्य सर्वकर्माणि कर्मदोषानपानुदत्।
नियतो वेदमभ्यस्य पुत्रैश्वर्ये सुखं वसेत्॥[2]

इत्यादीनां वेदसंन्यासस्यापि स्मरणाच्च। विद्वत्संन्यासस्त्वन्त्ययोः जीवपरमात्मनिष्ठताभेदेनेत्यपि विवेक्तव्यम्।

[3]भौतिकी भावना पूर्वे सांख्ये त्वक्षरभावना।
तृतीये चान्तिमा प्रोक्ता भावना पारमेश्वरी॥

इत्यादिना कौर्मे त्रिविधयोगिकथनात्। वैश्वानरादिभावना भौतिकी, सा चाद्ययोः

[1] मनु० अ० ६ श्लो० ८६।

[2] मनु० अ० ६ श्लो० ९६।

[3] प्रथमा भावना पूर्वे इति पाठः कूर्मपुराणे दृश्यते। अ० २ श्लो० ८६।

संन्यासिनोरिति। तत्र परमहंसा जाबालश्रुतौ परिगणिताः "तत्र परमहंसा नाम संवर्तकारुणिश्वेतकेतुदुर्वासऋभुनिदाघजडभरतदत्तात्रेयरैवतकप्रभृतय" इति।

ननु भरतस्य यज्ञोपवीतश्रवणादस्य कथं परमहंसत्वम्?

त्रिदण्डं कुण्डिकां चैव सूत्रं चापि कपालिकाम्।
जन्तूनां वारणं वस्त्रं सर्वं भिक्षुरिदं त्यजेत्॥

इति परमहंसप्रकरणस्थविष्णुधर्मवाक्यादिति। [न[1]]

आत्मन्येवात्मना बुद्ध्या न्यस्तसर्वपरिग्रहः।
अव्यक्तलिङ्गोऽव्यक्तश्च चरेद् भिक्षुः समाहितः॥

इति विष्णुधर्मवाक्योक्ताव्यक्तलिङ्गतासम्पादनाय मनसा यज्ञोपवीतादीनामात्मन्यारोपणेऽपि सूत्राभासधारणसंभवादिति।

तस्मात् सूत्रस्य विपरीतार्थकल्पनया सर्वकर्मत्यागे शिष्यो न प्रवर्तनीयः। किन्तु मुमुक्षवे ज्ञानमुपदिश्य कर्मार्थं समाधिभङ्गो न कर्तव्यो "गुणलोपो न गुणिन" इति न्यायात्, जडभरतादिशिष्टाचाराच्चेत्येवोपदेश्यम्। समाध्याविर्भावे च कर्मत्यागस्तदविरोधेन स्वयमेव क्रमेण भवति "एतद्ध स्म वै तद्विद्वांस आहुः ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामह" इति श्रुतेः,

न कर्माणि त्यजेद्योगी कर्मभिस्त्यज्यते ह्यसौ।
विदिते परतत्त्वे तु समस्तैर्नियमैरलम्॥
तालवृन्तेन किं कार्यं लब्धे मलयमारुते।
ज्ञानामृतरसो येन सकृदास्वादितो भवेत्॥
स सर्वकार्यमुत्सृज्य तत्रैव परिधावति। इत्यादि स्मृतेश्चेति।

यच्चान्यत् परैरुच्यते—अस्य शास्त्रस्य जीवब्रह्मैक्यं विषयः, तज्ज्ञानस्य च न कर्मशेषत्वमिति तदपि न, अस्य शास्त्रस्य जीवब्रह्मैक्यविषयत्वे लिङ्गाद्यभावात्; "ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितै" रिति गीतावाक्येन सूत्राणां ब्रह्मविषयतामात्रावगमात्, तथा सत्य "थातो जीवब्रह्मैक्यजिज्ञासे" त्येव सूत्रणौचित्याच्च। शास्त्रमहावाक्यार्थं परित्यज्य तदेकदेशप्रतिज्ञानौचित्यात्। ब्रह्मसूत्ररूपैरधिकरणैर्युक्तिमद्भिरसंदिग्धैर्गीतमित्यर्थः। जीवनिरूपणं चात्र ब्रह्मशेषतयैव प्राणादिनिरूपणवदिति जीवप्रकरणे वक्ष्यामः।

यद्यपि ब्रह्मात्मतैवात्र शास्त्रमहावाक्यार्थः, तथापि ब्रह्मत्वेनैवात्मत्वमाक्षिप्तमित्याशयः। "बृहत्त्वाद् बृंहणत्वाच्च आत्मा ब्रह्मेति गीयत" इति स्मृत्यादिभिरात्मब्रह्मशब्दयोरर्थैक्यं वा। अतोऽस्मन्मते सूत्रन्यूनता न शङ्कनीयेति। यश्चास्य विषयो ब्रह्म तज्ज्ञानस्य कर्मशेषत्वमप्यस्त्येव,

ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा॥

इत्यादिवाक्येभ्य इति दिक्।

---

[1] अयं पाठः मु० पु० त्रुटितो भाति।

सपरिकरं ब्रह्म विचार्यमित्युद्दिष्टं, तत्र ब्रह्मलक्षणं ब्रह्मशब्दप्रवृत्तिनिमित्तञ्च प्रकृतिपुरुषादिव्यावृत्तमाह—

## जन्माद्यस्य यतः ॥ २ ॥

अस्य जगतो नामरूपाभ्यां व्याकृतस्य चेतनाचेतनरूपस्य प्रतिनियतदेशकालसंस्थानव्यापारादिमतोऽचिन्त्यरचनात्मकस्य जायतेऽस्ति वर्धते विपरिणमतेऽपक्षीयते विनश्यतीत्येवंरूपं जन्मादिषट्कं यतः परमेश्वरादन्तर्लीनप्रकृतिपुरुषाद्यखिलशक्तिकात् स्वतश्चिन्मात्राद् विशुद्धसत्त्वाख्यमायोपाधिकात् क्लेशकर्मविपाकाशयैरपरामृष्टाच्चेतनविशेषाद् भवति, आकाशादिव महावायुर्महाजलादिव च पृथिवी, पृथिव्या इव च स्थावरजङ्गमादिकं, तद् ब्रह्मेति वाक्यशेषः। अत्र च 'एतद्यत' इत्यनुक्त्वा 'जन्माद्यस्य यत' इति वचनादव्यक्तरूपेण जगन्नित्यमेवेत्याचार्याशयोऽवगन्तव्यः। यत इति पञ्चमी चात्राधिष्ठानकारणत्वे। महदाद्यखिलजगदधिष्ठानकारणत्वं च ब्रह्मण एव "आधारमानन्दमखण्डबोधं यस्मिन् लयं याति पुरत्रयं च, एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चे" त्यादिश्रुतेरिति न, (न) प्रकृतिपुरुषादिष्वतिव्याप्तेः[1] (तिव्याप्तिः)।

किं पुनरधिष्ठानकारणत्वम्? उच्यते—तदेवाधिष्ठानकारणं यत्राविभक्तं येनोपष्टब्धं च सदुपादानकारणं कार्याकारेण परिणमते। यथा सर्गादौ जलाविभक्ताः पार्थिवसूक्ष्मांशास्तन्मात्राख्याः जलेनैवोपष्टम्भात् पृथिव्याकारेण परिणमन्त इत्यतो जलं महापृथिव्या अधिष्ठानकारणमिति। तथा च स्मर्यते—

> यस्य यत् कारणं प्रोक्तं तस्य साक्षान्महेश्वरः।
> अधिष्ठानतया स्थित्वा सदैवोपकरोति हि॥ इति।

तथा चैतादृशकारणत्वमेवाधिष्ठानकारणत्वमिति मूलकारणत्वमिति चोच्यते। ब्रह्मणश्च स्वाविभक्तप्रकृत्याद्युपष्टम्भकत्वं साक्षितामात्रेणेति जगत्कारणत्वेऽपि न ब्रह्मणो विकारित्वं न वा प्रकृतिपुरुषादिष्वतिप्रसङ्गः, सर्गात् पूर्वमन्येषां साक्षित्वासम्भवात्। अतएवाविकारिचिन्मात्रत्वेऽपि ब्रह्मणो जगदुपादानत्वं जगदभेदश्चोपपद्यते। विकारिकारणवदधिष्ठानकारणस्याप्युपादानत्वव्यवहारात्। [2]कार्याविभागाधारत्वस्यैवोपादानसामान्यलक्षणत्वात्। अविभागश्चाधारतावत् स्वरूपसम्बन्धविशेषोऽत्यन्तसंमिश्रणरूपो दुग्धजलाद्येकताप्रत्ययनियामकः। तत्र समवायसम्बन्धेन यत्राविभागस्तद्विकारिकारणम्[2]। यत्र च कार्यस्य कारणाविभागेनाविभागस्तदधिष्ठानकारणम्, यथा जलं पृथिव्या इति। न हि जलस्य साक्षादेव पृथिवी विकारस्तन्मात्राणां भूतप्रकृतित्वश्रुतिस्मृतिविरोधात्। न च द्वयोरेवोपादानत्वम्, विजातीयानामनारम्भकत्वात्। एवमाकाशादीनां वाय्वाद्युपादानत्वमप्यधिष्ठानतयैव द्रष्टव्यम्। संभवत्यविरोधे सृष्टिप्रक्रियायां वैशेषिकसांख्ययोरुभयोरप्यत्र विरोधानौचित्यादिति। वैशेषिकादिभिरपीदृशं

---

१ "अतिव्याप्तिः" इत्युभयत्र ह० लि० पु० पाठः सम्यक्।

२ पाठोऽयमुभयत्र ह० लि० पु० वर्तते।

अयं पाठः २ पु० ना० इति मु० शा०।

ब्रह्मणः कारणत्वमिष्यत एव। परन्तु तैरिदमपि निमित्तकारणतेति परिभाष्यते। अस्माभिस्तु समवाय्यसमवायिभ्यामुदासीनं निमित्तकारणेभ्यश्च विलक्षणतया चतुर्थमाधारकारणत्वमिति। तदेतत् सर्वं "तत्तु समन्वयादि" ति सूत्रेणाऽऽचार्यो वदिष्यति, शिष्यव्युत्पत्त्यर्थं त्वत्राप्यस्माभिः किञ्चिदुक्तमिति। इमं चार्थं तत्रैव प्रपञ्चयिष्यामः। ब्रह्मणः साक्षात् परिणामवादं विवर्तवादं च तत्रैव निराकरिष्यामः।

ब्रह्मणश्च जगत्कर्तृत्वं स्वोपाधिमायोपाधिकम्, परिणामित्वरूपोपादानत्वं च प्रकृतितत्कार्याद्यौपाधिकमपीष्यत एव। तथा चोक्तम्—

सर्वशक्तिमयो ह्यात्मा शक्तिमण्डलताण्डवैः।
संसारं तन्निवृत्तिं च करोत्यविरतोदयम्॥ इति, "यस्मिन् यतो यर्हि येन यस्य यस्मै यद् यो यथा कुरुते कार्यते वा। परावरेषां परमं प्राक् स्वसिद्धं तद् ब्रह्म तद्धेतुरनन्यदेकम्" इति च। [1]अस्मिंश्च कारणताद्वये कुलालोर्णनाभौ दृष्टान्ताविति[1]। एवञ्च जगतः सर्वप्रकारकारणत्वमपि ब्रह्मलक्षणं कर्तुं शक्यते। प्रकृतिपुरुषादिषु शक्तिषु प्रत्येकमुपादानत्वादिरूपेण प्रतिनियतमेव कारणत्वम्। ब्रह्मणस्तु सर्वशक्तिकत्वात् तत्तदुपाधिभिः सर्वकारणत्वम्। यथा चक्षुरादीनां दर्शनादिकारणत्वं यत्प्रत्येकमस्ति तत्सर्वं सर्वाध्यक्षस्य जीवस्य भवतीति। एतेन जगतोऽभिन्ननिमित्तोपादानत्वं व्याख्यातम्। अस्मिंश्च शास्त्रे सृष्टिप्रक्रिया महदादिक्रमेणैव सांख्ययोगयोरिव वक्ष्यते वियदादिपादे सृष्टिप्रकरणे। विशेषस्त्वत्रोच्यते—

प्रकृतिस्वातन्त्र्यवादिभ्यां सांख्ययोगिभ्यां पुरुषार्थप्रयुक्ता प्रवृत्तिः[2] (प्रकृतिः) स्वयमेव पुरुषेण आद्यजीवेन संयुज्यत इत्यभ्युपगम्यते अयस्कान्तेन लोहवत्। अस्माभिस्तु प्रकृतिपुरुषसंयोग ईश्वरेण क्रियत इत्यभ्युपगम्यते, "आदिः स संयोगनिमित्तहेतुः परस्त्रिकालादकलोऽपि दृष्ट" इति श्रुतेः,

"प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया हरिः।
क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाव्ययौ[3]॥ इति स्मृतेश्चेति।

पुरुषोऽत्र जीवः "चित्यात्मा गृह्यते यस्तु बुद्ध्यवस्थित आत्मनः।
पुरुषाख्यः स विज्ञेयो भोक्तृभावः स उच्यते॥ इति योगियाज्ञवल्क्यात्। परमेश्वरे च पुरुषशब्दः उपाधिसम्बन्धमात्रेण गौणः। ननु संयोगविशेषहेतुः क्रियाविशेषः क्षोभो विभ्वोः प्रकृतिपुरुषयोर्न संभवतीति चेन्न, प्रकृतेर्गुणत्रयरूपतया परिच्छिन्नगुणांशेन क्षोभसंभवात्, पुरुषस्य च तदौपाधिकक्षोभात् आकाशस्य वाय्वौपाधिकक्षोभवत्। अथवा संयोगोन्मुखत्वेन पुरुषे क्षोभोपचारः। अत-

---

[1] अयं पाठः २ पु०ना० इति मु०शा०। अयं पाठः उभयत्र ह० लि० पु० वर्तते।

[2] 'प्रवृत्तिः' इति मु० पु० पाठः।

[3] कूर्मपुराणे अ० ४ श्लो० १३। विष्णुपुराणेऽप्ययं श्लोको दृश्यते,—अं० १ अ० २ श्लो० २७।

"आशुमहेश्वरः" इति कौर्मे पाठः।

एव "गुणेभ्यः क्षोभ्यमाणेभ्यस्त्रयो देवा विजज्ञिरे" इत्यादिश्रुतिषु गुणानामेव क्षोभः श्रूयत इति, न तु पुरुषस्येति[1]। प्रकृतिपुरुषयोश्चेश्वरस्य प्रवेशः शास्त्रवदवधानमात्रमिति। विभावपि वेश्वरोपाधौ विभोरीश्वरस्य नित्य एव संयोग इत्यगत्याभ्युपेयम्! नित्यसंयुक्तयोरपि वैधर्म्यात् जीवतदुपाधिदृष्टान्तेन भेदसिद्धिरिति।

एतच्च जगज्जन्मादिकारणत्वं ब्रह्मशब्दप्रवृत्तिनिमित्तमपि बोध्यम्। मूलकारणस्यैव निरतिशयबृहत्त्वात्। ब्रह्मशब्दश्च पङ्कजादिवद् योगरूढः। अतो न जीवादिर्मुख्यो ब्रह्मशब्दार्थः। तथा चोक्तं नारसिंहे—

आदिसर्गमहं तावत् कथयामि द्विजोत्तम।
रहस्यैर्ज्ञायते येन परमात्मा सनातनः॥
प्राक्सृष्टेः प्रलयादूर्ध्वं नासीत् किञ्चिद् द्विजोत्तम।
ब्रह्मसंज्ञमभूदेकं ज्योतिर्यत् सर्वकारणम्॥
नित्यं निरञ्जनं शान्तं निर्गुण नित्यनिर्मलम्।
आनन्दसागरं स्वच्छं यत्काङ्क्षन्ति मुमुक्षवः॥
सर्वज्ञं ज्ञानरूपत्वादच्युतं व्यापक महत्।
सर्गकाले तु संप्राप्ते ज्ञात्वा तं कालरूपकम्॥
अन्तर्लीनविकारञ्च तत्स्रष्टुमुपचक्रमे।
तस्मात् प्रधानमुद्भूतं ततश्चापि महानभूत्॥ इति। रहस्यैः

संगुप्तशक्तिवर्गैः सहेत्यर्थः। नासीदिति विरतव्यापारतया कारणरूपेण गर्तस्थमृतसर्पवद् विलीनमासीदित्यर्थः। अन्यथाऽन्तर्लीनविकारं चेत्युत्तरासङ्गतेः, अत्यन्तासत्त्वे "सत्त्वाच्चावरस्ये" त्यागामिसूत्रविरोधापत्तेश्च। शान्तम् रागादिरहितम् औपाधिकव्यापारशून्यं च, न तु सुषुप्तवद् विषयसंवेदनरहितम्, सर्वज्ञमित्युत्तरात्। निर्गुणं नित्यमेव गुणानभिमानेन गुणासङ्गेन च गुणातीतं, गुणानां विलयाद्वा निर्गुणत्वम्। नित्यनिर्मलमिति जीवव्यावृत्तिर्जीवानामौपाधिककादाचित्कमालिन्यात्। मलाश्च क्लेशकर्मविपाकाशयाः। सर्वज्ञं ज्ञानरूपत्वात् इत्यनेन साधननैरपेक्ष्यमीशस्य सर्वाकारवृत्तेरुक्तम्। ज्ञानरूपत्वमत्र निरावरणसत्त्वमूर्तिकत्वं विवक्षितम्। प्रधानस्योत्पत्तिश्च प्रकृतिपुरुषसंयोगेनाभिव्यक्तिर्गौणीति बोध्यम्। "संयोगलक्षणोत्पत्तिः कथ्यते कर्मजानयोः" इति मात्स्यात्[2]। अनयोः पूर्वोक्तपुरुषयोः। तथाऽनयोर्लयोऽपि वियोगरूप एव कौर्मे प्रोक्तः—

वियोजयत्यथान्योन्यं प्रधानपुरुषावुभौ।
प्रधानपुंसोरनयोरेष संहार ईरितः[3]॥

अत्र वाक्ये ब्रह्मसंज्ञमित्यनेन परब्रह्मण्येव रूढिः ब्रह्मशब्दस्योक्ता। तथा विष्णुपुराणेऽपि परमेश्वरे एव ब्रह्मशक्तिरुक्ता—

---

[1] अय पाठः उभयत्र ह० लि० पु० वर्तते। अयं पाठः २ पु० ना० इति मु० शा०।
[2] इदं वचनं भारते मोक्षधर्मेऽपि दृश्यते, अ० २१६ श्लो० ११।
[3] उत्तरार्धे अ० ४८ श्लो० १६।

न सन्ति यत्र सर्वेशे नामजात्यादिकल्पनाः ।
सत्तामात्रात्मके ज्ञेये ज्ञानात्मन्यात्मनः परे ॥
तद्ब्रह्म परमं धाम स चात्मा परमेश्वरः ।
स विष्णुः सर्वमेवेदं यतो नावर्तते यतिः[1] ॥ इति ।

आत्मनः पर इत्यनेन जीवस्याब्रह्मत्वमुक्तम् । विष्णुर्महाविष्णुः । "बृहत्त्वाद् बृंहणत्वाच्च आत्मा ब्रह्मेति गीयत" इत्यादिवाक्यं चांशांश्यविभागेनात्मसामान्यपरं परमात्मपरं वा, जीवे सर्वशक्तिबृंहितत्वाभावादिति । यस्मात् परमेश्वर एव मुख्यो ब्रह्मशब्दार्थः, "परं जैमिनिर्मुख्यत्वादि" त्यागामिसूत्रात् । हिरण्यगर्भे त्वपरब्रह्मणि ब्रह्मात्मन्यूनशक्तितया तदव्यवहितकार्यत्वादिना ब्रह्मशब्दो गौण इति वक्ष्यति "सामीप्यात्तु तद्व्यपदेशः" इति सूत्रेण । अत एव मनौ—

यत्तत् कारणमव्यक्तं नित्यं सदसदात्मकम् ।
तद्विसृष्टः स पुरुषो लोके ब्रह्मेति गीयते ॥ इति ।

"एतद्वै तद्ब्रह्म परमपरं च" त्यादौ श्रुतौ गौणमुख्यभेदेन ब्रह्मद्वयवचनं बोध्यम् । अन्यथा "यन्मनसा न मनुते येनाहुर्मनो मतम्, तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत" इत्यादिश्रुतिविरोधात् । अन्यजीवेषु तु ब्रह्मशब्दप्रयोगोंऽशांश्यभेदाद् विभुत्वसर्वाधारत्वादिगुणयोगाद् वेति बोध्यम् ।

आधुनिकास्तु जीवब्रह्मणोरखण्डतया जीवेऽपि ब्रह्मशब्दो मुख्य एव आकाशशब्द इव घटाकाशे । जीवस्याब्रह्मत्वं त्वज्ञानकल्पितम् । तथाहि—"तत्त्वमसि, अहं ब्रह्मास्मि, अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि, नान्यदतोऽस्ति द्रष्टा" इत्याद्यभेदश्रुतिशतेभ्यो जीवोऽपि ब्रह्मैव चिन्मात्रत्वाविशेषात् । ऐश्वर्यबन्धयोश्चोपाधिद्वयधर्मत्वात् । न च "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते, नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्, [2]आत्मनि तिष्ठन्[2] आत्मनोऽन्तरः स म आत्मेति विद्यात्, त्रिषु धामसु यद् भोग्यं भोक्ता भोगश्च यद्भवेत् । तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः ॥" इत्यादिभेदश्रुतिशतानुपपत्तिरिति वाच्यम्, औपाधिकभेदानुवादकत्वेन तादृशवाक्योपपत्तेः । यथा हि घटाकाशादुपाधिपरिच्छिन्नान्महाकाशोऽन्य इति व्यवह्रियते तथैव बुद्ध्यवच्छिन्नचैतन्याज्जीवादन्यः परमेश्वर इति श्रुतिषु व्यवह्रियते । अथवा यथा मायाविनः खड्गचर्मधरात् सूत्रेणाकाशमधिरोहतः सकाशात् स एव मायावी परमार्थभूतो भूमिष्ठोऽन्यस्तथैवाविद्याकल्पितात् कर्तृभोक्तृलक्षणाज्जीवादन्यः परमेश्वरोऽस्तु । तदेवमवच्छेदभेदेन बिम्बप्रतिबिम्बरूपेण वा जीवेश्वरयोर्भेदः । तथा श्रूयतेऽपि—"आकाशमेकं हि यथा घटादिषु पृथग्भवेत् । तथात्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान्" इत्यादिष्विति वदन्ति ।

---

[1] विष्णुपुराणे अं० ६ अ० ४ श्लो० ३६ ।

[2] अयं पाठः २ पु० नास्तीति मु० द्या० । किन्तु पाठोऽयमुभयत्र ह० लि० पु० वर्तते ।

तत्रोच्यते–अभेदवाक्यानुरोधेन भेदवाक्यानामौपाधिकभेदपरत्वं यथा कल्प्यते, तथा भेदवाक्यानुरोधेनाभेदवाक्यानामविभागादिलक्षणाभेदपरत्वं कथं न कल्प्यते? अविरोधस्योभयथैव सम्भवात्। श्रूयते चाविभागादिरूपाभेदोऽपि "यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति एवं मुनेर्विजानत आत्मा भवति गौतम, न तु तद्द्वितीयमस्ति ततोऽन्यद् विभक्तमित्यादिश्रुतिषु। स्मृतिषु च—

अविभक्तं च भूतेषु विभक्तमिव च स्थितम्।
व्यक्त स एव चाऽव्यक्त स एव पुरुषः परः[1] ॥ इत्यादिषु।

प्रत्युताविभागादिलक्षणाभेदस्य पारमार्थिकतया तत्परत्वमेवोचितम्। औपाधिकभेदस्य तु मिथ्यात्वेन तत्परत्वं नोचितमिति। न चाविभागपरत्वे सत्यभेदशब्दे लक्षणाऽस्ति, भिदिर्विदारणे इति विभागेऽपि भिदिधातोरनुशासनात्।

[2]ननु जीवेऽपीश्वरभेदस्य स्वानुभवसिद्धतया तत्र श्रुतेर्न प्रामाण्यं किन्तूपासनाद्यर्थेऽनुवादतामात्रम्। प्रमाणान्तरानधिगतत्वाच्चु तयोरभेद एव तात्पर्यमिति चेन्न, अभेदोपासनवाक्येन प्रसक्तस्य भेदाभिभवस्यैव विवेकवाक्यैः प्रतिषेधस्यास्माभिरभ्युपगमात्, दुःखभोगादिदोषाणामीश्वरे प्रतिषेधात्[2]।

ननु मोक्षफलश्रवणादभेदवाक्यानामेव सम्यग् ज्ञानपरत्वमसङ्कोचश्चेति युक्तमिति चेन्न "पृथगात्मानं प्रेरितारञ्च मत्वा जुष्टस्ततस्तेनामृतत्वमेती" त्यादि श्रुतिभिर्भेदज्ञानस्यापि मोक्षहेतुत्वश्रवणात्। भेदज्ञानस्य विवेकज्ञानतया अविद्यानिवर्तकस्यैव "तमेव विदित्वाऽति मृत्युमेती" त्यादिभेदवाक्येष्वाधिक्येन मोक्षफलश्रवणात्। किं च सम्यग्ज्ञानत्वेन हेतुना भेदाख्यविवेकज्ञानस्यैव साक्षान्मोक्षहेतुत्वं श्रुतिसिद्धम्। "अस्थूलमनणु अह्रस्वम्, न तदश्नाति किंचन, त्रिषु धामसु यद् भोग्यं भोक्ता भोगश्च यद्भवेत् तेभ्यो विलक्षणः, अथात आदेशो नेति नेति नह्येतस्मादिति नेत्यन्यत् परमस्ती" त्यादिश्रुतिषु,

"प्रधानपुरुषव्यक्तकालानां परमं हि यत्।
पश्यन्ति सूरयः शुद्धं तद् विष्णोः परमं पदम्॥"

इत्यादिस्मृतिषु च भेदज्ञानस्यैव सम्यग्ज्ञानत्वं गम्यते। "सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यमित्यादिश्रुतिभ्यः, ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरमि" त्यादिस्मृतिभ्यश्च सम्यग् ज्ञानादेव मोक्षः श्रूयत इति। अभेदवाक्यान्यपि साक्षादविद्यानिवर्तकत्वासम्भवेन ब्रह्मात्मतावाक्यानामेव शेषभूतानि। न ह्यभेदज्ञानं साक्षादेवाहं दुःखीत्यादिलक्षणामविद्यामुच्छेत्तुमर्हति। एकस्मिन्नेवाकाशेऽवच्छेदभेदेन शब्दतदभाववदेकस्मिन्नेवात्मनि कार्यकारणलक्षणावच्छेदभेदेन दुःखादितदभावसंभवादिति। किं च ब्रह्माभेदस्य जडेष्वपि श्रवणान्न तेन दुःखादिशून्य-

---

[1] विष्णुपुराणे अं० ६ अ० ४ श्लो० ४४।

[2] अयं पाठः २ पु० ना० इति मु० शा० टि०। किन्तु उभयत्र ह० लि० पु० उपलभ्यते।

तासिद्धिः। तस्माद् विवेकवाक्यरूपतया भेदवाक्यान्येव वलवन्ति, तद्विरोधेन चाभेदवाक्यान्यविभागपरतयैव संकोच्यानि।

ननु "य एतस्मिन्नुदरमन्तरं कुरुतेऽथ तस्य भयं भवति" त्यादिश्रुतौ

"तस्यात्मपरदेहेषु सतोऽप्येकमयं हि यत्।
विज्ञानं परमार्थोऽसौ द्वैतिनोऽतथ्यदर्शिनः॥[1]"

इत्यादिस्मृतौ च भेदनिन्दाश्रवणान्न भेदपरत्वं श्रुतीनां सम्भवतीति चेन्न, अभेदवाक्यानामविभागपरतया भेदनिन्दावाक्यानामपि विभागलक्षणभेदपरत्वात् प्रतिपाद्यविपरीतस्यैव निन्दार्हत्वात्। अन्यथा "मनसैवेदमाप्तव्यं नेह नानास्ति किंचन,मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" त्यादिश्रुतिषु जडवर्गेष्वपि भेदनिन्दनाद्भेदः स्यात्। विवेकादिवाक्यान्न भवतीति चेत्, तुल्यं जीवेऽपि। जीवादपि ब्रह्मणो विवेकस्योक्तत्वात्। "तस्यात्मपरदेहेष्वि" त्यादिवाक्यं च "एकमयमि" ति शब्दादवैधर्म्यलक्षणाभेदपरं प्रकरणाद् ब्रह्मात्मैक्यपरमेव वेति।

नन्वेवमपि लाघवमैकात्म्यश्रुतेर्वलमस्त्विति चेन्न, वन्धमोक्षव्यवस्थानुपपत्तिप्रमाणसिद्धतया आत्मनानात्वगौरवस्यैवादर्तव्यत्वात्। या च प्रतिविम्बावच्छेदरूपाभ्यां वन्धमोक्षादिव्यवस्था रचिता सा स्वशिष्यमोहनमात्रं प्रतिविम्वस्य तुच्छतया वन्धमोक्षानौचित्यात्। ज्ञानेनोपाधिवियोगे जीवनाशप्रसङ्गात्, तत्त्वमसीत्यादिवाक्यार्थतयाऽभ्युपगतस्याखण्डत्वस्य विरोधाच्च सदसतोरभेदानुपपत्तेः। न च प्रतिविम्बोपाधिना विम्वस्यैव जीवत्वं वाच्यम्, तथा सत्यवच्छेदभेद एव पर्यवसानात् किमिति प्रतिविम्ववादः पृथङ् निर्मीयते।

अथैवमुच्यते विम्वप्रतिविम्वयोः परमार्थतो नास्ति भेदः किन्तु द्विचन्द्रदर्शनवदेकस्मिन्नेव वस्तुनि भेदभ्रममात्रमिति, तदपि न विचारसहम्, वन्धमोक्षानुपपत्तितादवस्थात्। व्यवस्थातत्प्रतिपादकश्रुत्यादिकं च सर्वमेवात्मातिरिक्तम् अज्ञानकल्पितमेव वक्तव्यमिति चेन्न, एवमपि प्रमाणस्यापि वाधेन ब्रह्मातिरिक्तनिषेधस्य श्रुतस्यापि पुनः संशयापत्तेः, स्वाप्नशब्दस्य ज.प्रति वाधे पुनस्तच्छब्दवोधितार्थसंशयवत्। तथा वन्धमोक्षादिकं सर्वथा नास्तीति श्रवणानन्तरं मननादिषु प्रवृत्त्यनुपपत्तेश्च, आप्तवाक्यतः पुरुषार्थाभावनिर्णयादित्यादीन्यनेकानि दूषणानि।

किं चात्मभेदादिकमज्ञानकल्पितं चेत्तदज्ञानं कस्येत्युच्यताम्। ब्रह्मणो भ्रान्तत्वे "ज्ञाज्ञौ द्वावजावीशानीशौ, नाविद्यानुभवात्मनि स्वप्रकाशे, अभयं भ्रान्तिरहितमनिद्रमजरामरम्,

परः पराणां सकला न यत्र
क्लेशादयः सन्ति परावरेशे।" इत्यादिवाक्यैर्ब्रह्मण्यज्ञानप्रतिषेधस्य विरोधात्। जीवस्य भ्रान्तत्वे चान्योन्याश्रयात्। भ्रमेण बिम्वप्रतिबिम्वभेदसिद्धौ जीवसिद्धिर्जीवसिद्धौ च तदाश्रयस्य भ्रमस्य सिद्धिरिति।

---

[1] विष्णुपुराणे अं० २अ० १४ श्लो० ३१।

अथ ब्रह्मण्येवाज्ञानम्, अज्ञानप्रतिषेधवाक्यानि चानिर्वचनीयाज्ञानप्रतिषेधेन परमार्थपराणीति चेन्न, व्यवहारभूमावपि ब्रह्मण्यज्ञानासम्भवात्। "ज्ञाज्ञौ द्वावजावीशानीशा"वित्यादिवाक्यैर्जीवेऽज्ञानव्यवहारदशायामेव ब्रह्मण्यज्ञानप्रतिषेधात्। किं च प्रतिबिम्बवादे अंशश्रुतिस्मृतिसूत्राणां विरोधः स्यात्, प्रतिबिम्बेंऽशव्यवहाराभावात्। यत्त्वा"भास एवे" ति जीवप्रकरणस्थसूत्रं, तत्राभासशब्दो न प्रतिबिम्बवाची तथा प्रयोगादर्शनात् "अंशो नानाव्यपदेशादि" ति सूत्रेणांशत्वमुक्त्वा पुनः सूत्रान्तरेण तद्विरुद्धप्रतिबिम्बतायाः सूत्रणानौचित्याच्च। किन्तु प्रकाशवाची "सर्वेन्द्रियगुणाभास"मिति। अस्तु वा हेत्वाभासवदात्माभासवाचो जीवस्यापि पारमार्थिकात्मत्वस्य प्रतिषेध्यमानत्वात् प्रकाशे प्रयोगदर्शनादिति, न तत्स्वाभासं दृश्यत्वादिति च। अथैवं प्रतिबिम्बदृष्टान्तः कथमुपपद्येतेति चेत्, अंशांश्यविभागेन किरणसूर्ययोरिव जीवब्रह्मणोरेकपिण्डीभावेन जीवेन अंशैः परमात्मनो नानाबुद्धिप्रतिबिम्बनादित्यवेहि।

नन्वेवं मा भवतु प्रतिबिम्बवादोऽवच्छेदवादस्तु स्यादिति, मैवम्, अवच्छेदवादेऽपि "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशी" त्यादिविभागानुपपत्तेः, धर्मिण एकत्वात्। अथोपाधिविशिष्टयोरेव जीवेश्वरत्वे वाच्ये, तथा च विशेषणभेदाद् भेदः स्यादिति चेन्न, विशिष्टस्यातिरेकानतिरेकयोरुभयतः पाशात्। विशिष्टस्यातिरेके भवदभिमतस्य "तत्त्वमसी" त्यादिवाक्यार्थस्याखण्डत्वस्यानुपपत्तेः। न च लक्षणया विशेषणद्वयं परित्यज्य केवलचैतन्यपरत्वं तत्त्वंपदयोर्वक्तव्यमिति वाच्यम्, वाक्यार्थयोर्विशिष्टयोरतिरिक्ततया केवलचैतन्ये तटस्थलक्षणापत्तौ जीवस्य देहाद्यभिमाननिवृत्त्यसम्भवात्, सर्वपदार्थपरित्यागेन लक्षणया "तत्त्वमसी" त्यभेदवाक्यस्य जीवब्रह्मभेदवादिनाप्युपपादयितुं शक्यत्वाच्च।

किं च मोक्षावस्थायां विशेषणनाशेन जीवनाशप्रसङ्गः, ब्रह्मणि प्रपञ्चाध्यारोपापवादयोरविवेकरूपयोर्वैयधिकरण्यापत्तिश्च। तथा लक्षणां विनैवास्माभिस्तत्त्वमस्यादिवाक्यानां व्याख्येयतया लक्षणानौचित्यं च।

यदि च विशिष्टमनतिरिक्तमुच्यते तदा एकस्मिन्नेवात्मन्यवच्छेदभेदेन बन्धमोक्षैश्वर्यादिप्रसक्त्या "ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति" समाने वृक्षे पुरुषो निमग्नो ऽनीशया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक" इत्यादित्रिभागानुपपत्तिः। न ह्येकस्मिन्नेव वृक्षेऽवच्छेदभेदेन कपिसंयोगतदभाववति एको वृक्षः कपिसंयोगवानन्यश्च नेत्यमूढैः प्रयुज्यते। न च लौकिकभेदानुवादेन तादृशवाक्यान्युपपादयितुं शक्यन्ते, ज्ञानफलस्याज्ञानदोषस्य चापारमार्थिकत्वे तदर्थकप्रवृत्त्याद्यनौचित्यात्। अस्मन्मते चात्मनि दुःखभोगतदभावयोः कालभेदेन पारमार्थिकत्वस्योपपाद्यत्वात्।

किं चाखण्डैकात्म्ये सति मुक्तस्य पुनर्बन्धापत्तिः, एकान्तःकरणवियोगेऽपि मुक्तांश एवान्तःकरणान्तरसम्भवात्। यथैकघटावच्छिन्नाकाशस्य तद्घटभङ्गेऽपि घटान्तरेण पुनः सम्बन्धो भवति तद्वत्। न च तेनावच्छेदेनान्तःकरणसम्बन्ध एव न भवतीति वाच्यम्, तथा सति योगिनां सर्वगतत्वानुपपत्तेरिति। अन्तःकरण-

गणोऽस्माभिरेव कल्पित इति न शङ्कनीयम्। कपिलादिभिरपि श्रुतिद्वैधे यथोक्ततर्काणामेव निर्णायकत्वेनोक्तत्वात्। यथा कपिलसूत्राणि —"जन्मादिव्यवस्थातः पुरुषबहुत्वम्, उपाधिभेदेऽप्येकस्य नानायोग आकाशस्येव घटादिभिः, उपाधिर्भिद्यते न तु तद्वान्, एवमेकत्वेन परिवर्तमानस्य न विरुद्धधर्माध्यासः, नाद्वैतश्रुतिविरोधो जातिपरत्वात्" इति। एतेषां पञ्चसूत्राणामयमर्थः—

आत्मैक्ये सत्यौपाधिकानां जन्ममरणादीनामनौपाधिकानां च भोगादीनां श्रुतिस्मृतिसिद्धा आश्रयविभागव्यवस्था न स्यात् "अयं जातोऽयं मृत" इत्यादिरूपा। अतश्चेतना बहव एव न तु लाघवादाकाशवदेकत्वमित्याद्यसूत्रार्थः। श्रुतौ च भेदवदभेदस्याप्यवगमात् तर्केणैवात्र व्यवस्थेत्याशयः कपिलाचार्याणाम्।

ननूपाधिभेदेन व्यवस्था कर्तव्या लाघवतर्कानुग्रहेणाभेदश्रुतेर्बलवत्त्वादित्याशङ्कां समाधत्ते—द्वितीयसूत्रेण। उपाधिभेदे सत्यपि एकस्यैवात्मनो नानोपाधियोगः स्यादतो न व्यवस्थेत्यर्थः।

नन्वेवं विशिष्टमतिरिक्तमेव वक्तव्यं तत्राह—तृतीयसूत्रम् उपाधिरित्यादि। उपाधिरेव भिन्नो वक्तव्यो नतूपाधिमान् उपाधिनाशे जीवनाशप्रसङ्गात्, विशिष्टाऽहंपदार्थे बुद्धिविवेकानुपपत्तेश्च।

उक्तदूषणमुपसंहरति चतुर्थसूत्रेण "एवमि" त्यादिना। एवमेकत्वेनावस्थितस्यात्मनो न विरुद्धधर्माध्यासः औपाधिकानौपाधिकविरूद्धधर्मसम्बन्धः संभवति, विरोधस्यासंभवात्। अविरोधे चाव्यवस्थेत्यर्थः।

आत्माद्वैतश्रुतिमुपपादयति पञ्चमेन "नाद्वैते" त्यादिना। जातिपरत्वात् चित्सामान्याद्वैतपरत्वात् श्रुतीनामित्यर्थः। सर्ववस्तूनां सामान्यविशेषात्मकत्वेन विशेषरूपं धर्मं परित्यज्य सामान्यरूपेण धर्मिणामात्माद्वैतं प्रतिपाद्यते, वैधर्म्याणामवास्तवत्वप्रतिपादनायेति। यथा च विशिष्टयोस्तत्त्वंपदार्थतामभ्युपगम्य परैर्लक्षणया केवलविशेष्यार्थकत्वं पदयोरुच्यते, तद्वत् सांख्यैरपि। विशेषस्त्वियान् यत्तैर्लक्षणा न क्रियते "स एवायं गकारः" इत्यादाविवेति बोध्यम्। सांख्यैरीश्वरानभ्युपगमात् सामान्याभेद एवोक्तः ; ब्रह्ममीमांसायान्तु अग्निस्फुलिङ्गवदंशांश्यभेदोऽप्यविभागलक्षणो वक्ष्यते "प्रकाशाश्रयवद्वा तेजस्त्वात्, अविभागेन दृष्टत्वात्" इत्यादिसूत्रैरिति। तस्मादैकात्म्ये लाघवेऽपि बन्धमोक्षादिव्यवस्थानुपपत्त्यात्मनानात्वगौरवमाश्रयणीयमिति।

अपि चौपाधिकमात्रभेदेन श्रुतिस्मृती अपि नोपपद्येते। तथाहि, "निरञ्जनः परमं साम्यमुपैति" "यथाग्निरग्नौ संक्षिप्तः समानत्वमनुव्रजेत्। तथात्मसाम्यमस्येति योगिनः परमात्मना" इत्यादौ मोक्षकालेऽपि भेदघटितं साम्यं श्रूयते, तदानीं चौपाधिकभेदो नास्तीति। तथा श्वेताश्वतरे—

"कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम्" इत्यनेन मूलकारणे चिन्तां प्रकृत्याम्नायते[1]—

[1] प्रवृत्त्याम्नायते इति मु० पु० पाठोऽसाधुर्भाति।

"ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम् ।
यः करणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः" ॥

इति । अत्र सृष्टेः प्रागपीश्वराधिष्ठेयो जीवोऽस्तीत्यवगम्यते ।

तथा, ' प्रकृतिं पुरुषं चापि प्रविश्यात्मेच्छया हरिः ।
क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाव्ययौ ॥" इति स्मृतेरपि ।

न चायमुपाधिसंबन्धात् पूर्वमधिष्ठेयाधिष्ठातृभावो निरंशस्यात्मनः स्वरूपभेदं विनोपपद्यत इति । तथा,

"अन्यश्च राजन् प्रवरस्तथान्यः पञ्चविंशकः ।
तच्छ्रुत्वा चानुपश्यन्ति एक एवेति साधवः"[1] ॥

इति मोक्षधर्मादौ स्वरूपभेदमुक्त्वाऽधिष्ठेयाधिष्ठात्रोरविभागलक्षणमैक्यमुक्तम् । तथा,

"सर्वगत्वादनन्तस्य स एवायमहं स्थितः[2] ।" इति विष्णुपुराणादावपि । अतोऽवगम्यते—श्रुतयोऽप्यभेदमविभागलक्षणमेव बोधयन्ति, एकवाक्यत्वात् "ऐतदात्म्यमिदं सर्वमि" ति श्रुतौ जडवर्गाभेदस्याविभागादिरूपस्यैव वक्तव्यतया जीवाभेदस्याप्यविभागादिरूपत्वसिद्धेश्च, अन्यथाऽर्धजरतीयन्यायापत्तेः । तथा,

"व्यतिरिक्तं न यस्यास्ति व्यतिरिक्तोऽखिलस्य यः"[3] । इति विष्णुपुराणादिभ्योऽप्यत्यन्ताभेदोऽपि न शास्त्रार्थः ब्रह्मणि पुरुषव्यतिरेकानुपपत्तेः । तथा विष्णुपुराण एव—

परस्य ब्रह्मणो रूपं पुरुषः प्रकृतेः परः ।
व्यक्ताव्यक्ते तथैवान्ये रूपे कालस्तथा परः[4] ॥ इति ।

व्यवहारमुक्त्वा परमार्थमाह—

प्रधानपुरुषव्यक्तकालानां परमं हि यत् ।
पश्यन्ति सूरयः शुद्धं तद्विष्णोः परमं पदम् ॥
"विष्णोः स्वरूपात् परतो हि तेऽन्ये रूपे प्रधानं पुरुषश्च विप्र"[5] ।

इत्यादिनापि नात्यन्ताभेदः ।

नन्वेवं "तस्यैव नित्यतृप्तस्य सदानन्दमयात्मनः ।
अवच्छिन्नस्य जीवस्य संसृतिः कथ्यते बुधैः" ॥

इति वसिष्ठसंहितासूक्तोऽवच्छेदोऽनुपपन्न इति चेन्न, किरणसूर्यादिवदंशांशिनोर्जीवब्रह्मणोरेकपिण्डीभावेन तस्य जीवरूपैरंशैरवच्छेदवादस्यापि प्रतिबिम्बवादवदेवोपपत्तेः । यश्च "आकाशमेकं हि यथा घटादिषु पृथग्भवेदि" त्यादिदृष्टान्तः, सोऽप्यविभागरूपैक्यमात्रांशेन पुनरखण्डत्वेऽपि न्यायानुग्रहेण बलवत्तरस्य सखण्डतादृष्टान्तस्यैवादर्तव्यत्वात् । यथा,

[1] अ० ३१८ श्लोक ७८ ।
[2] अं० १ अ० १९ श्लो० ८८५ ।
[3] अं० १ अ० १९ श्लो० ७८ ।
[4] अं० १ अ० २ श्लो० १५ ।
[5] अं० १ अ० २ श्लो० २४ ।

"वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥"

"अग्निर्यथैको भुवनं प्रविष्ट" इत्यादिः सखण्डतादृष्टान्तः। वायुतदवयवाग्निस्फुलिङ्गादिष्ववयवयवावयविनोरन्योन्याभावलक्षणो भेदः अविभागलक्षण एव चाभेद इति जीवब्रह्मणोः साम्यमिति।

अपि च चन्द्रजलचन्द्राकाशघटाकाशाग्निविस्फुलिङ्गच्छायातपस्त्रीपुरुषादिदृष्टान्तैः प्रतिबिम्बावच्छेदांशादिवादाः परस्परविरोधेन सर्वे न सम्भवन्तीत्येक एव वाद आश्रयणीयः। इतरास्तु विवक्षिततत्तदंशमात्रे दृष्टान्ता इत्यभ्युपेयम्। तथा च सति अंशवाद एवाश्रयितुं युक्तः "अंशो नानाव्यपदेशादि" त्यादिसूत्रेणाचार्यैरंशत्वस्यैव न्यायतो मीमांस्यत्वात्। प्रतिबिम्बादिभावेनाखण्डत्वे स्पष्टसूत्राभावात्। प्रत्युत प्रत्यधिकरणं जीवब्रह्मभेदस्यैव स्पष्टं सूत्रणीयत्वात् "अधिकं तु भेदनिर्देशादि" त्यादिभिः। अंशसूत्रे च भेदाभेदयोर्वक्ष्यमाणत्वादिति। तस्माद् भेदाभेदाभ्यां जीवब्रह्मणोरशांशिभाव एव ब्रह्ममीमांसासिद्धान्तोऽवधारणीयः, "अंशो नानाव्यपदेशात्, अन्यथा चापि दाशकितवादित्वमधीयत एके" इति वक्ष्यमाणसूत्रादिति।

अंशांशिनोश्च भेदाभेदौ विभागाविभागरूपौ कालभेदेनाविरुद्धौ। अन्योन्याभावश्च जीवब्रह्मणोरात्यन्तिक एव, तथा शक्तिशक्तिमदविभागोऽपि नित्य एवेति मन्तव्यम्। तथा च स्मृति—

"पृथग् विभक्ता प्रलये च गोप्त्रे"ति, 'तदात्मकं तदन्यत् स्याद्यद्रूपं भासकं विदुरि' ति चेति। तदात्मकं पूर्ववाक्योक्तप्रधानपुरुषकालात्मकमित्यर्थः। अंशत्वं च सजातीयत्वे सति अविभागप्रतियोगित्वम्, तदनुयोगित्वं चांशित्वम्। येन च रूपेणांशता यत्र विवक्ष्यते तेनैव रूपेण साजात्यं तत्र ग्राह्यं, यथा आत्मांशलक्षणे आत्मत्वेनैव साजात्यं सदंशादिलक्षणेषु च सत्त्वादिरूपेणैवेत्यतो नातिप्रसङ्गः। अथवा द्रव्यत्वसाक्षाद्व्याप्यजात्या साजात्यं ग्राह्यम्। विभागश्च लक्षणान्यत्वम् अभिव्यक्तधर्मभेद इति यावत्। तद्भावश्चाविभागः। अथवास्तु अविभागः संयोगविशेषः स्वरूपसम्बन्धो वा आधेयत्वादिवत्। जलस्य [1]दध्नि लवणस्य समुद्रे अविभागव्यवहारस्यापलपितुमशक्यत्वात्। "न तु तद्द्वितीयमस्ति ततोऽन्यद् विभक्तमि"ति श्रुत्या "सति सम्पद्य ते [2]न विदुः सति सम्पद्यामह" इत्यादिश्रुत्या च जीवस्यापि ब्रह्मण्यविभागश्रवणात्। "या प्रकृतिः पुरुषश्चोभौ लीयेते परमात्मनी" त्यादिस्मृतेश्च। "पद-

---

[1] अयं पाठः उभय ह० लि० पुस्तकानुसारी।
"दध्नि" इति स्थाने "दुग्धे" इति पाठो युक्ततरः।
"जलस्य दधि" इति मु० पु० पाठोऽयुक्तः।

[2] "ते न विदुः" इत्येव पाठ उभयत्र ह० लि० पुस्तकेऽप्यस्ति।
"ते विदुः" इति मु० पु० पाठे नकारस्त्रुटितो भाति।

गतौ, लिङ् श्लेषण" इत्याद्यनुशासनेभ्यःसम्पत्तिलयाप्ययादिशब्दानामविभागार्थत्वात्। तथा "अविभागो वा वचनादि" त्यागामिसूत्राच्चेति।

ननु निरवयवस्य ब्रह्मणः कथं मुख्योंऽशः स्यादिति चेन्न, यथोक्तलक्षणांशत्वस्यावयवत्वाभावेऽपि दर्शनात्। यथा शरीरस्य केशादिरंशो, राशेश्चैकदेशोंऽशः, पितुश्च पुत्र इति। सर्वे च जीवाः पितरि पुत्र[1]चेतना इव चिन्मात्रे ब्रह्मणि नित्यसर्वावभासके विषयभासनरूपं स्वलक्षणं विहाय प्रलये लक्षणानन्यत्वं गच्छन्ति। सर्गकाले च तदिच्छया तत एव लब्धचैतन्यफलोपधाना आविर्भवन्ति पितुरिव पुत्राः। अतो जीवा ब्रह्मांशा भवन्ति। "आत्मा वै जायते पुत्रः" इति श्रुत्या पुत्रे पितुरविभागलक्षणाभेदवज्जीवेऽपि ब्रह्मणोऽविभागलक्षणाभेदस्य "बहुस्यां प्रजायेये" त्यादिश्रुत्या सिद्धेरिति। अतो जीवा ब्रह्मांशा मुख्या एव भवन्ति।

नन्वंशस्तत्र स्यात्, आकाशवदंशांशिभावो नार्थः (किन्तु अग्निविस्फुलिङ्गपितापुत्रादिवदेवांशांशिभावोनार्थः[2]) किं तु अग्निविस्फुलिङ्गपितापुत्रादिवदेवांशांशिभावोऽभिप्रेत इति कथं निर्धारणीयमिति चेत्, उच्यते—आकाशवदंशांशिभावाश्रयणेंऽशशब्दस्य गौणत्वं स्यात्। घटाकाशो ह्याकाशाद् विभक्तो न भवति, लक्षणान्यत्वाभावात् घटाकाशधर्माणामप्याकाशधर्मत्वात्। अवच्छिन्ने चांशशब्दो गौणोऽवयवादिशब्दवदिति। किं च एवमपि जीवश्चिन्मात्रस्यैवांशः स्यान्न तु सर्वकर्तुरीश्वरस्य, परैरुपाधिविशिष्टस्यैवेश्वरत्वकल्पनात्। न चेश्वरोपावेरंशो जीवोपाधिरीश्वरस्यापि तद्द्वारा भवन्मते संसारप्रसंगात् कायव्यूहादाविवेति। अपि च पितापुत्रवदंशांशिभावो व्यासाभिप्रेत इति मोक्ष[3]धर्मस्थाच्छिष्यवैशम्पायनवाक्यादेवावधार्यते। अतो नैवाकाशवदंशत्वं ब्रह्ममीमांसार्थः। यथा, मोक्षधर्मे—

"बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु" इति प्रश्ने—
बहवः पुरुषा राजन् सांख्ययोगविचारिणाम्।
नैवमिच्छन्ति पुरुषमेकं कुरुकुलोद्वह॥

इत्यनेन पुरुषनानात्वमेव विचारतो व्यवस्थाप्य व्यासोक्तं पुरुषैक्यं पितापुत्रवदविभागेनोपपादितम्—

समासतस्तु यद्व्यासः पुरुषैकत्वमुक्तवान्।
तत्राहं संप्रवक्ष्यामि प्रसादादमितौजसः॥
बहूनां पुरुषाणां हि यथैका योनिरिष्यते।
तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम्॥ इति।

---

[1] "पुत्रवेतना इव" इति मु० पु० उभयत्र ह० लि० पु० च पाठोऽसम्यक्।

[2] अयं पाठोऽसमीचीन इति प्रतिभाति इति मु० शा० टि०।
एकस्मिन् ह० लि० पु० अपि एवमेव पाठः, स न समीचीनः। किन्तु अपरस्मिन् ह० लि० पु० कोष्ठान्तर्गतं पाठं विहाय शेषः पाठोऽस्ति, स च समीचीनः।

[3] उभय ह० लि० पु० सम्मतोऽयं पाठः। 'धर्मः स्याच्छिष्यः' इति मु० पु० पाठोऽसमीचीनः।

अस्यार्थः—यत्तु व्यासः समासतो जीवजातस्य ब्रह्मणि प्रक्षेपत आत्मैक्यमुक्तवानर्थात् ब्रह्ममीमांसादौ तत्तुभ्यं जनमेजयाय तच्छिष्यवैशम्पायन आह, तदुपदेशप्रसादाद्वक्ष्यामि। तदेवाह 'बहूनामि'ति श्लोकेनेति। उपसंहारे च "एवं बहुविधः प्रोक्तः पुरुषस्ते यथाक्रममि" त्यनेन पुरुषबहुत्वमेव सिद्धान्तितम्।

यत्तु तत्रैव प्रसंगान्तरे वाक्यान्तरम्—

बहवः पुरुषाः पुत्र यत्त्वया समुदाहृताः।
एवमेतर्हि संवृत्तं द्रष्टव्यं नैवमित्यपि ॥ इति,

तेन च पुरुषविभागस्य विकारवत् वाचारम्भणत्वमभिप्रेत्य जीवात्मताप्रतिषेधतः एकस्यैव ब्रह्मणः पारमार्थिकात्मत्वमुक्तं, न तु जीवात्मत्वं स्थापयित्वा पुरुषबहुत्वं निराकृतम्। तस्मात् पितापुत्रवदंशत्वमेवागाम्यंशसूत्रस्यार्थः। तथा च स्पष्टे श्रुतिस्मृती अंशत्व एव भवतः।

"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्।
अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥"

"तत्सां (तस्यां) शोऽयं यश्चैतामात्राः प्रतिपुरुषं क्षेत्रज्ञाः"

"यथा सुदीप्तात् पावकाद् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः।
तथाक्षराद् विविधाः सौम्य भावाः प्रजायन्ते तत्र चैवापियन्ति ॥

इत्यादिश्रुतिः। स्मृतिश्च—

"ममैवांशो जीवलोके जीवभूतः सनातनः" इत्यादिरिति।

यद्यपि जीवा अपि ब्रह्मवदेव विभुचिन्मात्ररूपास्तथाप्युपाध्यवच्छेदेनैवाभिव्यक्तपरिच्छिन्नचैतन्यतया विस्फुलिङ्गतुल्या भवन्ति "बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्टः" "वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते" इत्यादिश्रुतेरिति।

अस्य चांशस्य भेद[1] (अभेद) प्रतिपादनस्य फलम्, अंशांशिनोरुत्सर्गतः एकरूपतया जीवस्याप्यसंसारित्वविभुत्वसर्वाधारत्वादिज्ञापनम्, ब्रह्मणश्चोपाधिविवेकेन चिन्मात्रत्वज्ञापनं, तथा जीवेंऽशेऽभेददृष्ट्या ब्रह्मोपासनं तथा ब्रह्मात्मत्वोपपादनं चेत्यादि। एतेषु ब्रह्मात्मत्वोपपादनं मुख्यं फलं ब्रह्मात्मतापरत्वात् सर्ववेदान्तानाम्। अत एवाचार्यो वक्ष्यति—"आत्मेति तूपयन्ति ग्राहयन्ति च" इति। ब्रह्मात्मज्ञानादेवौपाधिकसंसारबन्धजीवमारभ्य स्थूलदेहपर्यंन्तेष्वभिमाननिवृत्तेः। अत इदं ब्रह्मात्मज्ञानं विविक्तजीवज्ञानात् सांख्योक्तादपि श्रेष्ठं, नातोऽधिकं ज्ञानमस्ति।

नन्वंशांशि [2]भावज्ञानात् कथं ब्रह्मात्मज्ञानं स्यात्? उच्यते—यो यत आगत्य यदधिष्ठितं यत्र जीवित्वा यत्र लीयते समुद्रतरंगादिवत् जीवात् तद्बुद्ध्यादिवच्च स तस्यात्मा भवति,

[1] भेद इति मु० पु० पाठः।
[2] 'भावज्ञानात्' इति ह० लि० पु० सम्मतः पाठः।
'भावाज्ञानात्' इति मु० पु० पाठोऽसमीचीनो भाति।

यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चास्य सन्ततोभावस्तस्मादात्मेति कथ्यते ॥

इति आत्मलक्षणस्मृतेः । यथा हि देहेन्द्रियादीनां बुद्धिपर्यन्तानामुत्पत्तिलयाधारतया तत्साक्षित्वेनाधिष्ठातृत्वादिना च जीवस्तेषामात्मा तत्स्वरूपज्ञानाच्च तेष्वहमित्यभिमानो निवर्तते "नाहं बुद्ध्यादिरि" ति विद्ययेति सांख्यसिद्धान्तः । तथैव जीवानां चिन्मात्रस्वरूपाणामप्युत्पत्तिलयाधारतया तत्साक्षित्वेन तदधिष्ठातृत्वादिना चेश्वरस्तेषामप्यात्मा तत्स्वरूपज्ञानादेव च जीवेष्वहमित्यभिमानो निवर्तते ब्रह्मात्मविद्ययेति ब्रह्ममीमांसासिद्धान्तः । "तमेवैकं जानथ आत्मानं, नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता, [1]यदेव साक्षादपरोक्षाद् ब्रह्म, य आत्मा सर्वान्तरः, य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति, यस्यात्मा शरीरम्, नित्यो नित्यानां चेतनश्चेतनानामि" त्यादिश्रुतेः ।

तत्त्वैः सम्पादितं भुङ्क्ते पुरुषः पञ्चविंशकः ।
ईश्वरेच्छावशात् सोऽपि जडात्मा कथ्यते बुधैः ॥
तवान्तरात्मा मम च ये चान्ये देहसंज्ञिताः ।
सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित् ॥
अन्यश्च राजन् प्रवरस्तथान्यः पञ्चविंशकः ।
तत्स्थत्वाच्चानुपश्यन्ति एक एवेति साधवः ॥
ते चैनं नाभिनन्दन्ति पञ्चविंशकमप्युत ।
षड्विंशमनुपश्यन्तः शुचयस्तत्परायणाः ॥
तमो रजश्च सत्त्वञ्च विद्धि बुद्धिगुणानिमान् ।
बुद्धिमात्मगुणं विद्यादात्मानं परमात्मनः ॥

इत्यादिस्मृतेश्च । "आत्मेति तूपयन्ती" त्यादिसूत्राच्च, तथा "आत्मा स भोक्तुरि" ति पूर्वाचार्यवाक्याच्चेति ।

आत्मनानात्वं च चैतन्ययोग्यतामात्रेण शास्त्रेषूक्तम् । *बहिर्जीवस्य चित्शक्तिमत्त्वरूपमात्मत्वं नाभ्युपगम्यते "आदरादलोप" इति सूत्रविरोधात् सुखदुःखभोगानुपपत्तेश्च । किन्तु जीवेषु चैतन्यफलोपधानं कादाचित्कतया वाचारम्भणमात्रमीश्वरपरतन्त्रं सदल्पं चेति । जीवाश्चिच्छक्तिगुणयोगाद् गौणात्मान एव, यथाऽध्यक्षत्वगुणयोगेन प्राणः करणानामात्मा, तद्वत् । मुख्यस्त्वात्मेश्वर एव, सदा सर्वज्ञ-

---

१ 'यदेव' इति ह० लि पुस्तकयोः मु० पुस्तके च पाठः ।

*अत्रत्यपाठे सन्देहः ।
एकस्मिन् ह० लि० पु० "चैतन्यायोग्यतामात्रेण शास्त्रेषूक्तं च हि जीवस्य……नाभ्युपगम्यते"…इति पाठः ।
अपरस्मिन् ह० लि० पु० पाठः—"चैतन्ययोग्यतामात्रेण शास्त्रेषूक्तं व हि……नाभ्युगम्यते"…इति ।

त्वादपरतन्त्रत्वाच्चेत्येवाभ्युपगम्यते "नान्योऽतोऽस्ति द्रष्टे" त्यादिश्रुतेरिति। तथा च नारदीये गौणमुख्यभेदेनात्मद्वयमुक्तम्—

आत्मानं द्विविधं प्राहुः परापरविभेदतः।
परस्तु निर्गुणः प्रोक्तो ह्यहङ्कारयुतोऽपरः[1] ॥ इति।

परापरौ श्रेष्ठाश्रेष्ठौ मुख्यगौणत्वाभ्यामिति भावः।

इदमेव खण्डैकात्म्यमबुद्ध्वा आधुनिका अखण्डैकात्म्यपपत्तये जीवानां प्रतिबिम्बावच्छेदादिरूपैः कुकल्पनां कुर्वन्ति। सांख्यनैयायिकादिभिश्चैतन्यफलयोग्यता-रूपमात्मत्वं जीवस्योच्यत् इति न तद्विरोधः। यथा चातेक्षिकात्मनो जीवस्य तत्त्वज्ञानादप्यहंकर्तेत्याद्यभिमाननिवृत्त्या मोक्षोभवति तथा विद्यपादे वक्ष्यामः। यदि वा शेषशेषिरूपेणात्मद्वयमेवाभ्युपगम्यते तदा ब्रह्मात्मताज्ञानस्याविद्यानिवृत्तिहेतुत्वं न साक्षादभ्युपगन्तुं शक्यते [2]ब्रह्मात्मताज्ञानानिवर्तकत्ववद् देहाद्यात्मताज्ञानानिवर्तकत्व-स्याप्यौचित्यात्। अपि त्वदृष्टेश्वरानुग्रहादिद्वारैवाविद्यानिवृत्तौ मोक्षे च हेतुत्वम-भ्युपगन्तव्यम्।

तथा च सति—　परमात्मा हरिः स्वामी दासोऽहं तस्य सर्वदा।
स्वेच्छया विनियोक्तातस्तस्यैवात्मेश्वरस्य हि ॥
अहंकृतिर्मकारः स्यान्नकारस्तन्निषेधकः।
[3]तस्मात्तन्तमसैवातश्चाहङ्कारविमोचनम् ॥

इति यमपुराणयुक्त्या ईश्वरात्मज्ञानात् साक्षात् सङ्घाताभिमाननिवृत्तिर्जीवात्मत्वा-भावश्च न घटेतेति। एतेन "एष त आत्मान्तर्याम्यमृतः स म आत्मेति विद्यात्, तत्त्वमसी" त्यादिश्रुतयो व्याख्याताः जीवभेदेऽपीति मन्तव्यम्।

ननु "तत्त्वमसि" वाक्यस्यांशांश्यविभागेनाप्युपपत्तेः कथमस्य ब्रह्मतापरत्वमवधारणीयमिति चेत्, अविद्यानिवर्तकतयाऽभ्यर्हितत्वेन बाधकाभावे सर्वत्रैवाभेदवाक्येषु ब्रह्मात्मतापरत्वस्यौत्सर्गिकत्वात् "तं त्वौपनिषदं पुरुषं पृच्छामी" तिश्रुतेः, वेदा ब्रह्मात्मविषया इति स्मृतेश्च। अंशांश्यभेदस्यापि ब्रह्मात्मतावगतिफलत्वात्। न च "ऐतदात्म्यमिदं सर्वं स आत्मे" ति पूर्वभागेनैव ब्रह्मात्मत्वं लब्धमिति वाच्यम्, यत "ऐतदात्म्यमि" त्यनेन प्रपञ्चस्य ब्रह्मणि स्वरूपत्वलक्षणमेवात्मत्वमविभागलक्षणाभेदो वा

---

[1] अ० ३१ श्लो० ५७।

[2] अयं पाठः प्राप्तमुद्रितग्रन्थवद्रक्षितः किन्त्वसाधुः प्रतीयते।
"ब्रह्मात्मताज्ञानस्य जीवात्मताज्ञानानिवर्तकत्ववद्" इत्येकस्मिन् ह० लि० पु० पाठः साधुः। अपरस्मिन् ह०लि०पु० यः पाठः, स तु मुद्रितग्रन्थवदेवास्तीति न साधुः।

[3] पाठोऽयं प्राप्तमुद्रितग्रन्थवद्रक्षितः किन्त्वसम्यक् प्रतीयते।
तन्तमसैवात्त अहंकार विमोचनम् इत्येकस्मिन् ह० लि० पु० पाठः।
तन्तमसैवात्तमहङ्कारविमोचनम्—इत्यपरस्मिन् ह० लि० पु० पाठः।
इमावपि पाठौ न समञ्जसौ स्तः।
'तस्मात्तन्मनसैवात्तमहङ्कारविमोचनम्' इति पाठः कथञ्चित् सङ्गच्छेत।

घटस्य मृदात्मत्ववत्, न त्वध्यक्षत्वरूपं चेतनत्वरूपं वा, "स आत्मे" त्यनेन वा साक्षित्वरूपमात्मत्वमुक्तम्। ताभ्यां च हेतुभ्यां "तत्त्वमसी" त्यनेन चाध्यक्षत्वरूपमात्मत्वमिति विभागः। अध्यक्षत्वरूपात्मत्वस्यैव त्वमहंशब्दार्थत्वात्। अहंममेति शब्दाभ्यां स्वस्वामिभावावगमात्। अत एव पातञ्जले "स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः" इति स्वस्वामिशब्दाभ्यां बुद्ध्यात्मानावुक्ताविति। अतएव च "अथात आत्मादेशोऽथातोऽहङ्कारादेश" इति श्रुत्योर्न पौनरुक्त्यम्, अर्थभेदात्। अत एव च "नास्मि न मे नाहमित्यपरिशेषम्" इति सांख्यकारिकायामपि न पौनरुक्त्यं च, नास्मीत्यनेन साक्षित्वस्य नाहमित्यनेन स्वाम्यस्य प्रतिषेधादिति। चेन्न[1]

एवं च कार्यकारणसंघाताध्यक्षो भवतीति कृत्वा स एवाहमित्युच्यते, यथा प्राणा इन्द्रियाध्यक्षतयैव तेषामात्मोच्यते। न चेश्वरस्य सम्बोध्यत्वप्रयोक्तृत्वाभावात् कथं त्वमहंशब्दार्थता स्यादिति वाच्यम्, वागिन्द्रियद्वारा जीवस्य प्रयोक्तृत्ववज्जीवाख्यकरणद्वारा ब्रह्मण एव संबोध्यत्वादिसकलव्यवहारप्रतिपादनायैव तत्त्वमसीत्युपदेशादिति। तथा च श्रुत्यन्तरम्—"नान्योऽतोऽस्ति द्रष्टा श्रोता मन्ता बोद्धे" त्यादिना परमात्मन एव दर्शनश्रवणादिसर्वव्यवहारकर्तृत्वमाह।

यत्तु आधुनिकास्तत्त्वमसीत्यादिवाक्ये जीवस्यैव त्वमहंपदार्थ निर्णये सति "को न आत्मे" त्यादिश्रुत्यन्तरानुसारिण्या लोकानुसारिण्याश्चाकाङ्क्षाया अनुपपत्तेः। लोके हि कोऽहमित्याकाङ्क्षयैवामुकस्त्वमसीत्युत्तरं दृश्यते नान्यथेति। अस्मन्मते तु अहंशब्दार्थत्वेन प्रयोक्तृसंघाताध्यक्षत्वादिना सामान्यरूपेणैवा[2] काङ्क्षायां तदित्यादिविशेषरूपेणोपदेश इति लौकिकी शब्दमर्यादा न हीयत इति। यदपि तत् त्वमेव त्वमेव तत् इति परस्परव्यतिहारवाक्यं तदन्योन्यवैधर्म्यलक्षणं भेदं निवर्तयति जीवस्यासंसारित्वप्रतिपादनाय परमात्मस्वरूपप्रदर्शनाय च, अन्यथा व्यतिहारवैयर्थ्यात्। "यच्चाप्येवं सकलं जातमपि सर्वं प्रतिष्ठितम्, स एव जीवः सुखदुःखभोक्ते" त्यादिवाक्यं तदविभागेनोपासनां विदधाति। यच्च—

विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते।
आत्मनो ब्रह्मणा भेदमसन्तं कः करिष्यति॥[3] इति विष्णुपुराणं,

तस्यायमर्थः—धर्माधर्मादिद्वारा विभागजनकेऽज्ञाने देहाद्यभिमाने ज्ञानेनात्यन्तमुत्सन्ने सति असन्तं कादाचित्कत्वेन वाचारम्भणमात्रं जीवब्रह्मविभागं पुनः कः करिष्यति कारणनाशादिति।

---

[1] चेन्न इति पाठोऽसंगतः प्रतीयते।
चेन्न इति पाठः उभयत्र ह० लि० पु० अपि वर्तते, स च "एवं चे" त्यग्रेतनपाठेन सहैव तत्र पठ्यते।

[2] "सामान्यरूपेणैवाकाक्षायां" इत्येकतर ह० लि० पुस्तकानुसारी पाठ एव सम्यक् वाक्यज्ञायामित्यन्यतर ह० लि० पु०, मु० पु० च पाठोऽसङ्गतः।

[3] अं० ६ अ० ७ श्लो० ९४।

यच्च—यदि जीवः पराद् भिन्नः कार्यतामेति सुव्रत ।
अचित्त्वं च प्रसज्येत घटवत् पण्डितोत्तम ॥ इति गौतमीयतन्त्रम्, तस्याप्ययमर्थः—यदि जीवः पराद् भिन्नः परादत्यन्तं भिन्नः परस्यानंश इति यावत्, तथा प्रलयकालीनचेतनाद्वैतश्रुत्यनुरोधेन जीवस्य कार्यत्वं स्यात् प्रकृत्यादिवदभेदे च घटवज्जडत्वमेव प्रसज्यत इत्यर्थः । "क्षेत्रज्ञं चापि मां विद्धि" इत्यादिवाक्यं चांशांश्य-विभागपरम् । एवमन्यान्यपि जीवब्रह्माभेदवाक्यान्यनयैव दिशा यथायोग्यं प्रकरणा-नुसारेणांशांश्यभेद-ब्रह्मात्मत्व-सामान्याभेदैस्तृतीयसूत्रे वक्ष्यमाणेन शक्तिशक्तिमदभे-देन वा व्याख्येयानीति दिक् ।

ये तु तार्किका अविभागलक्षणाभेदमपि त्यक्त्वा उपासनामात्रपरत्वेनैव अभेद-वाक्यानि नयन्ति, तन्मते भेदनिन्दाश्रुत्यनुपपत्तिः, अन्योन्याभावस्य पारमार्थिकत्वाद् विभागाविभागरूपयोश्च भेदाभेदयोः श्रुत्यर्थत्वानभ्युपगमादिति । अधिकं वा[1] भेदसाधकभेदसूत्रेषु वक्ष्यामः । तस्मात् सिद्धौ जीवेश्वरयोरंशांशिभावेन भेदाभेदौ विभागाविभागरूपौ । तत्राप्यविभाग एव आद्यन्तयोरनुगतत्वात् स्वाभाविकत्वात् नित्यत्वाच्च सत्यः । विभागस्तु मध्ये स्वल्पावच्छेदेन नैमित्तिको विकारान्तरवद् वाचारम्भणमात्रमिति विशेषः ।

तदेवमात्माद्वैतं व्याख्यातं सामान्यतो ब्रह्माद्वैतवाक्यानि च तृतीयसूत्रे व्या-ख्यास्यामः । तदेवमन्योन्याभावलक्षणभेदेन जीवादत्यन्तभिन्न एवेश्वरो ब्रह्मशब्दार्थ इति सिद्धम् ।

तत्राप्ययं विशेषः—जीवव्यावर्तनायैव जगज्जन्मादिकारणं तथा नित्येच्छादि-तन्मायाख्यशक्त्यौपाधिकमैश्वर्यं चोपलक्षणमेव ब्रह्मणः, ननु (न तु) ऐश्वर्यमपि ब्रह्मशब्दार्थान्तर्गतं "सत्यं ज्ञानमनन्तं ब्रह्म, तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते, साक्षी चेता केवलो निर्गुणश्च, अथात आदेशो नेति, अकर्ता चैतन्यं चिन्मात्रं सदि" त्यादिश्रुतिभिः,

ज्ञानमेव परं ब्रह्म ज्ञानं बन्धाय वे (ने) ष्यते ।
ज्ञानात्मकमिदं विश्वं न ज्ञानाद् भिद्यते परम् ॥ इत्यादिस्मृति-भिः, "चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमि" रित्यागामिसूत्रेण च चिन्मात्रस्यैव ब्रह्मजीवशब्दार्थत्वावगमात् । [2]उपाधिविशिष्टे शक्तिं कल्पयित्वा केवले लक्षणाक-ल्पनायां गौरवाच्च । ब्रह्मणीच्छादिव्यवहारस्य तु स्वस्वामितासम्बन्धेन अविवेकेन चोपपत्तेः । एवमेव परमात्मपरमेश्वरादिशब्दा अपि चैतन्यविशेष एव शक्ताः । "वदन्ति तत्तत्त्वविदः तत्त्वं यज्ज्ञानमद्वयं ब्रह्मेति परमात्मेति भगवानिति शब्द्यते" इत्यादिस्मृतिभ्यः । "अनामरूपश्चिन्मात्र" इत्यादिवाक्यैस्तु जन्मनिमित्तकनामैव निषिद्धमिति[2] ।

---

[1] 'व' इत्युभय ह० लि० पु० पाठः । 'च' इति पाठोऽपि सम्भवी ।

[2] अयं पाठः पुस्तकान्तरे न दृश्यते इति मु० शा० ।
पाठोऽयमुभय ह० लि० पु० वर्तते ।

चैतन्यं चात्मनो न गुणः, किन्तु द्रव्यविशेष एव धर्मधर्मिविभागशून्यश्चेतन इति चैतन्यमिति चोच्यते चैतन्यधर्मकत्वप्रतिषेधाय। यथा तेजो द्रव्यं प्रकाशकं प्रकाश इति चोच्यते, सदा सहोपलम्भेन लाघवादेकत्वस्यैव न्याय्यत्वात्। अहं जानामीति प्रत्ययस्यैव लौकिकत्वेनाधाराधेयभावांशे प्रमात्वमेव न भ्रमत्वं, लोकानां संघातेष्वेवाहमिति भ्रमात्। संघातस्य च चित्प्रकाशधर्मकत्वमस्त्येव, यथोल्मूकस्य तेजोधर्मकत्वं घटादेर्वा छिद्रधर्मकत्वमिति। विवेकिनां त्वहं जानामीति प्रत्ययो न भवत्येव, तत्प्रत्ययस्य श्रुतिस्मृतिमाया[1]नुसारित्वात्। विवेकिनामपि तथा व्यवहारस्तु राहोः शिर इतिवद् विकल्पमात्रो लोकानुसारीति न काप्यनुपपत्तिः। अधिकं तूपदेशरत्नमालाख्यप्रकरणे द्रष्टव्यम्। एवमेव वा शास्त्रेषु सर्वज्ञत्वादिवचनं व्यवहारानुसारेणोपपन्नमिति। तथा च पातञ्जलसूत्रम्—"द्रष्टा दृशिमात्र" इति। तदेतत्तृतीयाध्याये स्वयं वक्ष्यति "प्रकाशादिवच्चावैशेष्यमि" ति सूत्रेणेति।

एतेन ब्रह्मण आनन्दरूपत्वमपास्तम्, "नैकस्यानन्दचिद्रूपत्वे विरोधादि" ति सांख्यसूत्रोक्तन्यायाच्च। आनन्दो हि दुःखवत् स्वगोचरवृत्तिं विनाऽपि दृश्यत्वादप्रकाशरूपः, चैतन्यन्तु धर्मिग्राहकमानेन प्रकाशरूपतयैव सिद्धमिति प्रकाशाप्रकाशरूपतयोभयोर्विरोधः। चैतन्यस्य तु बुद्धिवृत्तिद्वारैव स्वविषयत्वं चैतन्यगोचरचैतन्यान्तराङ्गीकारेऽनवस्थानात्, साक्षात् स्वविषयत्वे च कर्मकर्तृविरोधादतश्चैतन्यस्य प्रकाशत्वमुपपन्नमिति। यदि वा चैतन्यवत् सुखस्यापि वृत्तिद्वारैव भानमभ्युपगम्यायं विरोधः परिह्रियते तथाऽपि एकज्ञानेऽन्याज्ञानाद् विरोधः स्यात् ज्ञातत्वाज्ञातत्वयोरेकदा विरोधात्, दुःखानुव्यवसायकाले सुखाज्ञानात् सानन्दसमाध्यादौ च चैतन्याज्ञानात् ज्ञानत्वसुखत्वरूपप्रकारभेदश्च त्वयाऽपि नेष्यते एकरसत्वश्रुतिविरोधात्। किं चैवं दुःखत्वमप्यात्मनः स्याल्लाघवादिति।

ननु "आनन्दो ब्रह्मेति व्यजानाद् विज्ञानमानन्दं ब्रह्म, आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त" इत्यादिश्रुतिबलत्वात् तर्कस्याप्रयोजकत्वं स्यादिति चेन्न, आनन्दादात्मनि भेदस्यापि श्रवणात् तर्कस्यैवादर्तव्यत्वात्! "यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतर" इति मनुवाक्येन संशयस्थले तर्कं विनाऽर्थावधारणस्य निन्दितत्वात्। भेदश्रुतयश्च "आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन, स एको ब्रह्मण आनन्दः, विज्ञानमयादन्योऽन्तर आत्मा आनन्दमयः" इत्याद्याः। किं बहुना, साक्षादेवानन्दरूपत्वप्रतिषेधोऽपि श्रूयते "नानन्दं न निरानन्दं, विद्वान् हर्षशोकौ जहाति" इत्यादिश्रुतिषु, स्मृतिषु च—

"अदुःखमसुखं ब्रह्म भूतभव्यभवात्मकम्।
तत्सन्तु चेतस्यथवापि देहे,[2]

---

[1] मायानुसारित्वात् इत्येव इ० लि० पु० पाठः।
मानानुसारित्वात् इति पाठो युक्तो भाति।

[2] अथवा विदेहे इति मु० पु० पाठः।

सुखानि दुःखानि च किं ममात्र।
मनसः परिणामोऽयं सुखदुःखोपलक्षणम्।" इत्याद्यासु।

अत्र नानन्दमित्यानन्दरूपताप्रतिषेधः, न निरानन्दमिति चौपाधिकानन्दधर्मकत्वानुमतिः। विद्वानिति वाक्ये च यत् सुखहानं श्रूयते तदात्मनः सुखरूपत्वे सति न घटते, आत्मनो हानोपादानासम्भवात्। यद्यपि विद्वानिति वाक्ये जीवस्यैव सुखहानं गम्यते तथाप्यंशांशिनोरेकरूपत्वात्, 'तत्त्वमेव त्वमेव तत्, इत्यादिवाक्यैर्जीवब्रह्मणोरत्यन्तमवैधर्म्यप्रतिपादनाच्च जीवस्य सुखप्रतिषेधेन ब्रह्मण्यपि सुखप्रतिषेधोऽवगम्यते। अदुःखमसुखमित्यत्र च कर्मधारय एव, बहुव्रीहौ लक्षणाप्रसङ्गात्।—सुखदुःखोपलक्षणः सुखदुःखधर्मक इत्यर्थः। अथवा सुखदुःखप्रभृतिरित्यर्थः।

एतेन आत्मन आनन्दरूपताप्रतिषेधान्मोक्षकाले सुखप्रतिपादकं वाक्यजातं दुःखनिवृत्तौ गौणं बोध्यम्, "तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलामि" त्यादिप्रयोगदर्शनेन दुःखनिवृत्तौ सुखशब्दस्य निरूढलक्षणासिद्धेः। तथा चोक्तं कपिलाचार्यैः— "दुःखनिवृत्तेर्गौणः, विमुक्ति (क्त) प्रशंसा मन्दानामि" ति सूत्राभ्यामिति। अथवा "सुखं दुःखसुखात्यय" इति परिभाषया सुखशब्दोऽत्र न गौणः। तस्मादिच्छादिवदेव नित्य आनन्दोऽपीश्वरे मायोपाधिक एव जीव इव बुद्ध्यौपाधिकः। आत्मनो निरुपाधिप्रियत्वं वा, सुखत्ववदात्मत्वस्यापि प्रेमप्रयोजकत्वात् दुःखनिवृत्तिरूपत्वाद् वा बोध्यम्।

यश्च ब्रह्मण आनन्दरूपताबोधकः शब्दः स "कामादिकं मन एवे" त्यादिश्रुतिवद् धर्मधर्म्यभेदपरः। [1]अथवा परमप्रियताबोधनाय रूपकमात्रः पूर्णानन्दत्वादिबोधनायाकाशशब्दवत्। आत्मनश्च परमप्रियत्वं "मा न भूवं भूयास" मित्यनन्यशेषोऽनुराग[1] इति मन्तव्यम्। अत एवाचार्यो वक्ष्यति "आनन्दादयः प्रधानस्ये" ति। कूर्मपुराणे "शिवस्य परमा शक्तिर्नित्यानन्दमयी ह्यहमि" ति प्रकृतिदेवतायाः पार्वत्या वाक्यमिति। न च प्रकृतावपि पृथक् सुखान्तरं कल्प्यं तथा सति तेनैव सुखानुभवोपपत्तौ सत्यामात्मसुखान्तरकल्पनावैयर्थ्यात्। बुद्धिवृत्तिरूपज्ञानादतिरिक्तं पुनरात्मस्वरूपं ज्ञानं कल्प्यमेव, अन्यथा बुद्धिवृत्तेः साक्ष्यत्वासम्भवादिति।

एतेन मोक्षस्य सुखरूपत्वमप्यपास्तम्, आत्मनश्च सुखासंबधात् उपाधिधर्माणामत्यन्तोच्छेदाच्च। किं चात्मनः सुखरूपत्वेऽपि मोक्षावस्थायां तस्य भोग्यत्वानुपपत्त्या पुरुषार्थत्वं न संभवति, स्वस्य साक्षात् स्वविषयत्वे कर्मकर्तृविरोधात्, उपाधेश्चात्यन्तं विलयादिति। मोक्षेऽप्यानन्दभोगवचनं तु ब्रह्मलोकाख्यगौणमुक्तिपरं बोध्यम्।

ननु तर्ह्यात्यन्तिकमोक्षे कः पुरुषार्थः स्यात्? दुःखनिवृत्तिरेव पुरुषार्थः स्यात् "तरति शोकमात्मवित्, अशरीरं वावसन्तं प्रियाप्रिये न स्पृशतः, विद्वान् हर्षशोकौ जहाती" त्यादिश्रुतेः। अविद्यानिवृत्त्यादीनां पुरुषार्थत्ववचनं च तद्धेतुतयैव, लोके सुखदुःखाभावयोरेव स्वत इष्यमाणत्वादिति।

[1] अयं पाठः २ पु० नास्तीति मु० शा०। ह० लि० पु० पाठोऽयं वर्तते।

ननु दुःखाभावस्यापि पुरुषार्थत्वं न संभवति, दुःखस्यानात्मधर्मत्वेनात्मनो नित्यनिर्दुःखत्वादिति, उच्यते—सांख्यादिमते भोग्यत्वेनैव सुखदुःखयोर्हेयोपादेयत्वं स्वनिष्ठत्वेन अहं सुखं भुञ्जीयेत्यादिकामनादर्शनात्। भोगश्च साक्षात् स्वप्रतिविम्बितयोः सुखदुःखयोः साक्षात्कारः स चात्मनिष्ठ एव। तस्य वा ज्ञानेनात्यन्तोच्छेदः संभवत्येव, उपाधिविलयेन उपाधिधर्मदुःखादिप्रतिबिम्बासंभवादिति।

ननु "बुद्धेर्भोग इवात्मनी" त्यादिवचनाद् बुद्धेरेव भोगो नात्मन इति चेन्न, भोगस्य द्वैविध्यात्। भोगो हि 'भुजि पालनाभ्यवहारयो'रित्यनुशासनात् स्वबाह्यवस्तुना स्वपुष्टिः, यथाऽन्नेन स्थूलदेहस्य भोगः। तथा [1]त्वसर्ववतूनां सुखदुःखमोहात्मकत्वाद् विषयगतसुखदुःखाभ्यां बुद्धेः सुखदुःखयोः पोषणं बुद्धेर्भोगः, दुग्धमाधुर्यस्येव शर्करामाधुर्येण पोषणम्। अयमेव वा भोगश्चेतने प्रतिबिम्बति, तस्याविकारित्वात्, स एव पुरुषस्य भोगः सुखदुःखसाक्षात्काररूपो भवति। न तु सुखदुःखसाक्षात्काररूपो गौणभोगोऽपि बुद्धेः संभवति, तस्या अचेतनत्वात् पुरुषकल्पनावैयर्थ्यापत्तेश्चेति। अतएव सांख्याः "पुरुषोऽस्ति भोक्तृभावादि" त्याहुः। अत एव च गीतायाम्—

कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते॥ इति।

नन्वस्तु जीवस्य दुःखभोगस्तथापि तन्निवृत्तेः पुरुषार्थत्वं भवन्मते न घटते, परमार्थतो जीवस्याप्यनहंत्वस्वीकारादिति, मैवम्—स्वभोक्तृप्रयोजनज्ञानमेव बुद्धेः प्रवृत्तौ कारणम्। अन्यथा अस्य चेतनस्येदमुपकारकमितीदन्तादिरूपेण ज्ञानात् प्रवृत्त्यनुपपत्तेः। अतः परमार्थतोऽनात्मत्वेऽपि भोक्तृत्वानपायात् तत्तज्जीवार्थं तत्तद्बुद्धेः प्रवृत्तिर्युक्तैवेति। तस्माच्चिन्मात्रस्वरूपे एवांशांशिनो जीवब्रह्मणी इति सिद्धम्।

सोऽयं ब्रह्ममीमांसासिद्धान्तः संक्षेपेण पुनः स्मार्यते—"तत्त्वमसि अहं ब्रह्मास्मि" इत्येवंविधान्यत्र वेदान्तमहावाक्यानि च न जीवब्रह्माभेदं बोधयन्ति। नाप्येतेषु वाक्येषु त्वमहंशब्दार्थो जीवः, किन्तु सन्धानान्तर्गतस्य पञ्चविंशतितत्त्वस्य मध्ये कोऽहंशब्दार्थ इत्याकाङ्क्षायां प्रवृत्ततया 'तत्त्वमस्यादि' वाक्यानि ब्रह्मादिश्य त्वमहंशब्दार्थत्वं विदधति, को घटः? कम्बुग्रीवादिमान् घट इत्यादिवाक्यवत्। तदनन्तरमेव च शिष्यस्त्वमहंशब्दार्थमवधारयति, ब्रह्मैव मुख्यस्त्वमहंशब्दार्थो न पञ्चविंशतितत्त्वानीति। न पुनर्वाक्यप्रवृत्तेः पूर्वं विशिष्य त्वमहंशब्दार्थोऽवधृतः। तथा सति कोऽहमित्याकाङ्क्षानुपपत्तेः, "को न[2] आत्मा किं ब्रह्म" त्यादिश्रौतजिज्ञासावाक्यानुपपत्तेश्च। उद्देश्यस्य तु ब्रह्मणो ज्ञानं पूर्वमपेक्षत एव कम्बुग्रीवादिमद्वस्तुज्ञानवदिति।

तत्र च उद्देश्यस्वरूपावधारकतया विवेकरूपाणि जीवब्रह्मवाक्यानि महावाक्यानां शेषभूतानि। अंशांश्यभेदवाक्यानि तु विधेयस्यात्मत्वस्योपपादकानि। तथा महा-

---

[1] "तथा त्वसर्ववस्तूनाम्" इत्येव पाठ उभयत्र ह० लि० पु वर्तते।
तथा स्वसर्ववस्तूनाम् इति पाठो युक्तो भाति।

[2] "कोऽत आत्मा" इत्येव पाठ उभयत्र ह० लि० पु०, मु० पु० च वर्तते।

वाक्यार्थसाक्षात्कारे सत्त्वशुद्धिद्वारकोपासनाद्वाराध्यभेदवाक्यानि शेषाणीति मन्तव्यम्। अन्यथा वेदान्तानां स्वतन्त्रनानार्थपरत्वेनार्थभेदापतेः, अभेदवाक्यानां स्वातन्त्र्यानुपपत्तेश्च। साक्षादविद्यानिवर्तकानुपपत्त्या स्वातन्त्र्येण मोक्षाख्यफलानुपयोगात्। अत एव [1]त्वाचार्यो ब्रह्मण्यात्मत्वज्ञानमेव विद्यात्वेन सिद्धान्तयिष्यति "आत्मेति तूपयन्ति चे" ति सूत्रेण, न तु ज्ञानान्तरमिति।

सांख्यादिभ्यश्चास्य दर्शनस्यायं विशेषः, यत् श्रुत्यवान्तरवाक्यार्थो व्यावहारिकात्मा जीवस्तेषां विषयः। अस्य तु जीवाद्यात्मत्वबाधेन पारमार्थिक आत्मा विषय इति, "[2]नान्योऽतोऽस्ति द्रष्टे" त्यादिश्रुतिशतेभ्यः, स्वामित्वस्वतन्त्रत्वक्षेत्रज्ञत्वादिरूपस्य ब्रह्मण्येव देशकालभेदेनासंकुचितत्वाच्चेति[2]।

उद्दिष्टं लक्षितञ्च ब्रह्म प्रमाणेन परीक्षणीयमित्यादौ सामान्यतः प्रमाणमुपन्यस्यते—

## शास्त्रयोनित्वात् ॥३॥

शास्त्रं योनिर्मूलप्रमाणं यस्मिन्निति शास्त्रयोनि। तज्जगज्जन्मादिकारणं ब्रह्म शास्त्रमूलकत्वात् सिध्यतीत्यर्थः। शास्त्रं वेदान्ताः तच्छेषभूताः स्मृतयश्च, तैरत्र ब्रह्मणो विचारणीयत्वात्। तानि च शास्त्राणि "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति तद् विजिज्ञासस्व तद्ब्रह्मे" त्याद्याः श्रुतयः, स्मृतयश्च—

> परः[3] पराणा परमः परमात्मात्मसंस्थितः।
> नामरूपादिनिर्देशविशेषणविवर्जितः ॥
> तद्ब्रह्म परमं नित्यमजमव्ययमक्षयम्।
> एकस्वरूपं च सदा हेयाभावाच्च निर्मलम् ॥
> स च विष्णुः परं ब्रह्म यतः सर्वमिदं जगत्।
> जगच्च यो यत्र चेदं यस्मिंश्च लयमेष्यति ॥

इत्याद्याः। अत्र शास्त्रादिति वक्तव्ये शास्त्रयोनित्वादित्युक्तं शास्त्राविरुद्धानुमानादीनां ग्रहणाय। शास्त्रं हि ब्रह्मणि मूलं प्रमाणम्" तं त्वौपनिषदं पुरुषं पृच्छामि" इत्यादिश्रुतेः। औपनिषदम् उपनिषन्मूलकप्रमाणकम् उपनिषन्महातात्पर्यविषयं वा, "सर्वे वेदा यत् पदमामनन्ति, वेदैश्च सर्वैरहमेव वेद्यः" इति श्रुतिस्मृतिभ्याम्।

---

[1] अत एव स्वाचार्य" इत्येव पाठ उभयत्र ह० लि० पु०, मु० पु० च वर्तते।

[2] नान्योऽतोऽस्तीत्यादि पाठः उभयत्रैव ह० लि० पु० वर्तते।
अयं पाठः २पु० नास्तीति मु० ग्रा०।

[3] परः पराणां परमः" इतिपाठ उभयत्र ह० लि० पु० वर्तते।
परं पराणाम् इति मु० पु० पाठो न युक्तः।

जीवा[1]नाञ्चावान्तरतात्पर्यविषयत्वात् प्रत्यक्षानुमानादिविषयत्वाच्च नौपनिषदत्वम्। शास्त्रानन्तरञ्च तन्मूलकमनुमानं योगिप्रत्यक्षादिकमपि ब्रह्मणि प्रमाणं भवति "आत्मा वा अरे द्रष्टव्यः" श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इत्यादिश्रुतेः। एभिस्त्रिभिरेव प्रमाणैरस्माभिर्ब्रह्म परीक्षणीयमित्यर्थः। तत्र श्रुतयः स्मृतयश्च प्रायेण प्रमाणत्वेनोपन्यसनीयाः, कदाचिच्च संशयस्थलेऽनुमानमप्युपन्यसनीयम्, "उपपत्तेश्चे" त्यादिसूत्रैः। अनुमानेनाप्यनवगम्ये च सन्दिग्धार्थे योगिप्रत्यक्षमप्याचारादिमुखेनोपन्यसनीयम्, "आचारदर्शनाच्चे" त्यादिसूत्रैरिति।

[2]तत्र ब्रह्मानुमानस्यायं प्रकारः—बुद्धिप्रभृतिकार्यम् उपादानगोचरप्रत्यक्षजन्यम् कार्यत्वाद् घटादिवदिति। अत्र चोपादानगोचरप्रत्यक्षवृत्तेरेव कार्ये हेतुत्वं लाघवात् न तु चैतन्यस्यापि गौरवात्। तदा बुद्ध्यादीनामुपादानगोचरवृत्तीच्छाकृतिमज्जन्यत्वेन कारणसत्त्वस्य सिद्ध्यनन्तरं, तत्कारणसत्त्वं परस्य भोग्यम् इच्छादिमत्त्वाज्जीवोपाधिवदिति कारणसत्त्वभोक्तृतयेश्वरोऽनुमेय इति।[2]

ननु "यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे" त्यादिश्रुतिभिर्ब्रह्मणः शब्दाद्यगोचरत्ववचनात् कथं ब्रह्मणः शास्त्रादिप्रमाणकत्वमुच्यत इति, उच्यते—वागादीनां लौकिकमनसश्च ब्रह्माशेषगोचरत्वं प्रतिषेधति तथाविधं शास्त्रजातम् न तु शब्दादीनां सामान्यगोचरत्वमपि। नापि योगजधर्मसंस्कृतमनोजन्यसाक्षात्कारगोचरत्वमपि। "स यथा हि [3]हननं प्रमुच्य प्रब्रूयादेतां दिशं गान्धारा एतां दिशं व्रजेति, स ग्रामाद् ग्रामान्तरं व्रजन् पण्डितो मेधावी गान्धारानेवोपसंपद्येतैवमेवेहाचार्यवान् पुरुषो वेदे" ति श्रुतौ शब्दादिमात्रेण सामान्यतो ज्ञाने जाते योगेन भूमिकाक्रमात् स्वयं मनसा ब्रह्म अशेषविशेषतः साक्षात्क्रियत इत्यवगमात्। अन्यथा "वेदैश्च सर्वैरहमेव वेद्यः, मनसैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवं तद् विष्णोः परमं पदं सदा पश्यन्ति सूरय" इत्यादिश्रुतिविरोधापत्तेरिति।

ननु शब्दादेरशेषज्ञानं क्वापि प्रसक्तमेव नास्ति, शब्दानुमानयोः सामान्यमात्रगोचरत्वात्, तत्कथं "यतो वाचो निवर्तन्त" इति ब्रह्मण्यसाधारण्येन वचनमिति चेत्, सत्यम्, तथापि पुरोवर्तिष्वनेकवस्तुषु मध्ये को घट इति जिज्ञासोरयं घट इति वृद्धवाक्यतो घटस्याशेषविशेषज्ञानं जायते। ब्रह्मणस्त्वतीन्द्रियतया तादृशमपि ज्ञानं न संभवतीति श्रुतेराशयः। यथोक्तविभागश्च श्रुत्यैव कृतः। यथा "न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा। ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यति

---

[1] "जीवावान्तरतात्पर्यविषयत्वात्" इतिपाठ एकस्मिन् ह० लि० पु०, मु०पु० च वर्तते। "जीवानाञ्चावान्तरतात्पर्यविषयत्वात्" इति पाठो द्वितीये ह० लि० पु० वर्तते, स च युक्तः।

[2] अयं पाठ उभयत्र ह० लि० पु० वर्तते। अयं पाठः २ पु० नास्तीति मु० शा०।

[3] "यथाभिहननं" इत्येकतर ह० लि० पु० पाठः।

निष्कलं ध्यायमान" इति। देवैर्मनआदिभिरित्यर्थः, शक्तिशक्तिमतोरभेदादिति। तमिमं विभागं सूत्रकारोऽपि करिष्यति "तदव्यक्तमाह हि, अपि संराधने प्रत्यक्षानुमानाभ्यामि" ति सूत्रद्वयेन। तदेवं श्रुतिस्मृतिन्यायसिद्धविभागेन श्रुत्योरन्योन्यमविरोधे सति वृत्तिव्याप्यत्वफलव्याप्यत्वभेदेन स्वकल्पितेन यदाधुनिकानामविरोधकल्पनं तदनुचितमिति प्रतीमः।

ननु निर्विशेषचिन्मात्रे ब्रह्मणि कथं योगिमनोग्राह्यो विशेष इत्युच्यत इति चेत्, न, सर्वसंकरापत्त्या चेतनान्तरप्रधानतद्गुणादिष्ववृत्तस्वरूपविशेषस्य योगिगम्यस्यावश्यमभ्युपेयत्वात्, अन्ततः स्वस्वोपाधिप्रतिविम्बानामेवातीतादिसाधारणानां चेतनेषु विशेषत्वाच्च। तैश्चावस्तुभूतैर्न निर्विशेषत्वक्षतिः। निर्विशेषवाक्यानां जीवविलक्षणगुणादिरूपविशेषप्रतिषेधकत्वाद् देशकालावस्थादिनिमित्तकविशेषप्रतिषेधकत्वाद् वा।

नन्वस्तु विशेषस्तथापि स विशेषः शब्दागोचरोऽतीन्द्रियश्च कथं योगिमनसाऽपि गृह्येतेति चेन्न, योगजधर्माणां शास्त्रसिद्धाचिन्त्यशक्तित्वात् धर्मान्तरवत्। कथमन्यथा "भुवनज्ञानं सूर्ये संयमात्" इति योगसूत्रमुपपद्येत। ननु संयोगादिप्रत्यासत्त्यभावात् कथं व्यवहितादिज्ञानं योगिनां स्यादिति चेन्न, मनोवैभवमते सर्वत्रैव मनःसंयोगसत्त्वात् योगजधर्मस्य च वृत्तिप्रतिवन्धकतमोमात्रनाशकत्वात्। मनःपरिच्छिन्नतामते च योगजधर्मस्यैव प्रत्यासत्तित्वकल्पनादिति।

आधुनिकास्तु "यतो वाचो निवर्तन्त" इत्यादिवाक्यैरनुभवाख्यफलव्याप्यत्वं प्रतिषिध्यते। मनसैवानुद्रष्टव्यमित्यादिभिश्चाज्ञाननाशाय ब्रह्मणि वृत्तिव्याप्यत्वं स्वीक्रियत इत्यविरोध इत्याहुः।

तन्न[1], एतादृशकल्पनायां प्रमाणादर्शनात्। किं च व्यवहारत्वावच्छेदेनैवानुभवविषयकत्वमेव प्रयोजकं, बुद्धिवृत्तिगोचरव्यवहारेऽनवस्थाभयेन वृत्तिविषयत्वस्याप्रयोजकत्वात्। घटादिभानार्थं चेतने तत्संबन्धायैव वृत्तिसिद्धेः न तु घटादिव्यवहारार्थमपि। तस्या अपि वाह्यव्यवहारा[2]जनकत्वकल्पनेन च गौरवात्, जडत्वेन घटाविशेषाच्च। तथा च ब्रह्मणोऽनुभवव्याप्यत्वानङ्गीकारे विदुषां ब्रह्मणि व्यवहारो न स्यादिति।

यत्तु स्वप्रकाशत्वादेव ब्रह्मणि व्यवहारो भवति तद्विषयकज्ञानस्य तद्व्यवहारहेतुत्वकल्पने गौरवात्। वृत्तिव्याप्यत्वन्तु व्यवहारप्रतिबन्धकाज्ञाननिवृत्त्यर्थमपेक्ष्यत इत्युच्यते, तदप्यसारम्, समानविषयकत्वप्रत्यासत्त्या ज्ञानत्वेनैव व्यवहारत्वावच्छिन्नं प्रति कारणत्वात्। दृष्टं विहायात्मव्यवहारे अदृष्टकल्पनानौचित्याच्च। अज्ञानाख्यतमसो व्यवहारप्रतिवन्धकल्पने प्रमाणाभावाच्च, ज्ञानाभावादेव व्यवहारासावसंभवात्।

---

[1] "तत्र" इति उ० ह० लि० पुस्तकयोः, मुद्रितपुस्तके च पाठो न समीचीनः।

[2] "व्यवहाराजनकत्वकल्पने व गौरवात्" इति एकस्मिन्" ह० लि० पु० पाठः। "व्यवहा जनकत्वकल्पने व गौरवात्" इति द्वितीय ह० लि० पु० पाठः। अत्र "व्यवहारजनकत्वकल्पने च गौरवात्" इति पाठो युक्तः।

सुषुप्त्यादौ ज्ञानानुत्पत्त्यर्थं तमसो वृत्तिप्रतिबन्धकत्वस्यावश्यकल्प्यतया पुनर्व्यवहारप्रतिबन्धकत्वकल्पनावैयर्थ्याच्चेति ।

स्यादेतत्, ब्रह्मणः स्वप्रकाशत्वान्यथानुपपत्त्या कर्मकर्तृविरोधेन च ब्रह्मणोऽनुभवरूपस्य व्यवहारे स्वविषयानुभवो न हेतुः संभवतीति, अत्रोच्यते, [1]अज्ञेयत्वरूपं तावत् स्वप्रकाशत्वमस्माभिर्नाभ्युपगम्यते । नापि जीवब्रह्मणोरखण्डत्वं येन जीवस्य ब्रह्मज्ञाने कर्मकर्तृविरोधः स्यात् । अखण्डैकात्म्यमतेऽपि सांख्ययोगोक्तया जीवस्य स्वसाक्षात्कारप्रक्रियय़ैव ब्रह्मसाक्षात्कारेऽपि नास्ति कर्मकर्तृविरोधः, स्वशास्त्रे ज्ञानोत्पत्तिप्रक्रियाया अभावेन तयोः प्रक्रियैव ग्राह्याऽन्तरङ्गत्वात् ।

सांख्ययोगयोश्चेत्थं ज्ञानोत्पत्तिप्रक्रिया—विषयेन्द्रियसंयोगादिना वस्त्रमालिन्यस्येव बौद्धतमोद्रव्यस्यापसारणे सति यथा निर्मलवस्त्रे कुसुम्भसंयोगात्तु कुसुम्भाकारता भवति, तथैव निर्मले बुद्धिसत्त्वे विषयसंयोगाद् विषयाकारता भवति । सा बुद्ध्यवस्था विषयाकारा बुद्धिवृत्तिरित्युच्यते । सा तु स्वप्नध्यानादौ बाह्यविषयाभावकाले विषयतुल्या बुद्ध्यवस्थाऽन्तरेवोपलभ्यमाना केनाप्यपलपितुं न शक्यते । सा वृत्तिः प्रमाणम् "प्रमाणविपर्ययविकल्पनिद्रास्मृतय" इति योगसूत्रेण वृत्तिविभजनात् । वृत्तेश्च प्रमाणत्वमनुभवाख्यफलायोगव्यवच्छिन्नत्वात्, रथारूढस्य ग्रामसम्बन्धे रथस्येव चेतनस्य विषयसंबन्धे द्वारत्वाच्च । "[2]द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्य" इति योगसूत्रात् विभुत्वेऽप्यात्मनो नित्यचैतन्याविकारिणो मलिनबुद्धिप्रतिबिम्बेन प्रतिबन्धाद् विशुद्धबुद्धिद्वारतां विना विषयान्तरप्रतिबिम्बधारणाऽसामर्थ्यात् । अतएवात्मावरणार्थं चित्तविभुत्वमभ्युपगतं पतञ्जलिना । तथा च श्रुतिः "सुषुप्तिकाले सकले विलीने तमोऽभिभूतःसुखरूपमेती" त्यादिः[2] । सा च वृत्तिर्जायमानेव चेतने प्रतिबिम्बिता भवति "वृत्तिसारूप्यमितरत्रे" ति योगसूत्रात् । ततश्च स्वप्रतिबिम्बितां विषयोपरक्तां तां बुद्धिवृत्तिं स एव प्रतिबिम्बाधिष्ठानचेतनोऽवभासयति, यथा स्वप्रतिबिम्बितकुसुम्भरक्तवस्त्रं स्फाटिकभित्तिः "चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनमि" ति योगसूत्रात् । तदाकारापत्तौ बुद्धिसमाकारापत्तौ सत्याम् अप्रतिसंक्रमाया बुद्धावसञ्चारिण्या असङ्गाया[3] अपि चितेः स्वीयोपाधिबुद्धिसंवेदनं भवतीत्यर्थः । तदुक्तम्—

तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः ।
इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः ॥ इति ।

तथा च चेतने प्रतिबिम्बनादेव बुद्धिवृत्तितद्विषययोर्भानं मरुमरीचिकाध्यस्त-

[1] "अज्ञेयत्वरूपम्" इत्येकस्मिन् ह० लि० पु० पाठो युक्तः ।
"अक्षेरत्वरूपम्" इत्यपरस्मिन् ह० लि० पुस्तके, मु० पुस्तके च पाठोऽयुक्तः ।

[2] अयं पाठः उ० ह० लि० पु० नास्ति ।
अयं पाठः पुस्तकान्तरे दृश्यते इति मु० शा० ।

[3] "प्रसङ्गाया" इति मु० पु० पाठोऽसाधुः ।

जलस्येव मरीचिना प्रकाशनमिति। न ह्यन्यथा विभोश्चित्स्वरूपस्यात्मनः सदा सर्वसंयोगेन कादाचित्कं परिच्छिन्नं च विषयसंवेदनं केनाप्युपपादयितुमञ्जसा शक्यते। अस्मदुक्तप्रकारे तु बुद्धिवृत्तेः कादाचित्कत्वेनाप्रतिबन्धात् विषयप्रतिबिम्बस्य कादाचित्कत्वं परिच्छिन्नत्वं चोपपद्यते। [1]उपाधीनां च यावदात्मभाविम्बितया तत्प्रतिबिम्बस्यानादित्वमिति। यच्च बुद्धौ चेतनस्य प्रतिबिम्बनं तद् बुद्धावहमितिप्रत्ययस्य विषयः। तथा सत्यात्मनि बुद्धिवृत्त्यारोपे च प्रयोजकं दर्पणादौ प्रतिबिम्बद्वारैव मुखादिषु दर्पणमालिन्याद्यारोपदर्शनात्। सत्त्वोपाधौ चेतनस्य प्रतिबिम्बो न बुद्धितद्विषयभाने प्रयोजकः[1]।

यथा च सन्निकर्षसाम्येऽपि चक्षू रूपमेव गृह्णाति न रसं तथैव सर्वसंयुक्तोऽप्यात्मा स्वबुद्धिवृत्तिमेव साक्षाद्गृह्णाति नेतरदिति फलबलात् क्लृप्तम्। अर्थाकारतयैव चार्थग्रहणं, सा च कूटस्थे प्रतिबिम्बान्नान्यद्युक्ता। अतो बुद्धिवृत्तेरेव चेतने साक्षात् प्रतिबिम्बनसामर्थ्यं नेतरस्येति। तस्मादर्थोपरक्तवृत्तिस्फुरणार्थं चेतने तत्प्रतिबिम्बः सिध्यति।

ननु वृत्तिरेव चैतन्यस्य विषयताख्यः सम्बन्धोऽस्तु लाघवात्, किमर्थं चेतने प्रतिबिम्बः कल्प्यत इति चेन्न, अर्थसारूप्यस्यैव ग्रहणरूपतया बुद्धिस्थले सिद्धत्वाच्च। किं चोक्तैर्योगसूत्रादिभिः प्रतिबिम्बसिद्धौ केवलतर्का अप्रतिष्ठादोषपराहता एव, सन्दिग्धार्थे एव न्यायप्रवृत्तेरिति। तदेवं चैतन्ये वृत्ति[2] प्रतिबिम्बःसिद्धः। यच्च बुद्धौ चेतनस्य प्रतिबिम्बनं तद् बुद्धेश्चिच्छायापत्तिरित्युच्यते। तच्च बुद्धेर्घटाद्याकारवच्चैतन्याकारपरिणामः। स च चैतन्यभानार्थं कल्प्यते, साक्षात् स्वदर्शने कर्मकर्तृविरोधात्। तदेव चात्मनि बुद्धिवृत्त्यारोपे च प्रयोजकं, दर्पणादौ मुखादिप्रतिबिम्बद्वारैव मुखादिषु दर्पणमालिन्याद्यारोपदर्शनात्। [3]उपाधौ चेतनस्य प्रतिबिम्बस्तद्विषययोर्भासक इति केचित्[3]। तत्र प्रतिबिम्बस्य तुच्छतया भासकत्वायोगात्, आरोपितवह्नेर्दहनपचनादिकार्यादर्शनात्। यश्च सूर्यादिप्रतिबिम्बेऽपि प्रकाशो दृश्यते स किरणोपाधिकः।

न च बुद्धिगतप्रतिबिम्ब एव चेतनविषययोः सम्बन्धविधया भानप्रयोजकोऽस्त्विति वाच्यम्, जलगतप्रतिबिम्बत्वादीनां सूर्यतत्प्रकाशयोः संबन्धत्वादर्शनात्। प्रकाशके प्रकाश्यप्रतिबिम्बस्य सम्बन्धविधया भानहेतुत्वं तु मरीच्युदकादौ। अतः संशयस्थले अणोरपि विशेषस्याध्यवसायकरत्वात् दृष्टानुसारेण चेतनगतप्रतिबिम्ब एव भानहेतुरिति। जीवानां च सर्वेषामेव विभुत्वेऽपि स्वस्वोपाधिभिरेव परस्परप्रति-

---

[1] अयं पाठो द्वयोरपि ह० लि० पु० नास्ति।

[2] "चैतन्ये वृति बिम्ब" इति मु० पुस्तके, एकस्मिन् ह० लि० पुस्तके च पाठोऽयुक्तः। चैतन्ये वृत्तिप्रतिबिम्ब इत्यन्यस्मिन् ह० लि० पु० पाठः शुद्धः।

[3] अयं पाठः उभयत्र ह० लि पु० वर्तते।
अयं पाठः पुस्तकान्तरे नास्ति इति मु० शा०।

बिम्ब इत्यत्रानादित्वान्न काप्यनुपपत्तिरिति। तदेतद् बुद्धिपुरुषयोः परस्परप्रतिबिम्बनं वेदान्तिभिः परस्पराध्यास इत्युच्यते।

यत्तु अनयैव रीत्या चैतन्येऽध्यस्ततया जगतः प्रकृतिपर्यन्तस्य सिद्धत्वाच्चिदेवैकं तत्त्वम्, अन्यत् सर्वं दृश्यजातं मरीच्युदकादिवत्तुच्छमित्याधुनिका विवर्तवादिनोऽभ्युपगच्छन्ति, तन्न, तथापि बिम्बरूपाणां विषयाणामेव प्रतिबिम्बरूपेणैव भानात् प्रतिबिम्बरूपतया चैतन्ये बाधेऽपि स्वतो बाधाभावादिति। तदुक्तं सांख्ये "[1]सदसद्बाधाबाधाभ्याम्" इति।

एतेनात्मस्वरूपमपि करतलामलकवत् प्रतिपादितम्। तथाहि—यदेतद् घटपटाद्याकारैरवभासमानं चैतन्यम् एतदेवाकारविवेकेनात्मतत्त्वं भवति स्वप्रतिबिम्बितमुखादिविवेकेन दर्पणतत्त्वमिव "तदा द्रष्टुः स्वरूपेऽवस्थानमि" ति योगसूत्रात्। तदा वृत्तिनिरोधकाले स्वरूपावस्थितिश्चेतनस्येत्यर्थः। तथा चोक्तम्—

> [2]अनात्माखिलशैलादिप्रतिबिम्बे हि यादृशी।
> स्याद्दर्पणे दर्पणता केवलात्मस्वरूपिणी॥
> जगत्त्वमहमित्यादौ प्रशान्ते दृश्यसंभ्रमे।
> स्यात्तादृशी केवलता स्थिते द्रष्टर्यवीक्षणे॥ इति।

दृश्यसम्भ्रमे [3]दृश्यादरे दृश्याकारबुद्धिवृत्ताविति यावत्। यच्चैतत् पुरुषे विषयोपरक्तं बुद्धिस्फुरणमुक्तम्, एतदेव प्रमाणस्य फलं प्रमेति चोच्यते। पुरुषार्थं हि करणानां प्रवृत्तिरिति। तदेतदुक्तं पातञ्जलभाष्ये व्यासपादैः—"फलमविशिष्टः पौरुषेयश्चित्तवृत्तिबोध" इति। अविशिष्टो वृत्त्या सह समानाकारो वृत्तेः प्रकाशः पुरुषनिष्ठः फलमित्यर्थः। इदं च फलं सांख्यादिभिश्चैतन्यप्राधान्येनोच्यत इति कृत्वा तैर्ज्ञानस्वरूप एवात्मोच्यते। वैशेषिकादिभिस्तु ज्ञानस्योत्पत्तिविनाशप्रत्ययानुरोधात् यथोक्तप्रतिबिम्बप्राधान्येनैव ज्ञानाख्यं फलमुक्त्वा तस्यात्मधर्मत्वमुच्यते "अहं जानामीति" प्रत्ययानुरोधात्, अस्मदुक्तफलं चानुव्यवसाय इति तैरुच्यते इति विशेषो मन्तव्यः।

या चेयं ज्ञानोत्पत्तिप्रक्रिया बहिर्विषयेष्ववधारिता एषैवात्मन्यपि प्रत्येतव्या, एकरूपकल्पनायाः सर्वथौचित्यात्। तथाहि, शास्त्रादिना योगजधर्मेण वा बुद्धेस्तमोऽभिभवे सति निर्मलायां बुद्धावात्माकारा वृत्तिर्जायते "अहं ब्रह्मास्मी" त्यादिरूपा। सा प्रमाणम्। सा च वृत्तिर्जायमानैव चेतने प्रतिबिम्बिता सती भासते। तदेतत् पुरुषनिष्ठं फलमात्मज्ञानमुच्यते। घटादिज्ञानाच्चात्मज्ञानस्यायं विशेषो यदात्मतत्त्वाकारवृत्त्या अभिमानो निवर्त्यते, घटाद्याकारबुद्धिवृत्तिभिस्तु मिथ्याज्ञानं न नियमेन निवर्त्यत इति। चेतनप्रतिबिम्बितबुद्धिवृत्तिव्याप्यत्वमेव बाह्याभ्यन्तरसाधारणं ज्ञेयत्वं बोध्यम्।

---

[1] "सदसद्बाधाबाधात्" इति सूत्रस्वरूपं पुस्तकान्तरे दृश्यते।

[2] "अनात्मा" इत्येतोभय ह० लि० पु० पाठः।

[3] "दृश्यादरे" इत्युभय ह० लि० पुस्तकयोः, मु० पुस्तके च पाठः। "दृश्याकारे" इति पाठो युक्ततरः।

तत्रैवं ज्ञानप्रक्रियायां कथमात्मज्ञाने कर्मकर्तृविरोधः स्यात्, एकस्मिन्नपि यथोक्तज्ञातृज्ञेयभावस्य संभवात्। साक्षाच्चैतन्यव्याप्यत्वस्य च घटादावप्यनङ्गीकारात्, तस्याप्यात्मनि घटादाविव प्रकारभेदेनाविरोधाच्च। यथा सूर्यो बिम्बरूपेण प्रकाशकः प्रतिबिम्बरूपेण च प्रकाश्य इति न कर्मकर्तृविरोधः। एवमात्मापि बिम्बरूपेण ज्ञाता भवति स्वगतस्वप्रतिबिम्बरूपेण च ज्ञेय इति प्रकारभेदान्न कर्मकर्तृविरोध इति।

कर्मकर्तृविरोधस्तु नास्तिकमतेष्वेव पातञ्जलसूत्रेणोपन्यस्तो "न तत्स्वाभासं दृश्यत्वादि"ति। तस्य सूत्रस्यायमर्थः—तच्चित्तं न स्वाभासं न स्वगोचरवृत्तिं विना स्वग्राह्यं दृश्यत्वात् शब्दादिवदिति। अतो न पुरुषे व्यभिचारः। विपक्षबाधकश्चात्र प्रकारभेदं विना साक्षात् स्वव्याप्यत्वे कर्मकर्तृविरोध इति। यदि चित्तस्यापि स्वज्ञानार्थं करणान्तरकल्पनया विरोधः परिह्रियते तदाऽऽत्मन एव चित्तनामकरणादस्मन्मतानुप्रवेश इति पतञ्जलेराशयः। अत एव यत् प्राचीनाः दृश्यत्वेनात्मत्वं वदन्ति तत्रापीत्थमेव प्रयोगः कर्तव्यः—चित्तं नात्मा करणं विना दृश्यत्वात् इच्छादिवदिति। अथवा घटादयः सर्वे नात्मानो लौकिकप्रमितिविषयत्वात्। तस्मादात्मनः फलव्याप्यत्वेऽपि न कर्मकर्तृविरोध इति सिद्धम्।

यच्च परैरुक्तम; आत्मनो ज्ञेयत्वे स्वप्रकाशत्वहानिरिति, तदपि तुच्छम्, आत्मसामान्येऽन्तःकरणादिव्यावृत्त्यर्थमनौपाधिकप्रकाशत्वात्।

यथा प्रदीपः पुरतः प्रदीप्तः प्रकाशमन्यस्य करोति दीप्यन्।
तथेन्द्रियं चेन्द्रियदीपवृक्षाः ज्ञानप्रदीप्ताः परवन्त एव॥

इति मोक्षधर्मादिष्ववगमात्। ब्रह्मणश्चासाधारण्येन स्वप्रकाशत्वमनन्याधीनप्रकाशफलोपधानकत्वम् "न तत्र सूर्यो भाति न चन्द्रतारके नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाती" त्यादिश्रुतिषु तथावगमादिति। ननु सूर्याद्यात्मनो [1]दृष्टान्तदार्ष्टान्तिकयोरेकस्य प्रकाशलक्षणस्याभावात् कथं दृष्टान्तः शास्त्रेषूपपद्यत इति चेत्, उभयत्रैव प्रकाशरूपतानुभवात् उभयसाधारणं प्रकाशत्वमखण्डोपाधिरेको ऽभ्युपगन्तव्य इति दृष्टान्तोपपत्तिः।

परे तु तमोनिवर्तकत्वमेवोभयसाधारणं प्रकाशकत्वमिति। तत्र चैतन्ये तमोनिवर्तकत्वाभावस्य वक्ष्यमाणत्वात् बाह्याभ्यन्तरोभयसाधारणतमस्त्वस्याप्यभावाच्च। चाक्षुषवृत्तिप्रतिबन्धकत्वादेर्दूरत्वादिदोषेष्वतिप्रसङ्गादिति।

नन्वात्मनो ज्ञेयत्वे "विज्ञातारमरे केन विजानीयादि"ति श्रुतिविरोध इति चेन्न, अस्य वाक्यस्य "केन प्रकाशान्तरेण विज्ञातारं लोकं प्रकाशयेदि" त्यर्थ इति पातञ्जलभाष्ये व्यासपादैरर्थत उक्तत्वात्। तथाहि, "परार्थात् स्वार्थसंयमात् पुरुषज्ञानमि"ति सूत्रस्य भाष्ये पुरुष एव तु तं प्रत्ययं स्वात्मालम्बनं पश्यति न तु पुरुषप्रत्ययेन बुद्धिसत्त्वात्मना पुरुषो दृश्यते "विज्ञातारमरे केन विजानीयादि" ति श्रुतेरितीति।

---

[1] "सूर्याद्यात्मनोर्दृष्टान्त" इत्येकस्मिन् ह० लि० पु० पाठः साधुः।
"सूर्याद्यात्मनो दृष्टान्त" इत्यपरस्मिन् ह० लि० पुस्तके, मु० पुस्तके च पाठोऽसाधुः।

आधुनिकास्तु [स्वकल्पितमात्मारोपत्वं सिद्धान्तीकृत्य स्वप्रकाशलक्षणं रचयन्ति "अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वमि" ति। तत्रेदमुच्यते—एवं स्वप्रकाशत्वमात्मनः श्रुत्यादिष्वदर्शनादसिद्धमिदं लक्षणम्। स्वप्रकाशशब्दस्यास्मिन्नर्थे यौगिकत्वमपि न संभवति, स्वज्ञेयत्वस्यैव योगतो लाभात्। अपि च वेदनस्य सर्वव्यवहारकारणतया वेद्यत्वाभावे व्यवहारासंभवादप्यसिद्धं लक्षणम्। अस्माभिर्वेदनस्योपपादितत्वेन सर्वशास्त्रविरुद्धकल्पनासहस्रस्यानौचित्यात्, "य एवं वेद, सदा पश्यन्ति सूरयः इत्यादिश्रुतीनां यथाश्रुतार्थपरित्यागानौचित्याच्च। किं चावेद्यत्वे सति तत्र श्रुत्यादीनां प्रामाण्यं न स्यात्, पुरुषगतप्रमाफलाजनकत्वादिति।

स्यादेतद्, ब्रह्माकारवृत्तेरनुभवाख्यफलाभावेऽपि पुरुषनिष्ठाया अविद्याया निवृत्तिरेव पुरुषनिष्ठं फलं स्यादिति। अत्रोच्यते—प्रमाकरणस्यैव प्रमाणशब्दार्थतया अविद्यानिवृत्तिरूपफलेन प्रमाणत्वासंभवः। किं चेयमविद्या ? किं भ्रमरूपा वृत्तिः, किं वा भ्रमकारणवासना, उत आवरकं तमोद्रव्यं चक्षुषस्तिमिरादिवत्, अथवा बौद्धतमःप्रतिबिम्बः, उताविद्याशब्देन भवद्भिः परिभाषितं जगत्कारणमिति।

नाद्यः, तस्या बुद्धिधर्मत्वेन तन्नाशस्यापि बुद्धिधर्मतया पुरुषनिष्ठत्वाभावात्। न द्वितीयः, [ "एते प्रधानस्य गुणास्त्रयः स्युरनपायिनः" इत्यादिवाक्यैः सत्त्वादिगुणत्रयस्यानात्मनिष्ठत्वेन तन्निवृत्तेरप्यनात्मनिष्ठत्वात्, तैमिरिकादिवत् तमोरूपस्य दोषस्य करण[1]निष्ठत्वाभावाच्च। नापि तृतीयः, तन्निवृत्तेः पूर्वोत्पन्नफलत्वासम्भवात्। वृत्तिप्रतिबन्धकतमोद्रव्यनिरासानन्तरमेव बुद्धिवृत्तेरुदयेनात्मनि बौद्ध[2] तमः प्रतिबिम्बस्यापि पूर्वमेव निवृत्तेः, न हि बिम्बापगमे प्रतिबिम्बं स्थातुमर्हति।

एतेनावरणभङ्गो विद्यायाः फलमित्यपास्तम्। दोषनिवृत्त्यनन्तरमेव विद्योदयात्, नयनादिरूपकरणानामेव लोके आवरणदोषदर्शनेन बुद्धेरेवा[3] वरणदोषाच्च। एतेन चाविद्याया आत्मनिष्ठत्वमप्यपास्तम्। विद्याविद्ययोः सामानाधिकरण्यानौचित्याच्च। तथा चिन्मात्रत्वश्रुतिविरोधात् "कामादिकं सर्वं मन एवे"त्यादिश्रुतिविरोधाच्च। तथा "दुःखाज्ञानमला धर्माः प्रकृतेस्ते तु नात्मनः" इत्यादिस्मृतिविरोधाच्च। अन्यथा दुःखादीनामप्यात्मधर्मत्वापत्तेश्चेति। "आत्मन्यविद्ये" त्यादिश्रुतयश्च कामादिवदौपाधिकाज्ञानपरा इति।

नापि चतुर्थः, ज्ञानस्य जगत्कारणनाशकत्वे लौकिकनिदर्शनाभावात् श्रवणाभावाच्च। न वा तत्सम्भवति, एकपुरुषस्यात्मज्ञानेन जगन्नाशेऽन्यपुरुषाणां तद्दर्शनानुपपत्तेः; तस्यैव पुरुषस्य जीवन्मुक्तिदशायां प्रपञ्चदर्शनानुपपत्तेश्च, कारणनाशे कार्या-

[ ] कोष्ठान्तर्गतः पाठ उ० ह० लि० पु० नास्ति।
अयं पाठः पुस्तकान्तरे दृश्यते; प्रथमपुस्तके नास्ति इति मु० शा०।
[1] 'अकरण' इति पाठो युक्तो भाति।
[2] "वैधतमः" इति मु० पु० पाठो न सम्यक्।
[3] "भेदावरणदोषाच्च" इति मु० पु० पाठोऽसमीचीनः।

वस्थानानौचित्यात्। जीवन्मुक्तस्याप्यविद्यालेशस्वीकारे ज्ञानाज्ञानयोर्नाश्यनाशकभावादिकल्पनायां व्यभिचारात्[1] दोषात्। योऽपि जगत्कारणेऽविद्याशब्दः क्वचित् श्रूयते सोऽप्यविद्याकारणत्वेनैव, ] [ असङ्गे कूटस्थे निर्गुणे चात्मनि भ्रमवत् तद्वासनाया अप्यनुपपत्तेः, असङ्गे तिमिरादितुल्यावरकासंभवात्। किं चावरणं वृत्तिप्रतिबिम्बरूपमेव चक्षुरादीनां तिमिरमेघादिभिर्दृष्टं तच्च कूटस्थनित्यस्य चेतनस्य न घटते। न च चैतन्यसंबन्धकमेवावरकत्वं वाच्यं, तस्यापि सम्बन्धस्य नित्यत्वे प्रतिबन्धासंभवात्, कार्यत्वे च लाघवात् बुद्धिवृत्तेस्तत्कारणत्वस्यैवौचित्यात् "तद्धेतोरेव तदस्त्विति" न्यायात्, न तु चैतन्यार्थयोः सम्बन्धे तमः प्रतिबन्धकं कल्पयित्वा तमोनिवृत्तौ बुद्धिवृत्तेर्हेतुत्वं कल्पनीयम्, गौरवात्। किं च सुषुप्तिसंमोहवार्धकादौ वृत्तिप्रतिबन्धकतया बुद्धाववश्यं तम आवरणं कल्प्यम्—

"सत्त्वाज्जागरणं विद्याद्रजसा स्वप्नमादिशेत्।
प्रस्वापनं तु तमसा तुरीयं त्रिषु सन्ततम्॥"

इत्यादिस्मृतेः। चक्षुषस्तिमिरादिवत्तमोरूपस्य दोषस्य करणनिष्ठत्वानुमानाच्च। अत उभयत्र तमःकल्पनावैयर्थ्याद् बुद्धावेव तमो नात्मनीति।

नापि चतुर्थः, तन्निवृत्तेः पूर्वोत्पन्नत्वेन फलत्वासंभवात्। वृत्तिप्रतिबन्धकतमोद्रव्यनिरासानन्तरमेव बुद्धिवृत्तेरुदयेनात्मनि[2] बौद्धतमःप्रतिबिम्बस्यापि वृत्तेः पूर्वमेव निवृत्तेः। न हि बिम्बापगमे प्रतिबिम्बं स्थातुमर्हति। नापि वृत्त्यतिरिक्तस्यात्मनि प्रतिबिम्बं स्थातुमर्हति। नापि वृत्त्यतिरिक्तस्यात्मनि प्रतिबिम्बो भवति, संस्कारादेरपि प्रतिबिम्बापत्त्या [3]साक्षिभास्यतापत्तेः। तमोऽपि च घटादिवद् बुद्धिवृत्त्यारूढतयैव चेतने भासते न तु साक्षिभास्यम्। अन्यथा प्रलयेऽपि तमोऽनुभवापत्त्या तत्स्मरणापत्तेरिति।

एतेनावरणान्तरभङ्गो विद्यायाः फलमित्यपास्तम्, आवरणदोषनिवृत्त्यनन्तरमेव विद्योदयात्।

आत्मा नित्योऽक्षरोऽव्यक्त एकः क्षेत्रज्ञ आश्रयः।
अविक्रियः स्वदृग्घेतुर्व्यापको ऽसङ्ग्यनावृतः॥

इत्यादिवाक्यैरात्मनो ऽनावृतत्वश्रवणाच्च। नयनादिरूपकरणानामेव लोके

---

[1] "व्यभिचारात्। दोषादपि जगत्कारणे" इति मु० पु० पाठो न सङ्गतः।
[ ] कोष्ठान्तर्गतः "असङ्गे कूटस्थे"...इत्यादिः "अध्यस्तत्वेन वा मन्तव्य" इति पर्यन्तः पाठः पुस्तकान्तरे न दृश्यत इति मु० ग्रा० टिप्पणी। किन्तु पाठोऽयम् उभय ह० लि० पु० वर्तते। कोष्ठद्वये पाठसाम्यं पुनरुक्तिश्च चिन्त्ये।
[2] "बुद्धिवृत्तेरुदयेनात्मनि" इत्युभयत्र ह० लि० पु० पाठः।
बुद्धिवृत्तेरुदयो नात्मनि" इति मु० पु० पाठो न सम्यक्।
[3] "भास्यतापत्तेः" इत्युभयत्र ह० लि०पु० पाठः।
"भास्यता यत्तेः" इति मु० पु० पाठो न सम्यक्।

आवरणदोषदर्शनेन बुद्धेरेवावरणदोषाच्च। एतेनाविद्याया आत्मनिष्ठत्वमप्यपास्तम्, विद्याविद्ययोः सामानाधिकरण्यानौचित्याच्च। तथा चिन्मात्रत्वश्रुतिविरोधात्, "कामादिकं सर्वं मन एवे" त्यादिश्रुतिविरोधाच्च। तथा "दुःखाज्ञानमला धर्माःप्रकृतेस्ते तु नात्मन" इत्यादिस्मृतिविरोधाच्च, अन्यथा दुःखादीनामप्यात्मधर्मत्वापत्तेश्चेति। आत्मन्यविद्याश्रुतयश्च कामादिवदौपाधिकाज्ञानपरा इति।

नापि पञ्चमः, ज्ञानस्य जगत्कारणनाशकत्वे प्रमाणाभावात्, लोकसिद्धेन मिथ्याज्ञाननिवृत्तिद्वारेणैव ज्ञानान्मोक्षसिद्धौ जगत्कारणनाशाख्यदृष्टद्वारकल्पनागौरवाच्च। न वा तत्संभवति, एकपुरुषस्यात्मज्ञानेन जगन्नाशेऽन्यपुरुषाणां तद्दर्शनानुपपत्तेः, तस्यैव पुरुषस्य जीवन्मुक्तिदशायां प्रपञ्चदर्शनानुपपत्तेश्च, कारणनाशे कार्यावस्थानानौचित्यात्। जीवन्मुक्तस्याप्यविद्यालेशस्वीकारे ज्ञानाज्ञानयोर्नाश्यनाशकभावादिकल्पनायां व्यभिचारादिदोषाच्च। परममुक्त्यनन्तरमपि तदुपभुक्तपृथिव्यादीनां पुरुषान्तरभोग्यतायाः श्रुतिस्मृतिप्रत्यभिज्ञाभिः सिद्धत्वाच्च। पुरुषभेदेनाविद्याख्यकारणभेदात् प्रतिपुरुषं तत्कार्यजगद्भेदेनानन्तजगत्कल्पनागौरवाच्च। किं चैवं प्रत्यभिज्ञादिबाधे क्षणिकविज्ञानशून्यादिवादपर्यवसानमागामिसूत्रादिविरोधश्चेति। नेदं व्यासदर्शनमपि तु सप्तमं प्रच्छन्नबौद्धदर्शनमेवेति। अथाद्वैतश्रुत्यनुरोधाज्जगत्कारण ज्ञाननाश्यमिति कल्प्यमिति चेन्न, पूर्वापरवाक्यालोचन[1]याऽद्वैतश्रुतेर्व्याख्यास्यमानत्वादिति। योऽपि जगत्कारणे ऽविद्याशब्दः सो ऽप्यविद्याशक्तिमत्त्वेनात्मनि संसर्गतोऽध्यस्तत्वेन वा मन्तव्यः।] "अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्ये" ति योगसूत्रादिभिर्वृत्तिविशेष एवाविद्याशब्दार्थत्वावधारणादतो जगत्कारणे द्रव्यविशेषेऽविद्याशब्दसङ्केतमात्रेण तस्य[2] ज्ञाननाश्यत्वं न सिध्यतीति दिक्।

तस्मादविद्यानिवृत्तिर्ज्ञानस्य न पुरुषगतं फलं भवति, ज्ञानप्रतिबन्धकत्वेनाविद्यानिवृत्त्यनन्तरमेव ज्ञानोदयात्, अविद्यायाः पुरुषनिष्ठत्वाभावाच्च। किन्तु विद्याख्यबुद्धिवृत्तेः पुरुषनिष्ठोऽनुभव एव फलम्। ततश्च पुरुषार्थसमाप्तिश्चित्तनिवृत्त्या मिथ्याज्ञाननिवृत्तिस्ततश्च धर्माधर्मानुत्पत्त्या मुक्तिरिति स्मर्तव्यम्।

यच्च—तेषामेवानुकम्पार्थमहमज्ञानजं तमः।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता॥

इति गीतावाक्यं तमसो ज्ञाननाश्यत्वं वदति, तत्राज्ञानशब्दो मिथ्याज्ञानवासनावाची तमःशब्दो मिथ्याज्ञानवाची, कार्यकारणयोरभेदात् अविद्यादिक्लेशपञ्चकेऽपि ज्ञानावरकत्वेन तम आदिसंज्ञापञ्चकस्य स्मृतिप्रसिद्धत्वाच्च।

---

१ "लोचनयाद्वैतश्रुतेर्व्याख्या" इत्येव पाठ उभयत्र ह० लि० पुस्तकयोः, मु० पुस्तके च वर्तते। "अद्वैतश्रुतेः" इति पाठो युक्तो भाति।

२ "तस्य" इत्युभयत्र ह० लि० पु० पाठः।
"तस्या" इति मु० पु० पाठः।

यदपि—अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ।।
ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ।।

इत्यादिवाक्यम्, तस्यायमर्थः—अज्ञानेन तमोद्रव्येण ज्ञानं सत्त्वद्रव्यमावृतं प्रतिबद्धवृत्तिकं भवति मलेनेव दर्पणप्रकाशः । अतो लोका मुह्यन्ति तमोवृत्तिभ्रमवन्तो भवन्ति । येषां तु ज्ञानेन सत्त्वेन तत्तमोऽभिभूयते तेषां तत्सत्त्वं परमात्मानं प्रकाशयति करणविधया[1] चैतन्यव्याप्यीकरोतीति । ज्ञानाज्ञानादिशब्दास्तु वृत्तिष्विव तत्कारणसत्त्वादिष्वपि शास्त्रे प्रयुज्यन्ते "सत्त्वं ज्ञानं रजः कर्म तमोऽज्ञानमिहोच्यत" इति मन्वादिवचनादिति ।

एतेन, "अन्धं तम इवाज्ञानं दीपवच्चेन्द्रियोद्भवम् ।
यथा सूर्यस्तथा ज्ञानं यद्विप्रर्षे विवेकजम् ।।"

इत्यत्रापि ज्ञानाज्ञानशब्दौ सत्त्वतमोगुणयोर्द्रव्ययोर्वाचकाविति ।

[एवं च सति यान्यन्यान्यपि वाक्यान्यनुमानानि च अनाद्यखण्डाविद्याया-माधुनिकैरुपन्यस्यन्ते तानि सर्वाणि तमोगुणपराण्येव । तस्य च तमोगुणस्य ज्ञानेन न[1] नाशो गुणानां नित्यत्वस्य—

"विकारजननीं मायामष्टरूपामजां ध्रुवाम् ।
त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम् ।।"

"कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वादि" त्यादिश्रुतिस्मृतियोगसूत्रसिद्धत्वात् । किन्तु विषयेन्द्रियसंयोगादिना तस्यापसारणं क्रियते । तथा तत्त्वज्ञानिपुरुषं प्रति करणादिविधया या गुणानां विकारशक्तिस्तस्या दाह एव भवतीति दिक् । ]

तस्मात् सत्त्ववृत्तेः प्रागेव सत्त्वेन स्ववृत्तिप्रतिबन्धकतमोगुणाभिभवो न तु वृत्त्येति सिद्धम्, योगभाष्ये व्यासैरेवमवधृतत्वात् । तथा च सांख्यकारिका—"अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः" इति । या चेयं योगसांख्ययोः प्रमाणतत्फलादिप्रक्रिया प्रदर्शिता एषैवात्रापि दर्शने ग्राह्या, प्रमाणप्रमादिप्रक्रियाया अत्रासूत्रणादविरोधाच्च । स्वकीयतन्त्रानुक्तेऽर्थे स्वतन्त्राविरुद्धस्य परतन्त्रसिद्धान्तस्यैव स्वतन्त्रसिद्धान्तत्वात्, अन्यथा निर्णयासंभवात्, परोक्तमविरोधि चेति न्यायाच्च,

---

[1] "करणविधया" इत्येकस्मिन् ह० लि० पु० पाठः साधुः ।
"विद्यया" इत्यन्यस्मिन् ह० लि० पुस्तके, मुद्रितपुस्तके च पाठा न साधुः ।

[ ] कोष्ठान्तर्गतः पाठ उभयत्र ह० लि० पु० वर्तते ।
अयं पाठः २ पु० ना० इति मु० शा० ।

[1] "ज्ञानेन नाशो" इत्युभय ह० लि० पु०, मु० पु० च पाठोऽसमीचीनः, तत्र मध्ये नकारस्त्रुटितो भाति ।

[1]प्रतितन्त्रसिद्धान्ततयैतादृशसिद्धान्तस्य न्यायाचार्यैरपि सूत्रितत्वाच्च "समानतन्त्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्त" इति सूत्रेण। अत्र प्रतितन्त्रसिद्धान्त इति लक्ष्यनिर्देशः, शेषं लक्षणम्। परतन्त्रासिद्ध इति पूर्वसूत्रलक्षितात् सर्वतन्त्रसिद्धान्ताद् व्यावर्तकमात्रम्। अस्माकं च नास्तिकतन्त्रस्यैव परतन्त्रता न त्वास्तिकतन्त्रस्येति बोध्यम्। अतो ज्ञानोत्पत्तिप्रक्रियायामात्मानात्मविवेके पदार्थनिरूपणादौ च सांख्ययोगोक्तसिद्धान्त एव मन्वादिसमादृततया ग्राह्योऽस्मद्दर्शनसूत्राभावात्, तदविरोधेन च न्यायादिसिद्धान्तोऽपीति न स्वतन्त्रा कापि रचनात्र[2] निर्मूला कर्तव्या।

"यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम्॥

इति स्मृतेः। ऋषिभिश्च वेदान्तानां समुद्र इव दुरवगाहतामवधार्य वेदान्तार्था एव संक्षिप्य स्पष्टीकृत्य च भागशः प्रोक्ताः, न तु तेष्वा (तेष्या) धुनिकवत् स्वतन्त्रा अज्ञा वा। अतस्तेषां परस्पराऽविरोधेन[3] परस्परानुसारेण चैव वेदान्तमीमांसा व्याससूत्रैरिति विज्ञप्तिः,

एवमेकं सांख्ययोगं वेदारण्यकमेव च।
परस्पराऽङ्गान्येतानि पाञ्चरात्रं च कथ्यते॥

इति मोक्षधर्मवाक्यादिति। सांख्ययोगमिति समाहारः, एवं वेदारण्यकमिति वेदवेदान्तावित्यर्थः। अन्यथा एतानीति बहुवचनासङ्गते। तथा—

इतिहासपुराणाभ्यां वेदान् समुपबृंहयेत्।
बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरिष्यति॥

इत्यादिभारतादिवाक्याच्च। पुरुषमतिदोषात्त्वापात एव विरोधो दृश्यत इति। ईश्वरप्रतिषेधादिना सांख्यादिभिः सह विरोधं पश्चान्निराकरिष्यामः। ये तु वेदान्तदर्शने सांख्यादिभिः सह पारमार्थिकं विरोधं मन्यन्ते, तेषां सांख्याद्यनुसारिश्रुतिभिः सहापि विरोधो दुर्निवार इति। तत्रैते सङ्ग्रहश्लोकाः –

व्यवहारे वयं योगास्तत्त्वषड्विंशगोचरे।
भेदस्तु वीक्ष्यते बालैरुपासावाक्यमोहितैः॥
पुंप्रकृत्योर्विवेकेन जीवत्वैश्वर्यबाधतः।
चितिमात्रैकरूपात्मवादे सांख्याश्च यादृशाः॥

---

1 "प्रतितन्त्रसिद्धान्तस्य न्यायाचार्यैरपि" इत्येकस्मिन् ह० लि० पु० पाठः।
प्रतितन्त्र सिधान्ततरौ तादृश...इत्यपरस्मिन् ह० लि० पु० पाठः
मु० पु० अपि एवमेव पाठः। इमावत्यन्तमशुद्धौ स्तः।

2 "रचना निर्मूला कर्तव्या" इत्युभयत्र ह० लि० पु० पाठः।
"रचनाऽनिर्मूला कर्तव्या" इति मु० पु० पाठः।

3 "अविरोधे" इत्येकस्मिन् ह० लि० पु०, मु० पु० च पाठः।
अविरोधेन" इत्यन्यस्मिन् ह० लि० पु० पाठो युक्तः।

शक्त्यात्मैक्यानुवादेन परजीवानुमानयोः ।
त्रिगुणप्रविभागे च न्यायवैशेषिकानुगाः ॥
वेदान्तोक्तिविचारे तु वयं जैमिनिपक्षगाः ।
पञ्चविंशतितत्त्वानां षड्विंशे प्रविलापनात् ॥
महाप्रलयकालीनं ब्रह्माद्वैतं तदात्मता ।
ब्रह्मणः सृष्टिरित्यादि चास्माकमधिकं मतम् ॥
आर्षज्ञानानि सर्वाणि वेदान्तानां कलाः स्मृताः ।
श्रुत्यवान्तरवाक्यानामृते नास्ति ह्यसङ्गतिः ॥
न केवलं ह्यास्तिकानां वादो वेदेष्वपेक्ष्यते ।
उपासनार्थे देहात्मवादो बौद्धोऽप्यपेक्षितः ॥
याथार्थ्यानीश्वरत्वाभ्यां संवादोऽत्र हि दृश्यते ।
तस्मात् स्वतन्त्ररचना त्यक्तव्यात्र मुमुक्षुभिः ॥ इति ।

*प्रमात्रादिसंग्रहश्लोकाश्च—

प्रमाता चेतनः शुद्धः प्रमाणं वृत्तिरेव च ।
प्रमार्थाकारवृत्तीनां चेतने प्रतिबिम्बनम् ॥
प्रतिबिम्बितवृत्तीनां विषयो मेय उच्यते ।
वृत्तयः साक्षिभास्याः स्युः करणस्यानपेक्षणात् ॥
साक्षाद्द्रष्टृस्वरूपं च साक्षिलक्षणमीरितम् ।
सांख्यसूत्रे ततो गौणं सर्वसाक्षित्वमीश्वरे ॥
इन्द्रियाव्यवधानेन तथा रागाद्यभावतः ।
अथवेशप्रमा नित्या करणेन न जन्यते ॥
करणाजन्यबोधाख्या साक्षितेशेऽखिलेष्वतः ।* इति

ये त्विदानीन्तना वेदान्तिनः सांख्ययोगादीन् विहाय भट्टादिमतानुसारेण व्यवहारं रचयन्ति 'स्वपञ्चसूत्रानुक्तमनाद्यखण्डाविद्यादिकं कल्पयन्ति'[1] ते कालदोषेण विपरीततया त्यक्तानादिसेतवोऽन्धगोलाङ्गूलं गृहीत्वाऽतिगम्भीरमपारवेदान्ताब्धिं विविधबौद्धग्राहाकुलं समुत्तितीर्षन्ति ।

अत्रादौ चतुरध्यायीवाक्यार्थः संक्षेपेणोच्यते-प्रथमाध्याये प्रथमपादेन प्रायशोऽस्पष्टलिङ्गैर्वेदान्तवाक्यैरधिष्ठानरूपमुपाध्युपहितं ब्रह्म विचारणीयम् । द्वितीयपादेन च स्पष्टलिङ्गैस्तथाविधमेव ब्रह्म । तृतीयपादेन चोपाधिविवेकाविवेकौदासीन्येन सर्वाधिष्ठानं ब्रह्म । एवं हि "सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि" त्यादिश्रुतिस्मृतयो

---

* अयं पाठ उभयत्र ह० लि० पु० वर्तते ।
अयं पाठः २ पुस्तके ना० इति मु० शा० ।

[1] अयं पाठ उभयस्मिन् अपि ह० लि० पु० नास्ति ।
अयं पाठः २ पुस्तके नास्ति इति मु० शा० ।

व्याख्याताः स्युः। यथा "एष त आत्मा अन्तर्याम्यमृतः" "तवान्तरात्मा मम च सर्वेषामेव देहिनामि" त्यादिश्रुतिस्मृत्युक्तं ब्रह्मात्मत्वं चोपपादितं भविष्यतीत्याशयः। यद्धि यस्याधिष्ठातृ आधारश्च भवति तत्तस्यात्मेत्युच्यते अध्यस्तत्वात् स्वरूपत्वात्, यथा जीवो लिङ्गदेहस्येति। चतुर्थपादेन च प्रधानादीनां स्वातन्त्र्येण जगत्कारणत्वाभावः प्रधानादिशक्तिवर्गश्च ब्रह्मणः प्रतिपादयिष्यते इति प्रथमाध्यायार्थः।

द्वितीयाध्याये च ब्रह्मकारणत्वे प्रमाणान्तरविरोधपरिहारः, बौद्धमतनिराकरणं, सृष्टिस्थितिसंहारनिरूपणं च। तृतीयाध्याये च जीवस्य संसारानर्थप्रतिपादनपूर्वकतन्निवृत्त्युपायं सोपकरणब्रह्मविद्यां, तद्विषयभूतमुपाधिविविक्तं ब्रह्मतत्त्वं च विचारयिष्यति। चतुर्थाध्याये च सद्योमुक्तिक्रममुक्तिभेदेन द्विविधं ब्रह्मात्मविद्याफलमिति। तदेवं प्रमाणाविरोधसाधनफलप्रतिपादकाश्चत्वारो ऽध्याया इति।

ननु ब्रह्मणो जगत्कारणत्वं शास्त्रयोनीति कथमुच्यते? निर्विकारचिन्मात्रताप्रतिपादकश्रुतिस्मृतिभ्यामुपादानत्वकर्तृत्वयोरुभयोरपि प्रतिषेधात्। यथा—

"निष्क्रियं निष्कलं शान्तं निरवद्यं निरञ्जनम्।
अमृतस्य परं सेतुं दग्धेन्धनमिवानलम्॥
साक्षी चेता केवलो निर्गुणश्चे" त्याद्याः श्रुतयो विकारकृत्यादिकं ब्रह्मणि प्रतिषेधन्ति। स्मृतयश्च—

सन्निधानाद् यथाकाशकालाद्याः साधनं तरोः।
तथैवापरिणामेन विश्वस्य भगवान् हरिः॥
प्रोच्यते परमेशानो यः शुद्धोऽप्युपचारतः।
प्रसीदतु स नो विष्णुरात्मा यः सर्वदेहिनाम्॥ इत्यादय इति।

न च कालादिवन्निमित्तकारणत्वमेव जन्मादिसूत्रार्थः संभवति, निमित्तकारणतायाः कालादिसाधारण्येन ब्रह्मलक्षणत्वासंभवात्। [यत इति पञ्चम्या प्रकृतित्वलाभाच्च, जनिकर्तुः प्रकृतिरित्यनुशासनेन प्रकृतावपादानसंज्ञायाम् अस्या अपादानपञ्चमीत्वात्, सूत्रमूलभूतोदाहृतश्रुतौ "यत्प्रयन्त्यभिसंविशन्ती" त्यनेन प्रकृतित्वसिद्धेश्च उपादान एव कार्यलयादिति।]

न च ब्रह्मणो व्यहारतो विकारत्वेऽपि विकारस्य वाचारम्भणमात्रतया विवर्तत्वेन परमार्थतो निर्विकारत्वमेवेति वाच्यम्, व्यावहारिकविकारस्यापि प्राकृततयाऽऽत्मनि प्रतिषेधात्,

"प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः।
यः पश्यति तथात्मानमकर्तारं स पश्यति॥"

इत्यादिवाक्यैः। किं च विकारमिथ्यात्वेनाविकारित्वं प्रकृतेरप्यस्तीति कूटस्थनित्यपरिणामिनित्यविभागसिद्धान्ताद्यनुपपत्तिरिति।

---

[ ] अयं पाठः उभयत्र ह० लि० पु० अस्ति
अयं पाठः २ पुस्तके नास्तीति मु० ग्रा०।

अपि च वाचारम्भणवाक्येन विकारस्यात्यन्ततुच्छत्वं नोच्यते किन्त्वनित्यतया पारमार्थिकसत्यत्वाभाव एव, यतो विकारो वाचारम्भणं नाम कार्यः पश्चाच्च नाममात्रावशेषो भवति "वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे, नामैवैनं जहाति" इति श्रतिस्मृतिभ्याम। अतो विकारो मृत्तिकेत्येव कारणरूपेणैव सत्यं नित्यं न तु विकार इतीति तद्वाक्यार्थत्वादिति। तथा चैवंविधवाक्यैरनित्यत्वमात्रबोधनान्न विवर्तवादः, किं तु परिणाम एवेति ब्रह्मण उपादानत्वं न संभवति। तस्मात् स्वोपाधेः सूर्यवत साक्षितामात्रेण ज्ञानद्वारैव निमित्तकारणं ब्रह्म। सर्वाणि चोपदानत्वादिवाक्यानि प्रधानादिपराण्येवेति न ब्रह्मकारणत्वं शब्दयोनीति। तमिमं पूर्वपक्षं समाधत्ते—

## तत्तु समन्वयात् ॥ ४ ॥

तत्पदं व्यवहितपरामर्शार्थं, तु शब्दः पूर्वपक्षप्रतिषेधार्थः। तद् ब्रह्मणो जगज्जन्मादिकारणत्वं तु समन्वयात् अस्य जगतः कारणरूपे ब्रह्मणि समनुगतत्वात्, ब्रह्मणश्च कारणरूपेण जगति समनुगतत्वादुपपद्यत इति शेषः। तथा चाधिष्ठानरूपोपादानकारणत्वं जन्मादिसूत्रेणोक्तमित्याशयः[1]। [2]यत्राविभक्तं येनोपष्टब्धं सदुपादानकारणं कार्याकारेण परिणमते तदेवा[2] धिष्ठानकारणम्। तच्चाविकारिणोऽपि जन्मादिसूत्रे गगनवाय्वादिदृष्टान्तेनास्माभिः प्रतिपादितम्[3]। ब्रह्मण औपाधिके च कर्तृत्वविकारित्वे पश्चादुपपादयिष्यामः।

नन्वस्य सूत्रस्य यथोक्तार्थः कथमवधृत इति चेत्, उत्तरसूत्रात्। उत्तरसूत्रे हि "तदैक्षते" तिश्रुत्या ब्रह्म प्रसाधयिष्यति। अतस्तच्छ्रुत्युपक्रमवाक्यस्य "सदेव सोम्येदमग्र आसीदि" त्यस्यार्थ एव तत्रत्यप्रयोजनेनात्रो[4] च्यत इत्युन्नीयते, आकाङ्क्षितत्वात्। तेन च वाक्येन प्रलये सदनुगततया जगदवस्थानेन वक्ष्यमाणजगत्कारणत्वं कूटस्थस्यापि ब्रह्मण उपपादितम्। अतोऽनेनापि सूत्रेण तेनैव हेतुना तदेवोपपाद्यत इत्युचितम्।

किं च "जन्माद्यस्य यतोऽन्वयादितरतश्चे" ति भागवतोपक्रमवाक्येऽपि अन्वयहेतुना ब्रह्मणो जगत्कारणत्वमुपपादितम्। अतोऽत्र तत्समानार्थतोचिता। तद्वाक्यस्य चायमर्थः—प्रलये तत्रैवान्वयात् सर्गकाले च तत एव विभागादस्य जगतो जन्मादि यतः यदुपादानकं तत्सत्यं धीमहि इति। अत्र सूत्रे समुपसर्गात् आकाङ्क्षायोग्य-

---

[1] तत्र च प्रमाणानि "आधारमानन्दमखण्डबोधं यस्मिन् लयं याति पुरत्रयं च" "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इत्यादिश्रुतयः इति २ पु० पा० इति मु० शा०।

[2] अयं पाठः २ पु० नास्तीति मु० शा०।

[3] अधिष्ठानाधिष्ठेययोः परस्परसमन्वये च श्रुतयः, यथा—यत्प्रयन्त्यभिसंविशन्तीति २-पुस्तके पाठ इति मु० श०।

[१, २, ३] अत्रत्याः पाठा मुद्रितपुस्तकानुसारिण उभयत्र ह० लि० पु० सन्ति।

[4] अयं पाठ एवोभयस्मिन् ह० लि० पु० वर्तते।

"तत्रत्यप्रयोजने नात्रोच्यते" इति मु० पु० पाठोऽसम्यक्।

तायां च परस्परान्वये तात्पर्यमिति विशेषः। परस्परान्वये च श्रुतयः—"सर्वभूताधिवासं यद् भूतेषु च वसत्यपि, सर्वानुग्राहकत्वेन तदस्म्यहं वासुदेवः, यत्परं ब्रह्म सर्वात्मा सर्वस्यायतनं महत्, यः सर्वस्मिंस्तिष्ठन् सर्वान्तर" इत्याद्याः। स्मृतयश्च—

"यदा भूतपृथग्भावमेकस्थमनुपश्यति।
तत एव च विस्तारं ब्रह्म संपद्यते तदा॥
मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्।" इत्याद्याः।

ब्रह्मणि प्रपञ्चसमन्वयप्रकारश्चोक्तो ब्रह्माण्डपुराणे—

"स्थूलं विलाप्य करणे करणं निदाने,
तत्कारणं करणकारणवर्जिते च।
इत्थं विलाप्य यमिनः प्रविशन्ति यत्र,
तं त्वां हरिं विमलबोधघनं नमामि॥" इत्यनेन।

अस्यायमर्थः—निर्गुणब्रह्मचिन्तनकाले योगिन आदौ स्थूलं विकारजातं करणे महदादिसप्तके प्रकृतिविकृतिरूपे मनसा विलापयन्ति। तेषां करणत्वं च स्थूलोत्पादने प्रकृतेर्द्वारत्वात्। ततस्तत्करणजातं निदाने आदिकारणे प्रकृतौ विलापयन्ति लयं चिन्तयन्तीत्यर्थः। एवं सर्वत्र। तां च प्रकृतिं गुणत्रयरूपिणीं नित्यामपि निर्व्यापारतया गतस्थमृतसर्पवत् करणकारणविविक्ते चिन्मात्रे ब्रह्मणि विलापयन्ति। एवं जडवर्गं विलाप्य स्वयमप्यंशांश्यविभागेन मनसा विलीयन्ते समुद्रादौ नद्यादिवत्। उपाधिविलये तत्कृतविभागनिवृत्तेरिति। यमिन इति पुरुषसामान्योपलक्षणम्। अत्र लयो नात्यन्तोच्छेदः, किन्तु विकाराणां प्रकृतावव्यक्ततयाऽवस्थानं, प्रकृतिपुरुषयोश्च ब्रह्मणि सुषुप्तवन्निर्व्यापारतयाऽवस्थानमिति बोध्यम्। "मधु मधुकृतो निष्टिष्यन्ति नानात्मनां वृक्षाणां रसान् समवहारमेकतां रसं गमयन्ति, ते यथा तत्र न विवेकं लभन्त" इत्यादिश्रौतदृष्टान्तैः प्रलयकाले ब्रह्मण्यविभक्ततया सर्ववस्त्ववस्थानसिद्धेः।

ब्रह्माप्येति प्रपञ्चोऽयं रूपं हित्वा तु वैकृतम्।
जहाति कठिनावस्थां जलधौ लवणं यथा॥

आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः॥

इत्यादिस्मृतेश्चेति।

ब्रह्मचेतनस्य तु लयो नास्ति। "आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किंचन मिषदि" त्यादिश्रुतिभिर्ब्रह्मणो विश्वावभासनरूपव्यापारस्य प्रलयेऽपि सत्त्वात्। ईश्वरोपाधौ विश्वाकारवृत्तेर्नित्यत्वात् इच्छाकृतिवत्, अन्यथा विश्वनिर्माणानुपपत्तेः। ईश्वरे ज्ञानेच्छादीनां कर्तृभावेऽपि स्वयमुत्पत्त्यङ्गीकारे प्रकृतिस्वातन्त्र्यप्रसङ्गः ईश्वराभ्युपगमवैयर्थ्यं च, सर्गाद्युत्पन्नजीवस्यैव स्वयमिच्छाद्युत्पत्त्यभ्युपगमौचित्यात्। न चैवं प्रलयेऽपीश्वरोपाधौ वृत्तीच्छाद्यभ्युपगमे तेषां तदाधारप्रकृतेश्च कथं लय उपपद्येतेति वाच्यम्, सृष्टिप्रभृतिव्यापारशून्यतया मृतसर्पवत् ब्रह्मचेतनेऽवस्थानादिति।

नन्वीश्वरस्योपाधिरस्तीत्यत्र किं प्रमाणमिति चेत्, उच्यते—

"कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः।
न तस्य कार्यं करणं च विद्यते, स्वाभाविकी ज्ञानबलक्रिया च॥
मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्।
अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्॥"

इत्यादिश्रुतयः। [1]कौर्मवाक्यञ्च —

एका शक्तिः शिवैकोऽपि शक्तिमानुच्यते शिवः।
शक्तयः शक्तिमन्तोऽन्ये सर्वे शक्तिसमुद्भवाः॥
यामधिष्ठाय योगेशो देवदेवो निरञ्जनः।
प्रधानार्थं जगत्कृत्स्नं करोति विकरोति च॥
प्रधानपुरुषे सैषा महादेवैकसाक्षिणी।
सदा शिवा वियन्मूर्तिर्विश्वमूर्तिरमूर्तिका॥
शक्तिशक्तिमतोर्भेदं पश्यन्ति परमार्थतः।
अभेदं चानुपश्यन्ति योगिनस्तत्त्वचिन्तकाः॥ इति।

तथा— प्रोच्यते परमेशानो यः शुद्धोऽप्युपचारतः।
प्रसीदतु स नो विष्णुरात्मा यः सर्वदेहिनाम्[1]॥
चतुर्विंशतितत्त्वानि मायाकर्मगुणा इति।
एते पाशाः पशुपतेः क्लेशाश्च पशुबन्धनाः॥
एतेषामेव पाशानां माया कारणमुच्यते।
मूलप्रकृतिरित्युक्ता सा शक्तिर्मयि तिष्ठति॥
शिवस्य परमा शक्तिर्नित्यानन्दमयी ह्यहम्।
स्वेच्छयैवावतारोऽत्र नैव चान्यवशात्मतः[2]॥
इच्छाशक्तिरहं राजन् ज्ञानशक्तिरहं पुनः।
क्रियाशक्तिः प्राणशक्तिः शक्तिमान् भगनेत्रहा॥

इत्यादीनि पराशरशिवप्रकृत्यभिमानिपार्वतीनां वाक्यानि च। तथा "प्रकृष्टसत्त्वोपादानादीश्वरस्य शाश्वतिक उत्कर्षः" इति योगभाष्यं च ब्रह्मण उपाधौ प्रमाणानि। तथा, "साक्षी चेता केवलो निर्गुणश्च" "द्रष्टा दृशिमात्रः" "आह च तन्मात्रम्" इत्यादिश्रुतियोगसूत्रवेदान्तसूत्राणि च। न हि चिन्मात्रस्योपाधिद्वारतां विना इच्छादिकम् "सोऽकामयत तदात्मानं स्वयमकुरुत" इत्यादि प्रत्युक्तं संभवतीति। स्वाभाविकीति स्वीयो भावः पदार्थः। स्वभावः प्रकृतिः "स्वभावस्तु प्रवर्तत" इति स्मृतेस्तदीयेत्यर्थः। शिववाक्ये चांशभेदेनैकस्या एव प्रकृतेर्द्वित्वमभिप्रेत्य चतुर्विंशतितत्त्वाद् भेदेनेश्वरो-

---

[1] अयं पाठ उभयस्मिन् ह० लि० पु० वर्तते।
अयं पाठः २ पु० नास्तीति मु० ग्रा०।

[2] "वशात्मितः" इति मु० पु० पाठोऽसंगतः।

पाधिर्मायाख्य उक्तः। जीवेश्वरोपाध्यो[1] रत्यन्तभेदे[1] "अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगदि" त्युक्तवाक्यस्याञ्जस्येनानुपपत्तिः। तत्र क्लेशादिवासनामलिनसत्त्वं जीवोपाधिः। तस्य नित्यत्वेऽपि बाह्यसत्त्वसंभेदेन कार्यतया परिणतस्यैव ज्ञानादिहेतुत्वाज्जीवस्य कार्योपाधिः। नित्यविशुद्धसत्त्वं चेश्वरोपाधिरिति विभागः।

सत्त्वादयो न सन्तीशे यत्र च[2] (न) प्राकृता गुणाः।
स शुद्धः सर्वशुद्धेभ्यः पुमानाद्यः प्रसीदतु॥

इति स्मृतेः। प्राकृताः प्रकृतिकार्यभूता इत्यर्थः।

तत्र यः परमात्मा हि स नित्यं निर्गुणः स्मृतः॥
कर्मात्मा पुरुषो योऽसौ बन्धमोक्षैः स युज्यते।
ससप्तदशकेनापि राशिना युज्यते च सः॥

इति मोक्षधर्मादिश्च गुणाभिमानप्रतिषेधकः[3] न त्विच्छादिप्रतिषेधकः, ब्रह्मणोच्छादिश्रवणादिति। मायाशब्दश्च प्रकृतिवाची "मायां तु प्रकृतिं विद्यादि" त्यादिश्रुतिभ्यः।

"प्रकृत्या सर्वमेवेदं जगदन्धीकृतं विभो।,
त्वं वैष्णवी शक्तिरनन्तवीर्या विश्वस्य बीजं परमासि माया।,
तस्य सर्वजगन्मूर्तिः शक्तिर्मायेति विश्रुता"[4]।

इति मोक्षधर्ममार्कण्डेयकूर्मपुराणेभ्यश्च। लोके व्यामोहकशक्तिषु मन्त्रादिष्वेव मायाशब्दप्रयोगाच्चेति।

ननु सत्त्वस्य कथमिच्छादिधर्मकत्वमुपपद्येत सत्त्वादीनां सुखादिरूपत्वेनाद्रव्यत्वादिति चेन्न, "सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः। गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः॥" इति सांख्यकारिकायां गुरुत्वादिगुणैः सत्त्वादीनां द्रव्यत्वसिद्धेरिति। तदेवं समन्वयसूत्रेणाविकारिचिन्मात्रस्यापि ब्रह्मणोऽधिष्ठानत्वेन जगदुपादानत्वमुपपादितम्। [5]इदमेव मूलकारणत्वं (त्व) त्व [स्व] तन्त्रकारणत्वादिशब्दैरुच्यत इति[5]। [ननु तथापि "तदात्मानं स्वयमकुरुत, तन्नामरूपाभ्यामेव व्याक्रियत" इति श्रुतिभ्यामुक्तयोर्विकारकर्तृत्वयोरनुपपत्तिरिति चेन्न, तादृशवाक्यानामौपाधिकविकारकृत्ययो[6] (कर्तृत्वयो) स्तात्पर्यात्। जीववत् परमात्मनो-

---

[1] ध्यो रंशास्य भेदे इत्येकस्मिन् ह० लि० पु० पाठः।
ध्यो रंशांश्यभेदे इत्यपरस्मिन् ह० लि० पु० पाठः।
रंशस्य भेद इति २ पु० पाठः इति मु० शा०।

[2] "यत्र च" इत्युभयस्मिन् ह० लि० पु०, मु० पु० च पाठः।

[3] प्रतिषेधयः इत्युत्रयत्र ह० लि० पु० पाठः। प्रतिषेधः इति मु० पु० पा० अशुद्धः।

[4] कूर्म पु० अ० १२ श्लो० १६।

[5] अयं पाठ उभयत्र ह०लि०पुं० नास्ति। अयं २ पु० अधिकः पाठ इति मु० शा०।

[6] विकारकृत्ययोः इत्युभयत्र हस्त लि० पु० पाठः।

[ ] कोष्ठान्तर्गतः पाठ उ० ह० लि० पु० वर्तते।
अयं पाठः २ पुस्तके नास्ति इति मु० शा०।

ऽपि शरीरद्वयवत्त्वात् "यस्य सर्वे शरीरमि" त्यादिश्रुतीनां गौणत्वानौचित्यात्। तत्र कृत्याधारतया नित्यं विशुद्धसत्त्वं सूक्ष्मशरीरं, साक्षात् प्रयत्नजन्यक्रियारूपचेष्टाश्रयतया चेतरसत्त्वाद्यः स्थूलशरीरम् "चेष्टाश्रयः शरीरमि" ति न्यायसूत्रात्। चेष्टाश्रयत्वं सुखरूपार्थाश्रयत्वं वा शरीरत्वमिति तत्सूत्रार्थः। शास्त्रेषु चेन्द्रियाश्रयरूपमेव ब्रह्मणः शरीरं प्रतिषिध्यते अनर्थहेतुत्वात् कार्यत्वाच्चेति।]

परे तु ब्रह्मणः साक्षादुपादानत्वेऽपि कार्याणां शुक्तिरजतवद् विवर्तरूपतया ब्रह्मणो न विकारित्वमित्याचक्षते। तथाहि कार्याणि तावत् परमार्थतो न सन्त्येव "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं, न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः। न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता" इत्यादिश्रुतेः।

तस्माद् विज्ञानमेवास्ति न प्रपञ्चो न संसृतिः।
अज्ञानेनावृतं लोके विज्ञानं तेन मुह्यति॥[1]
एवं छत्रशलाकादिपृथग्भावो विमृष्यताम्।
क्व यातं छत्रमित्येष न्यायस्त्वयि तथा मयि॥[2]

इति कूर्मविष्णुपुराणादिभ्यः।

गुणानां परमं रूपं न दृष्टिपथमृच्छति।
यत्तु दृष्टिपथं प्राप्तं तन्माये (यै) व सुतुच्छकम्॥

इति पातञ्जलभाष्यस्थात् व्यासधृतवाक्याच्च। अतएव न्यायाचार्यैरपि विकारमिथ्यात्वं विचारतः प्रतिपादितम् "बुद्ध्या विवेचनात्तु भावानां याथात्म्यानुपलब्धिस्तन्त्वपकर्षणे पटसद्भावानुपलब्धिवत् तदनुपलब्धिः, स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः, मायागन्धर्वनगरमृगतृष्णावद् वा, बुद्धेश्चैवं निमित्तसद्भावोपलम्भात्, तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिरि" त्यादिसूत्रैरिति। तत्त्वतो मिथ्याबुद्धिः कार्येषु, कार्याणां व्यावहारिकसत्त्वेऽपि परमार्थतोऽसत्त्वात्। प्रधानतो मुख्यतस्तु मिथ्याबुद्धिः शशशृङ्गादिषु, तेषां सर्वथैवासत्त्वादिति विभाग इत्यर्थः। एतेषां सूत्राणां पूर्वपक्षतया व्याख्यानमपव्याख्यानमेव, एषां सूत्राणां श्रुतिस्मृत्यनुसारित्वात्। [3]स्पष्टं सिद्धान्तसूत्रानुपलम्भाच्चेति[3]।

यच्च द्वितीयाध्याये गौतमाचार्यैरवयवी व्यवस्थापितः, तद्व्यवहारत एव। उदाहृतसूत्राणि च तत्त्वज्ञानपरीक्षाप्रकरणस्थानीति न पूर्वापरविरोधाशङ्का। तथा चोक्तम्—"न सूरयो हि व्यवहारमेतं तत्त्वावमर्षेण सहामनन्ति" इति। तस्मात् श्रुतिस्मृतिन्यायैर्विकारमिथ्यात्वं सिद्धम्। अतो न मिथ्याविकारैर्विवर्तरूपैर्ब्रह्मणो निर्विकारचिन्मात्रतायाः पारमार्थिक्या विरोध इति। अतो मदुक्तावतारिकां परित्यज्य स्वकल्पितसिद्धान्तानुसारेण सूत्रमिदं तेऽन्यथा व्याचक्षते। तत्र तां व्याख्यां पश्चान्निराकरिष्यामः।

---

[1] कूर्म पु० उ० अ० २ श्लो० ३९।

[2] विष्णु पु० अं० २ अ० १३ श्लो० ९।

[3] अयं पाठः २ पु० ना० इति मु० ग्रा०। अयं पाठ उभयत्र ह० लि० पु० वर्तते।

यत्तावद् विकारासत्यत्वमुक्तं तदस्माभिरप्यभ्युपगम्यते, कूटस्थनित्यस्यैव पारमार्थिकसत्त्वात् सर्वथैवासत्ताविरहात्, न तु प्रकृतितद्विकारयोः।

"[1]यत्तु कल्पान्तरेणापि नान्यसंज्ञामुपैति वै।
परिणामादिसंभूतां तद्वस्तुवृत्तयः तच्च[1]॥

वस्त्वस्ति किं कुत्रचिदादिमध्यपर्यन्तहीनं सततैकरूपम्।
यच्चान्यथा त्वं द्विज याति भूयो न तत्तथा तत्र कुतो हि तत्त्वम्॥

इति विष्णुपुराणादिभ्यः।

विशेषस्त्वियान्, यद् भवद्भिर्विकाराणां शुक्तिरजततुल्यत्वमिष्यतेऽस्माभिस्तु असत्तामात्रांशे शुक्तिरजतस्वप्नादेर्दृष्टान्तत्वमिष्यते न त्वत्यन्तासत्त्वेऽपि, "वैधर्म्याच्च न स्वप्नादिवदि" त्यागामिसूत्रात्, स्वाप्नवस्तूनामपि कनककुण्डलवन्मनः परिणामतया तुच्छत्वस्य निराकरिष्यमाणत्वाच्च। बाह्यविषयसत्त्वासत्त्वाभ्यामेव च जाग्रत्स्वप्नयोर्वैधर्म्यमिति। "सदसत्ख्यातिर्बाधाबाधाभ्यामि" ति कपिलसूत्रादपि प्रपञ्चस्य नात्यन्ततुच्छत्वम्। सदसद्रूपत्वमेव च व्यावहारिकसत्त्वम्। इदमेव च व्यावहारिकसत्त्वं नैयायिकादयोऽनित्यत्वपरिणामित्वलयवत्त्वादिकं वदन्ति। [2]प्रपञ्चस्यानिर्वचनीयत्वं तु पारमार्थिकसदसद्भ्यां कूटस्थशशशृङ्गाभ्यां विलक्षणत्वमिति[2]।

ननु विरुद्धं सदसत्त्वं कथमेकत्रोपपद्येतेति चेन्न, एकधर्मेण सत्त्वदशायां परिणामिवस्तुनामतीतानागतधर्मेणासत्त्वात्। तथा हि वदयत्याचार्यः "सत्त्वाच्चावरस्य, असद्व्यपदेशादिति चेन्न धर्मान्तरेण वाक्यशेषादि" ति सूत्राभ्याम्। अत एव गौतमाचार्योऽपि मिथ्याबुद्धेर्द्वैविध्यमुक्तवान्। घटादयो हि अनागताद्यवस्थासु व्यक्ताद्यवस्थाभिर्बाध्यन्त इति घटादयो मिथ्याशब्देनोच्यन्ते। विद्यमानधर्मैश्च तदानीं न बाध्यन्त इति सत्या इत्यप्युच्यन्ते। एतेन सत्कार्यवादोऽप्युपपादितः, सर्वेषां सदसद्रूपत्वादिति। या च वाचारम्भणश्रुतिः सा अवयवविभागे सति विकाराणां नाममात्रत्वं वदति, उपादानस्यैव च तदपेक्षया तदानीं सत्यत्वं वदति। अन्यथा मृद्विकारादिदृष्टान्तासिद्धिदोषात्। "न निरोध" इति श्रुतिरपि पारमार्थिकसत्यत्वमेव प्रतिषेधति। [3]आत्मनोऽनिरोधादिकं वा प्रकरणात्। एवं न्यायसूत्राण्यपि नित्यत्वरूपमेव याथार्थ्यं निराकुर्वन्ति, अन्यथाकार्यकारणभावादिप्रतिपादनविरोधात्[3]। यानि च वाक्यानि

[1] अयं पाठः २ पु० ना० इति मु० शा०।
'तद्वस्तु वृय तच्च किम्' इत्येकस्मिन् ह० लि० पु० पाठः।
'तद्वस्तु रय कि' इत्यपरस्मिन् ह० लि० पु० पाठः। उभावपि पाठावयुक्तौ।

[2] अयं पाठ उभयस्मिन् ह० लि० पु० वर्तते।
अयं पाठः २ पुस्तके ना० इति मु० शा०।

[3] अयं पाठः उभयत्र ह० लि० पु० वर्तते।
अयं पाठः २ पुस्तके ना० इति मु० शा०।
'आत्मनो निरोधादिकम्' इत्युभय ह० लि० पु० पाठः।

प्रपञ्चज्ञानस्य भ्रमत्वं वदन्ति, तान्यपि कारणेषु [1]आद्यन्तयो [1]र्विकाराभावादुपपद्यन्ते। तदभाववति तत्प्रकारकज्ञानस्यैव भ्रमत्वादिति। एतेन—

सद्भाव एषो भवते मयोक्तो, ज्ञानं यथा सत्यमसत्यमन्यत्।
एतच्च यत् संव्यवहारभूतं, तत्रापि चोक्तं भुवनाश्रितं ते॥

ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः।
तथैवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्॥
चिदिहास्ति च चिन्मात्रमिदं चिन्मयमेव तु।
चित्त्वं चिदहमेते च लोकाश्चिदिति संग्रहः॥

इति विष्णुपुराणादिवाक्यान्यपि व्याख्यातानीति बोध्यम्। ज्ञानं ज्ञानस्वरूपः परमात्मा, स एव सत्य जीवाश्चांशतया अंशिन्येकीभूताः। ❀अथवा लयवत्त्वेन परमात्मापेक्षया तेऽप्यसन्तः "यथा वृक्षो वनस्पतिस्तथैव पुरुषो मृषे"ति श्रुतेः। यदपि "न यत् पुरस्तान्न च तत्परस्तान्मध्ये च तत्र व्यपदेशमात्रमि" त्यादिवाक्ये प्रपञ्चस्य कालत्रयेऽप्यसत्त्वमुक्तं तदाद्यन्तयोरसत्त्वेन प्रतिक्षणपरिणामसिद्ध्या पूर्वपूर्वरूपैः सदैवासत्त्वमभिप्रेत्य। तथा च स्मर्यते—

नित्यदा ह्यङ्गभूतानि भवन्ति न भवन्ति च❀।
कालेनालक्ष्यवेगेन, सूक्ष्मत्वात्तन्न दृश्यते॥ इति।

ये तु रज्जुसर्पादिवत् प्रपञ्चस्यात्यन्ततुच्छत्वमिच्छन्ति, ते तु बौद्धप्रभेदा एव, "मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमेव वा" इत्यादिपद्मपुराणवाक्यात् "असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरमि" त्यादिगीतावाक्याच्च। किं च बन्धमोक्षादिकं सर्वं मिथ्येति वेदान्ता आहुरिति गुरुमुखादापाततः श्रवणादेवाकृतसाक्षात्कारस्यापि शिष्यस्य सर्वत्रैवानाश्वासात् श्रवणमननादौ साक्षात्काराय प्रवृत्तिरेव न स्यान् महानास्तिकत्वसंपादनात्, बह्वायाससाध्ये फलनिश्चयस्यैव प्रवृत्तिहेतुत्वादिति।

[ अपि च चैतन्यातिरिक्तस्य सर्वस्यात्यन्तासत्त्वं येन प्रमाणेन साधनीयं, तत्सदसद्वा ? आद्ये तेनैव सर्वमिथ्यात्वबाधः, अन्त्ये असतोऽप्यर्थसाधकत्वे असता प्रमाणेन सर्वसत्यत्वमपि सिध्यतु। यच्च तैरुच्यते—अस्माभिः पराभिप्रेतप्रमाणैरेव पराभिप्रेतार्थाः खण्ड्यन्ते स्वमते च प्रमाणाभावादेव न किञ्चित् सिध्यतीति, तदप्यसत्, प्रमाणाभावेऽप्यर्थसंशयस्यैवोदयात्, द्वैतयोः[2] (द्वैताद्वैतयोः) प्रत्ययादिभिः प्रतीयमानत्वात्। ]

---

[1] 'परमार्थतो' इति २ पु० पाठ इति मु० शा० टि०।

❀अयं पाठः उभयत्र ह० लि० पु० वर्तते।

[ ] कोष्ठान्तर्गतः पाठ उभयत्र ह० लि० पु० वर्तते।
अयं पाठः २ तु० नास्तीति मु० शा०।

[2] "द्वैतयोः" इति एकस्मिन् ह० लि० पु० पाठः।
"द्वैताद्वैतयोः इति अन्यस्मिन् ह० लि० पु० पाठः।

अत्र च कक्षानुकक्षायां ग्रन्थबाहुल्यमात्रमित्युपेक्षितम्। किं च अस्मदुक्तरीत्या सृष्ट्यादिवाक्यानामपि प्रामाण्यसंभवे भ्रमानुवादमात्रत्वकल्पनानौचित्यं चेति। यदि चानुभवरूपा सिद्धिरेव सत्तेत्युच्यते "सत्ता सर्वपदार्थानां नान्या संवेदनादृते" इत्यभियुक्तवाक्यात्। तथा चानुभवरूप आत्मैव सः, राहोः शिर इतिवद् धर्मधर्मिभावस्य विकल्पमात्रत्वादिति, तदा तादृशमसत्त्वं जडवर्गस्यास्माभिरपीष्यत एव, अर्थक्रियाकारित्वरूपस्य भावत्वरूपस्य सत्त्वस्यैवाभ्युपगमादिति। तस्माल्लयाव्यक्तत्वादिपर्यायमनित्यत्वमेवासत्त्वम् 'सत्ता नित्यताऽभावो नाश' इतिवृद्धवाक्यात्। अत्र प्रपञ्चमिथ्यात्ववाक्यैर्वेदान्तगोचरै "र्दृश्यमानमिदं सर्वमनित्यमिति चोच्यत" इति प द्मवाक्याच्चेति।

[1]अत एव "न सन्ति पितरश्चेति कृत्वा मनसि यो नरः।
न तर्पयति तान् भक्त्या तस्य रक्तं पिबन्ति ते॥" इति

प्रपञ्चासत्यतादृष्टिनिन्दास्मृतिपरम्परापीति दिक्[1]।

स्यादेतत्, प्रलये ब्रह्मणि प्रकृतिद्वारा प्रपञ्चसमन्वयाभ्युपगमे "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमि" ति ब्रह्माद्वैतश्रुतिविरोधः, तेन वाक्येन सजातीयविजातीयस्वगतभेदानाम् "एकमि" त्यादिपदत्रयेण निरासात्। न च पारमार्थिकसत्तया ब्रह्माद्वैतं तद्वाक्यार्थं इति वाच्यम्, तथा सति सर्गकालेऽपि ब्रह्मण एव पारमार्थिकसत्त्वादग्र आसीदित्यतीतप्रयोगानौचित्यात्। "बहु स्यामि" त्युत्तरवाक्यासंगतेश्च, बहुभवनस्य वाचारम्भणतया पारमार्थिकसत्त्वाभावादिति। तस्मादनुपपन्नं सदेवेत्यादिवाक्यमिति।

अत्रोच्यते—"आप एवेदमग्र आसुः, ब्रह्म वा इदमग्र आसीदेकमेव तदेकं सन्न व्यभवत्तत् श्रेयोरूपमत्यसृजत क्षत्रमि" त्यादिश्रुताविवोक्तश्रुतावपि अविभागलक्षणाभेदेनाद्वैतबोधनात्, समानवाक्यानुसारेणैव तात्पर्यावधारणस्यौत्सर्गिकत्वात्, अन्यथा चेदंशब्दवैयर्थ्यात्, "सत्प्रतिष्ठा" इति वाक्यशेषस्याधाराधेयभावानुपपत्तेश्च। तथा "यथा मधु मधुकृतो निष्टिष्ठन्ति नानात्ययानां वृक्षाणां रसान् समवहारमेकतां रसं गमयन्ति" इत्यादि दृष्टान्तावगताविभागस्य परित्यागानौचित्याच्च। यथा च सर्गादौ पृथिव्याः जले सूक्ष्मरूपेणाविभागाद् "वैशेष्यात्तद्वाद" इति न्यायेन "आप एवेदमग्र आसुरि"त्युच्यते, जलभेदेन च तदानीं पृथिव्यादिकमसदित्युच्यते। यथा वा क्षत्रियादिसर्गात् पूर्वं क्षत्रियादीनां ब्राह्मणशरीरे सूक्ष्मरूपैरविभागाद् वैशेष्येण "ब्रह्म वा इदमग्र आसीदेकमेवे" त्युच्यते, तथैव प्राकृतप्रलये प्रकृतितत्कार्यजीवानां ब्रह्मणि सूक्ष्मरूपेणाविभागाद् वैशेष्यन्यायेन सदाख्यं "ब्रह्मैवेदमेकमेवाद्वितीयमासीदि" त्युच्यते। वैशेष्यं च स्वकार्यकारित्वेन बोध्यम्।

ब्रह्मचैतन्यं हि विश्वावभासनरूपं स्वकार्यं प्रलयेऽपीदानीमिवैव कुर्वदास्ते प्रकृ-

---

[1] अयं पाठ उभयत्र ह० लि० पु० वर्तते।
अयं २ पुस्तके नास्तीति मु० शा०।

तिपुरुषादयस्तु सृष्ट्यादिलक्षणस्वकार्येभ्य उपरता एव सुषुप्तास्तिष्ठन्तीति। पुरुषार्थ-क्रियाकारित्वमेव च लोके सत्त्वमिति व्यवह्रियते। तथा चोक्तं प्रश्नोपनिषदि—"स यथा इमा नद्यः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति [1]भिद्येते तासां नामरूपे समुद्र इत्येव प्रोच्यते, एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति [2]भिद्येते चासां नामरूपे पुरुष इत्येव प्रोच्यते, स एषोऽमृतोऽकलो भवति, एतदेवा "हं परं ब्रह्म वेद नातः परमस्ती"ति। स एष परिद्रष्टा जीवोऽकलः कलाभिः सूक्ष्मशरीराख्यैः एकादशेन्द्रियपञ्चभूतरूपैः षोडशभिर्वियुक्तः सन् परमात्मा पुरुषो भवति। सूर्यकिरणवदंशानामंशिन्यविभागादित्यर्थः। "यथा नद्यः स्यन्दमानाः समुद्रेऽ-स्तं गच्छन्ति नामरूपे विहाय, तथा विद्वान् नामरूपाद् विमुक्तः परात् परं पुरुषमुपैति दिव्यमि" ति मुण्डकैकवाक्यत्वादिति। एवं च सति सदेवेत्यादिवाक्यस्थमेवकारा-दिपदत्रयं सजातीयविजातीयस्वगतविभागशून्यत्वपरमेवेति मन्तव्यम्। [3]स्वगतश्च लक्षणान्यत्वरूपो विभागोऽवच्छेदभेदेनाकाशादिषु गुहाकूपश्रोत्रादिरूपैः प्रसिद्ध इति[3]। यदेतत् प्रलयाद्वैतमुक्तम्, एतदेव विभागस्य वाचारम्भणत्वेनाव्यक्तावस्था-याश्च स्वाभाविकतया नित्यत्वेन च पारमार्थिक[4] मित्युक्तं कौर्मादिषु—

तस्मादद्वैतमेवाहुर्मुनयः परमार्थतः।
भेदो व्यक्तः [5](व्यक्तस्व) भावेन सा च मायात्मसंश्रया॥[6]

इत्यादिभिः। अस्यार्थः—परमात्मचैतन्याद्वैतमेव पारमार्थिकं मुनय आहुः। भेदो विभागलक्षणद्वैतं तु व्यक्तकार्यरूपेण। सा च व्यक्तावस्था आत्माधिष्ठाना मायैव मायाकार्यत्वात् इन्द्रजालवत् क्षणभङ्गुरत्वादिति।

ननु अद्वितीयशब्दस्याविभागार्थकत्वं श्रुतिस्मृत्योः कथमवधारितमिति चेत्, "न तु तद्द्वितीयमस्ति ततोऽन्यद् विभक्तमि" त्यादिश्रुतेः।

पृथग् विभक्ता प्रलये च गोप्ता।
अविभक्तं च भूतेषु विभक्तमिव च स्थितम्।
उभयोस्त्वविभागेन साध्यसाधनयोरिह।
विज्ञानमद्वैतमयं तद् वाग्रोधो मयोदितः।

---

[1] "भिद्येते" इत्युभय ह० लि० पु० पाठः साधुः।
मुद्रितपुस्तके 'भिद्यन्ते' इति पाठो न सम्यक्।

[2] "भिद्यंते" इत्युभयत्र ह० लि० पु०, मु० पु० च पाठोऽसम्यक्।

[3] अयं पाठः उभयत्र ह० लि० पु० वर्तते।
अयं पाठः २ पुस्तके ना० इति मु० शा०।

[4] "परमार्थः" इत्येव पाठः उभयत्र ह० लि० पु० वर्तते।
परमार्थतः सार्वकालिकमिति २ पुस्तके पाठः इति मु० शा०।

[5] "भेदो व्यक्तः स्वभावेन" इत्येव पाठः उभयत्र ह० लि० पु० वर्तते।

[6] कूर्मपु० उ० अ० २ श्लो० २२।

क्षितिपरमाणवोऽनिलान्ते, पुनरपि यान्ति तथैकतां धरित्र्या ।
सुरपशुमनुजादयस्तथान्ते, गुणकलुषेण सनातनेन तेन ॥

इत्यादिस्मृतेः, "अविभागो वचनादि" त्यादिसूत्रैश्चेति गृहाण । एतेन—

ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः ।
अर्थस्वरूपं पश्यन्तः भ्राम्यन्ते मोहसंप्लवे ॥

इत्यादिवाक्येष्वपि ज्ञानस्वरूपे परमात्मनि प्रलीनतया तदविभक्तत्वमेव तत्स्वरूपत्वं बोध्यम् । प्रलये हि पुंप्रकृत्यादिकं ज्ञानस्वरूपेणैव रूप्यते न त्वर्थरूपेण, अर्थतो व्यञ्जक-व्यापाराभावात् । यथा स्वसर्गादौ पृथिवी जलरूपेणैव व्यज्यते न तु पृथिवीरूपेण, गन्धकाठिन्यादीनां व्यञ्जकानामभावादिति । [1]नन्वेतादृशाविभागज्ञानस्य किं फल-मिति चेत्, समस्तपञ्चविंशतितत्त्वविलापनेन विविक्तब्रह्मात्मताज्ञानस्यानुरूपस्तद्भावो मुक्तिः फलमिति[1] दिक् ।

ननु अविभागो लक्षणानन्यत्वं प्रलयकाल एव भवति, तेन कथं सर्गव्यवहार-कालेऽपि ब्रह्माद्वैतश्रुतिस्मृतय उपपद्येरन् ? यथा "ब्रह्मैवेदं सर्वम्, आत्मैवेदं सर्वम्, स एव सर्वं यद्भूतं यच्च भव्यं सनातनम्, नेह नानास्ति किंचन" इत्याद्याः श्रुतयः प्रकृतितत्कार्ययोः पुरुषान्तरस्य सत्तामप्रतिषिध्यापि ब्रह्माद्वैतं बोधयन्ति । तथा स्मृतयश्च—

"अहं हरिः सर्वमिदं जनार्दनो,
नान्यत्ततः कारणकार्यजातम् ।
व्यक्तं स एव चाव्यक्तं स एव पुरुषः परः ।
वासुदेवः सर्वमि" त्याद्याः" इति,

उच्यते—उक्तवाक्यानि शक्तिमत्कार्यकारणाभेदेनैव ब्रह्माद्वैतं बोधयन्ति । "तदनु प्रविश्य सच्च त्यच्चाभवत्, सर्वं समाप्नोषि ततोऽसि सर्वः,

अन्यश्च राजन् प्रवरस्तथान्यः पञ्चविंशकः ।
तत्स्थत्वाच्चानुपश्यन्ति एक एवेति साधवः ॥

इत्यादिश्रुतिस्मृत्येकवाक्यत्वात् । अयं च सार्वकालो ब्रह्मणि प्रपञ्चाभेदो बुद्धिपुरुष-योरिव गुणप्रधानभावेनात्यन्तसंमिश्रणरूपः संयोगादिविशेषः स्वरूपसम्बन्धविशेषो वाऽस्तु, विवेकिनामपि शर्करादुग्धयोरेकीभावव्यवहारात् ।

शक्तिशक्तिमतोर्भेदं पश्यन्ति परमार्थतः ।
अभेदं वानुपश्यन्ति योगिनस्तत्त्वचिन्तकाः ॥
अन्तर्यामी जगद्रूपी सर्वसाक्षी निरञ्जनः ।
भिन्नाभिन्नस्वरूपेण स्थितोऽसौ परमेश्वरः ॥

इति कूर्मनारदादिवाक्येनान्योन्याभावसंमिश्रणरूपयोर्भेदाभेदयोरेव पारमार्थिकत्व-वचनाच्चेति ।

---

[1]अयं पाठः २ पु० नास्तीति मु० शा० ।

अतएवोक्तम्—त एते भगवद्रूपं विश्वं सदसदात्मकम्।
आत्मनोऽव्यतिरेकेण पश्यन्तो व्यचरन् महीम्॥

इति। एवमेव कार्यकारणयोर्धर्मधर्मिणोश्चोभयोरेव लक्षणभेदसत्त्वेऽपि संमिश्रणरूप एवाभेदो बोध्यः "सर्वं खल्विदं ब्रह्म तज्जलानि" ति श्रुतेः, "कामादिकं मन एवे" त्यादिश्रुतेश्चेति।

इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः।
वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च॥

इत्यादिवाक्यानि च सर्वेषां ब्रह्मैवात्मेति बोधयन्ति नत्वत्यन्ताभेदमिति। एतेन सर्वाणि ब्रह्माद्वैतवाक्यानि व्याख्यातानि। तथा विभुत्वेन जीवानामपि सर्वाभेदप्रतिपादिकाः श्रुतिस्मृतयो व्याख्याता इति दिक्।

इदानीं परेषां सूत्रव्याख्यानमपि निराक्रियते। ते चैवमिदं सूत्रं व्याचक्षते—ननु ब्रह्मणः शास्त्रयोनित्वं न संभवति यत "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामि" ति पूर्वमीमांसायां कार्यपरत्वमवधृतम्। अतः कथमविशेषे सिद्धे ब्रह्मणि वेदान्तानां प्रामाण्यं स्यादित्याशङ्कां समाधत्ते—"तत्तु समन्वयात्"। तु शब्दः शङ्काव्यवच्छेदार्थः। सिद्धस्यापि ब्रह्मणस्तत् शास्त्रयोनित्वं समन्वयादवधार्यं "सदेव सोम्येदमग्र आसीदि" त्यादिवाक्यानामविधिप्रकरणस्थानामुपक्रमोपसंहारादिलिङ्गषट्केन सिद्ध एव ब्रह्मणि तात्पर्यं संबन्धावधारणादित्यर्थ इति।

तत्रेदमुच्यते—भवेदेवं पूर्वपक्षः सिद्धान्तश्च यदि ब्रह्मणो न विधिशेषत्वं स्यात्, न त्वेवम् "आत्मेत्येवोपासीत, आत्मा वारे द्रष्टव्यः" इत्यादिविधिशेषत्वाद् ब्रह्मण। आचार्येणापि "सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्" इत्यादिसूत्रैः सगुणनिर्गुणसाधारण्येन सर्ववेदान्तविद्यास्वेव विधिर्वक्ष्यते, सर्वशब्दस्य सगुणविद्यापरत्वेन संकोचस्य बाधकाभावेनानौचित्यादिति। अत एव यस्यां विद्यायां विधिर्न श्रूयते तत्रापि विधिः कल्पनीयः। जैमिनिप्रदर्शितन्यायाच्च। तथाहि, पूर्वमीमांसावाक्यानि—'दृष्टो हि तस्यार्थः कर्मावबोधनं, चोदनेति क्रियायाः प्रवर्तकं वचनं, तस्य ज्ञानमुपदेशः, तद्भूतार्थानां क्रियार्थेन समाम्नायः, आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामि" त्यादीनि। न चैतानि निर्गुणविद्यातिरिक्तपरत्वेन संकोचमर्हन्ति, बाधकाभावात्। नापि संकोचः संभवति, "आत्मा वा अरे द्रष्टव्य" इत्यादिना निर्गुणप्रकरणेऽपि विधिश्रवणादिति।

स्यादेतत्, निर्गुणप्रकरणस्थानि 'द्रष्टव्य'इत्यादीनि विधिप्रतिरूपकाण्येव न तु विधयः, रज्जुरेवायं न सर्पोऽतोऽत्र भयं त्यजेदित्यादिलौकिकवाक्यवत्। तथाहि, ज्ञाते ऽज्ञाते च विधिर्न संभवति, ज्ञाते पुरुषार्थसमाप्त्या विधिवैयर्थ्यात्, अज्ञाते च विध्यर्थज्ञानानुपपत्तेः। न हि यागमजानतो यजेदिति विध्यर्थज्ञानं संभवति, विशेषणज्ञानसाध्यत्वाद् विशिष्टज्ञानस्येति। अपि च ब्रह्मज्ञाने सति समस्तप्रपञ्चस्य बाधितत्वात् किमर्थं केन करणेन कः प्रवर्तते ?। किं च यत् कर्तुमकर्तुमन्यथाकर्तुं वा शक्यते, तत्र च नियोगविषयप्रतिपादनानन्तरं पुरुषस्य नियोग उचितः। न चाधिकारिणो

वेदान्तश्रवणे सति ब्रह्मज्ञाने पुरुषस्यैवं स्वातन्त्र्यं संभवति। चक्षुरुन्मीलने सति सन्निकृष्टघटसाक्षात्कारवद् वेदान्तश्रवणमात्रादेव नित्यसंनिकृष्टब्रह्मात्मसाक्षात्कारस्यावश्यकत्वात्। अतोऽपि तत्त्वमस्यादिवाक्यैः प्रतिपादिते ब्रह्मात्मत्वे दर्शनं न विधानमर्हति विधातुं युज्यते, शब्देनैव साक्षात्कारोत्पत्तेरिति। अत्रोच्यते—

यदि शब्दादेव साक्षात्कारोऽसंप्रज्ञातसमाधिश्च भवति तदोक्तदोषैर्ब्रह्मज्ञाने विधिर्न स्यान्न त्वेवं "श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वादि" ति योगसूत्रेण साक्षात्काररूपप्रज्ञाविषयस्य विशेषस्य शब्दानुमानागोचरत्वावगमात्। शब्दानुमाने हि सामान्यमात्रविषयके पदार्थतावच्छेदकव्यापकतावच्छेदकप्रकाराभ्यामेव तयोर्ज्ञानजनकत्वात्, अन्यथाऽतिप्रसङ्गात्।

[1]ब्रह्मणि च गुणकर्मादिरूपविशेषाऽभावेऽपि उपाधिवृत्तिप्रतिबिम्बरूपेऽप्यन्ततो जीवचैतन्यादिभ्यो विशेषः योगिप्रत्ययगम्योऽस्ति, अन्यथा भेदानुपपत्तेरिति[1]। दशमस्त्वमसीत्यादिवाक्येष्वपि प्रत्यक्षसामग्र्या सहार्थः समाजः सूक्ष्मत्वेन कालक्रमानाकलनं वा। न च ब्रह्मज्ञानेऽप्यार्थसमाजादिकमस्त्विति वाच्यम्, सवासनमिथ्याज्ञानेन प्रतिबन्धतस्तत्त्वसाक्षात्कारासंभवात्। सामान्यगोचरस्य शाब्दज्ञानस्य विशेषगोचरसाक्षात्कारप्रतिबन्धकदोषनिरासकत्वासंभवात्। योगजधर्माणां चेतरधर्माणामिवाऽचिन्त्यसामर्थ्यतया सामान्यगोचरयोगस्यापि विशेषगोचरसाक्षात्कारहेतुत्वं शास्त्रप्रामाण्यतोऽवधार्यते।

श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।
मत्वा च सततं ध्येय एते दर्शनहेतवः॥

इति स्मृतेः। न च प्रतिबन्धकस्य सवासनमिथ्याज्ञानस्य सत्त्वात् कथं योगेनापि साक्षात्कारः स्यादिति वाच्यम्, शास्त्रप्रामाण्येन योगजधर्मस्योत्तेजकत्वसंभवात्। शब्दानुमानज्ञानयोश्च प्रमाणाभावेन लोके व्यभिचारदर्शनेन चोत्तेजकत्वकल्पनानवकाश इति। अपि च ब्रह्मणोऽतीन्द्रियतया न तत्र योगजधर्मं विना साक्षात्कारः संभवति।

न च ब्रह्मणोऽतीन्द्रियत्वे कथं तत्र प्रपञ्चभ्रमः शास्त्रेण प्रतिपाद्यते "विज्ञानमेकं निजकर्मभेदविभिन्नचित्तैर्बहुधाभ्युपेतमि" त्यादिनेति वाच्यम्, अतीन्द्रियेऽप्याकाशे मालिन्यादिभ्रमवद् बौद्धानामणुषु घटभ्रमवद्वा ब्रह्मणि प्रपञ्चभ्रमसंभवात्। *उपासकानां ब्रह्मणि भ्रमसत्त्वाच्च। तथा च ब्रह्मणोऽतीन्द्रियत्वं ()लौकिकप्रत्यक्षाविष-

---

[1] अयं पाठ उभयत्र ह० लि० पु० वर्तते।
अयं पाठः २ पु० नास्तीति मु० शा०।

* अयं पाठः २ पु० नास्तीति मु० शा०।
अयं पाठः उभयत्र ह० लि० पु० वर्तते।

()किन्तु "अतीन्द्रियत्वं लौकिकप्रत्यक्षप्रमित्यविषयत्वमेव" इत्येकत्र पाठः।
"अतीन्द्रियत्वं लौकिकप्रत्यक्षानमित्यविषयत्वमेव" इत्यन्यत्र पाठः।
"अतीन्द्रियत्वं लौकिकप्रत्यक्षप्रमित्यविषयत्वमेव" इति पाठः सम्भवति। मया तु मुद्रितपुस्तकपाठ एवात्र रक्षितः।

यत्वमेव, अहमिति सर्वदा भातत्वात्। अतो भवदुक्तः शब्दात् ब्रह्मतत्त्वसाक्षात्कार एव नोपपद्यते। अयं घट इत्यादिप्रत्ययस्त्विदन्त्वादिरूपैर्ब्रह्मणि भ्रमरूपः संभवत्येव, अहं संसारीत्यादिभ्रमवत्। रूपवत्त्वादिकं तु चाक्षुषादिप्रमायामेव कारणं भ्रमेषु तु दोष एवेति न ब्रह्मणि प्रपञ्चभ्रमानुपपत्तिः*।

ब्रह्मणि प्रपञ्चभ्रमश्च ब्रह्मणि पारमार्थिकत्वेन प्रपञ्चज्ञानं, स्वाप्नपदार्थभ्रमवदित्यवोचाम। तस्मात् शब्दतः सामान्यतो ज्ञातेऽपि ब्रह्मणि विशेषज्ञानरूपसाक्षात्काराय विधियुक्त इति।

[1]अथ तथाप्यविद्यानिवृत्त्याख्यादृष्टद्वारा मोक्षहेतुत्वात् ज्ञानविधिर्विफल इति चेन्न, अवघातस्येव दृष्टादृष्टोभयद्वारत्वसंभवात्। प्रायश्चित्तस्येव ज्ञानस्याप्यदृष्टद्वारा पूर्वकृतपापादिक्षयहेतुत्वात् "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशावि" त्यागामिसूत्रात्, विधिवलेन शीघ्रं प्रारब्धक्षये ब्रह्मप्राप्त्यादेरप्यदृष्टकार्यत्वसंभवाच्च। अत एवागामिना "कार्याख्यानादपूर्वमि" ति सूत्रेण ब्रह्मविद्यातोऽप्यपूर्वं वक्ष्यति[1]।

ननु तथापि "श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति त्रिविधित्रयेणैवार्थात् साक्षात्कारसिद्धेः द्रष्टव्य इति विधिर्व्यर्थ इति चेन्न, पुरुषार्थसाधनतया द्रष्टव्य इत्यस्य विधेः प्राथमिकत्वात्, तत्र साधनाकाङ्क्षयैव श्रवणादिरूपाङ्गविधित्रयप्रवृत्तेरिति। किं च जातेऽपि साक्षात्कारे साक्षात्कारसन्तानरूपसंप्रज्ञातसमाधौ द्रष्टव्य इत्यादिरूपविधिः संभवति, तस्य च फलमसंप्रज्ञातसमाधिरिति पातञ्जले स्पष्टम्,

आगमेनानुमानेन ध्यानाभ्यासरसेन च।
त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम्॥

इत्यादिस्मृतिषु चेति। उत्तमं योगमसंप्रज्ञातम्। एतेन शब्दस्य साक्षात्कारजनकत्वेऽपि न तावन्मात्रेण कृतकृत्यता किं त्वसंप्रज्ञातसमाधिनैवेति मन्तव्यम्।

यच्चान्यदुक्तं साक्षात्कारात् प्रपञ्चबाधे ज्ञानसाधनाभावात् कथं ज्ञानस्य विधेयत्वं स्यादिति, तदपि तुच्छम्, बाधो हि न नाशो ज्ञानिनां प्रारब्धभोगासंभवात्। अत एव न शशशृङ्गादिवदत्यन्तासत्त्वावधारणमपि "नाभाव उपलब्धेरि" ति सूत्रात् भिक्षादावपि प्रवृत्त्यसंभवापत्तेश्च। किंतु प्रतिक्षणभङ्गुरतया मनःपरिणामेषु स्वाप्नादिपदार्थेष्विव बाह्येष्वपि पारमार्थिकसत्त्वाभावनिश्चय एव बाधः, तादृशबाधेऽपि च सति ज्ञानसाधनादीनां व्यावहारिकसत्त्वात् पूर्ववदेव व्यवहारो ज्ञानिनामपि संभवत्येवेति। पारमार्थिकसत्त्वाभावज्ञानं च प्रकृतिपुरुषयोर्विवेकज्ञानं तथा समाधिसाधनं ब्रह्मणि रतिमन्यत्र च वैराग्यं च जनयति, अतो न तस्य वैफल्यमिति। एतेन साक्षात्कारे तत्सन्तानरूपं (पे) संप्रज्ञातसमाधौ च पुरुषस्य स्वातन्त्र्यमपि स्पष्टम्। मनननिदिध्यासनविपयान्तरसञ्चारादिभिः कर्तुमकमन्तुंयथाकर्तुं च शक्यत्वादिति।

---

[1] अयं पाठ उभयत्र ह० लि० पु० वर्तते।

किन्तु—"निवृत्त्याख्यदृष्टद्वारा" इति पाठ उ० ह० लि० पु० वर्तते।

अयं पाठः २ पु० नास्तीति मु० शा०।

※साक्षात्कृतिसाध्यत्वस्यैव विध्यर्थत्वे तु यजेतेत्यादिरपि विधिर्न स्यात्, यागस्येच्छाविशेषत्वादिच्छायां चेष्टसाधनज्ञानादेरेव साक्षाद्धेतुत्वादतः साक्षात्परम्परासाधारण्येन कृतिसाध्यत्वमेव च विध्यर्थो लाघवाच्च। अन्यथा जगन्नाथो द्रष्टव्य इत्यादिविधिषु दर्शनादिहेतुव्यापारे धातुलक्षणागौरवाच्च, दर्शनाद्यनुकूलव्यापाराणां साक्षादिष्टसाधनत्वाभावेन विधेयत्वानौचित्याच्च।

किं च यथा श्रोतव्य इत्यादौ शाब्दबोधाद्यनुकूलव्यापारे धातुलक्षणया विधित्वं परैः समर्थ्यते तथैव द्रष्टव्य इत्यादावप्यात्मदर्शनानुकूलव्यापारलक्षणया विधित्वं समर्थ्यताम्। अपि च श्रोतव्य इति विधिशेषतयाऽपि ब्रह्मप्रतिपादनमस्मदभिमतं सेत्स्यत्येवेति सिद्धम्। ब्रह्मणो विध्यंधपरम्परासाधारण्येनेष्टसाधने विधिरस्त्विति चेत्, श्रुतहान्यश्रुतकल्पनागौरवेण कृतिसाध्यत्व एव परम्परासाधारण्यौचित्यादिति। [1]शेषत्वं※ (दितिशेषत्वम्।) तत्र च कुतार्किकाणां कक्षापरम्परानिरासे ग्रन्थबाहुल्यभयादस्माभिरुपरम्यते। सच्छिष्यैस्त्वनयैव दिशा कक्षान्तरमपि स्वयं निरसनीयम्। तदयं श्लोकः—

सामान्यतः शुद्धपन्था अस्माभिः संप्रदर्श्यते।
सन्मार्गे विदिते विज्ञैर्विमार्गो ज्ञास्यते स्वयम्॥ इति।

यद्भयाच्च तैः सिद्धार्थप्रामाण्यमपसिद्धान्तोऽपि स्वीक्रियते, तद्भयमप्यस्थान एव। तथाहि, तेषां भयबीजम्—वेदान्तानां ब्रह्मज्ञानविधिपरत्वे ब्रह्म न सिध्येत्, निरवकाशप्रत्यक्षादिप्रमाणविरोधेन "वाचं धेनुमुपासीते" त्यादिश्रुतिवत् "तत्त्वमस्या" दिवाक्यानामुपासापरत्वेनैवोपपत्तेरिति। [2]तत्र (तन्न,) ब्रह्मणोऽतीन्द्रियत्वेन प्रत्यक्षप्रमाणाविरोधात्। ब्रह्मजीवयोरखण्डत्वस्य तु श्रुतिविरोधेनैव हेयत्वात् न तु प्रत्यक्षविरोधेन। अनुमानशब्दादीनां च ब्रह्मबोधकानामनिर्णयात्। तथा च धियामौत्सर्गिकं प्रामाण्यमिति न्यायेनोपासादिविधिशेषत्वेऽपि सेत्स्यत्येव ब्रह्म यागविधिशेषत्वेन स्वर्गादिवत्। [3]न च फलप्रतिपादकतया स्वर्गादिवाक्यस्य स्वपरत्वमिति वाच्यम्, "ब्रह्म वेद ब्रह्मैव भवति, सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता, ब्रह्मनिर्वाणमृच्छती" ति फलश्रुतिबलाद् ब्रह्मवाक्यस्यापि स्वपरत्वसिद्धेरिति।

---

※ अयं पाठ उ० ह० लि० पु० वर्तते।
किन्तु तत्र 'यजेतेत्यादि' स्थाने 'पतेतेत्यादि' पाठो वर्तते सचासम्यक्।
अयं पाठः २ पु० नास्तीति मु० शा०।

[1] दितिशब्देन सहितमेव शेषत्वपदम् सानुस्वारम् उभयत्र ह० लि० पु० वर्तते।

[2] 'तत्र' इत्येव पाठ एकस्मिन् ह० लि० पु० वर्तते।
उभयपार्श्वतः पूर्णविरामसहितः 'तत्र' इति पाठोऽपरत्र ह० लि० पु० वर्तते।
किन्तु 'तन्न' इत्येव पाठ उचितो भाति।

[3] अत्र "न च फलप्रतिपादकतया स्वर्गादिवत्"। इत्यधिकः पाठ उभय ह० लि० पुस्तकयोः मु० पुस्तके च वर्तमानश्छिन्नः।

किं च धर्मादिवदेव श्रुत्यनुगृहीतानुमानाज्जगत्कारणं सेत्स्यति, अतः सिद्धार्थ-प्रामाण्येऽस्माकं न निर्बन्ध इति ।

यश्च परैः सिद्धब्रह्मपरत्वे वेदान्तानामुपक्रमादिभिस्तात्पर्यसमन्वय उक्तः, सोऽपि विपरीत एव । तथाहि—

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ।।

इति तात्पर्यग्राहकलिङ्गानां मध्ये फलार्थवादयोरसिद्धेर्ब्रह्मविज्ञान एव संभवो न तु ब्रह्मणि, ब्रह्मज्ञानस्यैव "य एवं वेद"इत्यादिना फलश्रवणाच्च । "नातः परं वेदितव्यं हि किंचिदि" त्याद्यर्थवादस्यापि ज्ञान एव श्रवणाच्चेति । तस्माद् ब्रह्मज्ञान एव तात्पर्य-ग्राहक[1] समग्रलिङ्गोपपत्तेः[1] ब्रह्मज्ञानाख्यकार्यपरत्वमेव वेदान्तानाम् । अपि च "अधीहि भगवन् ब्रह्मविद्यां वरिष्ठामि" त्यादिश्रुतिषु,

ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।
परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।।

इत्यादिस्मृतिषु च ज्ञानस्यैव मुख्यतः उपक्रमादिस्तात्पर्यग्राहकोऽस्ति । [2]अतस्तत्रैव तात्पर्यसिद्धौ तच्छेषतया ब्रह्मणोऽप्युपक्रमादिः क्वाचित्क उपपद्यते । ब्रह्मणि तु तात्पर्ये तदशेषतया ज्ञानं ( ज्ञाने ) सर्वथैवोपक्रमादिरनुपपन्न[2] ।

किं च यैः कार्यपरत्वं वेदानामुच्यते तैरकार्यत्वेन तात्पर्याभावस्यैव साधनात्, तेषामकार्यत्वलिङ्गेन भवतां समन्वयस्य सत्प्रतिपक्षितत्वाद्वा न समन्वयेन सिद्धपरत्व-मवधारयितुं शक्यत इति संक्षेपः ।

यच्चैतदस्माभिर्ब्रह्मज्ञाने विधिर्व्यवस्थापितः तद् ब्रह्मज्ञानविधिरूपभगवदाज्ञा-पालनेनापि विदुषां ब्रह्मार्चनं भवतीति प्रतिपादयितुमेव, "श्रुतिस्मृती ममैवाज्ञे" "स्व-कर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानव" इत्यादिस्मृतेरित्यवधेयम् ।।

ननु यदि प्रलये ब्रह्मणि प्रधानादिसमन्वयोऽभ्युपगतः, तर्हि तस्यैव जगज्जन्मा-दिकारणत्व[3] ( त्वं ) श्रुत्यर्थोऽस्तु, भवदभिमतब्रह्मकल्पने तस्य जगदधिष्ठानकारणत्व-कल्पने च गौरवात् । तथा चेश्वरप्रतिषेधे सांख्यसूत्रद्वयम् "प्रमाणाभावान्न तत्सिद्धिः, श्रुतिरपि प्रधानकार्यत्वस्ये" ति । ब्रह्मशब्दोऽपि व्यापकत्वात् प्रधानजीवयोरुपपद्यत

---

[1] अयमेव पाठो अन्यतर ह० लि० पु० वर्तते । किन्तु 'समग्र' इति स्थाने 'समान' इति एकतर ह० लि पु० पाठो वर्तते ।
समानलिङ्गोपपत्तेरिति २ पु० पा० इति मु० शा० ।

[2] अयं पाठ उभयत्र ह० लि० पु० वर्तते ।
अयं पाठः २ पु० नास्तीति मु० शा० ।

[3] "कारणत्व" इत्येव पाठ उभयत्र ह० लि० पु० वर्तते ।

एव। अधिष्ठानकारणत्वं च जीवानामेवास्तु। समस्तकार्याणामदृष्टद्वारा जीवकार्यत्वस्य* अदृष्टवदात्मसंयोगजन्यतया जीवाधेयत्वस्य वा सर्वास्तिकसंमतत्वात्। अत एव श्रुतिस्मृती जीवप्रकरणेऽपि स्तः। "सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद" [१]इतिश्रुतिः,

"सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि॥"

इति [१]स्मृतिश्चेति। तथा च [२]समच्छास्त्रस्य नित्येश्वरपरत्वे शास्त्रयोनित्वादिति हेतुरसिद्धः, कार्यब्रह्मपरत्वे च[२] पृथक् शास्त्रारम्भो विफलः, सांख्यादिभिरेव तथाविधब्रह्मनिरूपणादिति तामिमामाशङ्कामपाकरोति—

ईक्षतेर्नाशब्दम् ॥ ५ ॥

विवादास्पदप्रधानादिभ्यो ऽतिरिक्तं ब्रह्म न अशब्दम् नाऽशास्त्रयोनि, न जगत्कारणश्रुत्यप्रतिपाद्यमिति यावत्। कुतः ? ईक्षतेः इतरावृत्तिश्रुत्युक्तकारणविशेषणेक्षणवत्त्वादित्यर्थः। [३]हेतावीक्षणमिदं स्वरूपाख्यानं न तु हेतौ प्रवेशनीयं वैयर्थ्यात्। अत्र यत् इतरावृत्तिश्रुत्युक्तजगत्कारणविशेषणवद् भवति, तत् जगत्कारणतया प्रतिपाद्य भवति। यत्तद्भ्यां सामान्यतो व्याप्तौ सांख्यशास्त्रोक्तं प्रधानं दृष्टान्तः, वैशेषिकाणां चाणवः। पक्षे ब्रह्मेति स्वरूपाख्यानमात्रमतो न पक्षासिद्धिः[३]।

$ अत्रासिद्धिवैयर्थ्यादिपरिहाराय प्रयोगोऽन्यथाकर्तव्यः। यथा, जगत्कारणश्रुतिः पराभिमतप्रधानादिभ्योऽन्यविषया, तदवृत्तिधर्मप्रकारेण बोधकत्वात्, आकाशाद्वायुरित्यादिश्रुतिवदिति।

अथवा तद्ब्रह्म चेतनो अचेतनो वा, चेतनत्वेऽपि स्वयम्भूस्तदतिरिक्तो वेति विशेषाकाङ्क्षायामिदं सूत्रं प्रववृते "ईक्षतेर्नाशब्दमि"ति। तज्जगत्कारणं ब्रह्म ना पुरुषः, कुतः ? ईक्षतेः ईक्षणश्रुतिगोचरत्वात्। अत एवेक्षणात् तद्ब्रह्म अशब्दं शब्दब्रह्मणो हिरण्यगर्भादति[४]रिक्तं च भवति, सुतरां तु पुरुषान्तरेभ्य इत्यर्थः। हिरण्यगर्भस्य च वेदमयत्वेन वेदगर्भत्ववच्छब्दब्रह्मत्वमपि स्मर्यते—

---

* 'कार्यत्वस्य इत्येव पाठ उ० ह० लि० पु० वर्तते।
'कार्यस्य' इति मु० पु० पाठोऽसम्यक्।

[१] उभयत्र ह० लि० पु० 'इति श्रुतिः' तथा'इति स्मृतिश्चेति' पाठौ न स्तः।

[२] अयं पाठः २ पु० नास्तीति मु० शा०।
अयं पाठ उभयत्रापि ह० लि० पु० नास्ति।

$ अयं पाठः उभयत्रापि ह० लि० पु० वर्तते।
अयं पाठः २ पु० नास्ति इति मु० शा०।

[४] "हिरण्यगर्भ इतिरिक्तं च" इति मु० पु० पाठः।
"हिरण्यगर्भा इतिरिक्तं च" इत्युभयत्र ह० लि० पु० पाठो वर्तते।
"हिरण्यगर्भादतिरिक्तं च" इत्युचितो भाति पाठः।

पूर्वस्यादौ परार्धस्य ब्राह्मो नाम महानभूत्।
कल्पो यत्राभवद् ब्रह्मा शब्दब्रह्मेति यद् विदुः ।।

इति भागवतादाविति । $

जगत्कारणस्येक्षणे श्रुतयश्च "तदैक्षत बहुस्यां प्रजायेये" त्याद्याः । स्मृतयश्च—

सर्गकाले तु संप्राप्ते ज्ञात्वा तं कालरूपकम् ।
अन्तर्लीनविकारश्च तत्स्रष्टुमुपचक्रमे ।।
तस्माद्व्यक्तमुत्पन्नं ततश्चापि महानभूत् ।

इत्याद्या इति । नहीदमीक्षणं प्रधानादीनामचेतनानां संभवति, ईक्षणध्यानचिन्तनादि-शब्देषु चैतन्यस्य विशेषत्वात् । ईक्षणादिशब्दस्योपाधिवृत्तिमात्रवाचकत्वेऽपि प्रकृति-स्वातन्त्र्यवादिभिस्तत्पूर्विका प्रधानप्रवृत्ति[1]र्नाभ्युपगम्यत एव । नापि जीवानां, महदादिसृष्टेः पूर्वं कारणाभावेन जीवानां चैतन्यफलोपधानाभावात् । न चेयमीक्षण-पूर्विका सृष्टिर्महत्तत्त्वसृष्टेः पश्चादिति वक्तुं शक्यते, ❀ईक्षणात् पूर्वमपि द्वैतापत्त्या "सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयमि" तीक्षणाव्यवहितपूर्वश्रुत्यनुपपत्तेः,❀ "ततश्चापि महानभूदि"ति स्मृतिविरोधाच्च । नापि पूर्वसर्गीयमीक्षणं वक्तुं शक्यते, "सर्गकाले तु संप्राप्ते ज्ञात्वे"ति सर्गसमकालीनज्ञानावगमादिति ।

यच्च महदादिसृष्टेस्तमोमयत्वं स्मर्यते "* अबुद्धिपूर्वकः सर्गः प्रादुर्भूतस्त-मोमयः" इति विष्णुपुराणादिषु*, तदीश्वराधिष्ठिततमोगुणपरिणामत्वेनैवोपपद्यते । अबुद्धि (बुद्धि) पूर्वकत्वमपि कार्यसत्त्वस्यैव बुद्धिशब्देन परिभाषितत्वादुपपद्यत इति । "‡ तमसैवेदमावृतमासीत्, आसीदिदं तमोभूतमप्रज्ञातमलक्षणमि" त्यादि-ववक्यान्य [2]पीश्वरज्ञाननित्यत्वे[2] ष्युपपन्नानि । [3]तमसि लीनतया स्वाज्ञानत्वेनैव सर्वप्राण्यवस्थानस्य तदर्थत्वात्[3] । तथा च श्रुतिः "तमो वा इदमेकमासत तत्परे स्यात् तत्परेणेरितं विषमत्वं प्रयाती" ति, सति संपद्य न विदुः सति सम्पद्यामह इति" इति च ।

---

[1] "प्रवृत्तिर्नाभ्युपगम्यत एव" इत्युभयत्र ह० लि० पु० पाठो वर्तते, स च साधुः ।
"प्रधानप्रवृत्तिरनभ्युपगमात्" इति मु० पु० पाठोऽसमञ्जस इवाभाति ।

❀ अयं पाठः २ पु० नास्तीति मु० शा० ।
अयं पाठ उभयत्र ह० लि० पु० वर्तते ।

* अं १ अ० ५ श्लो० ४ ।
"अबुद्धिपूर्वकः सर्गः" इति पाठ एकस्मिन् ह० लि० पु० वर्तते ।
अन्यस्मिन् ह० लि० पुस्तके तु अत्रत्यः पाठोऽतिविश्रृङ्खलितोऽस्ति ।

‡ "तमसैवेदमावृतमासीत्" इत्यंश उभयस्मिन् ह० लि० पु० नास्ति ।

[2] अयं पाठ उभयत्र ह० लि० पु० वर्तते ।
अयं पाठः २ पु० ना० इति मु०शा० ।

[3] अयं पाठः २ पु० ना० इति मु० शा० ।
अयमपि पाठ उ० ह० लि० पु० वर्तते ।

यद्यपि प्राकृतमानसदाहिकरूपेण त्रिविधा सृष्टिः पुराणादौ स्मर्यते, तदपि आद्यशरीरिणं विराड्जीवमधिकृत्यैव न परमेश्वरं, प्रयत्नवदात्मसंयोगादिवादृष्टवदात्मसंयोगादपि जगदुत्पत्तेरिति।

ये त्विदं सूत्रं प्रधानादीनां जगत्कारणताप्रतिषेधकमितीच्छन्ति, तेषां मते एवं सूत्रं व्याख्येयम्—अशब्दं प्रधानादि न जगत्कारणं मूलकारणविशेषणेक्षणाभावादिति। [1]अत्राशब्दमिति स्वरूपाख्यानं न तु अशब्दत्वेनैव पक्षता, मूलकारणश्रुत्यप्रतिपाद्यत्वरूपस्याशब्दत्वस्य प्रागसिद्धेः। मूलकारणत्वं च स्वतन्त्रकारणत्वं परेच्छानधीनकारणत्वमिति यावत्[1]। हेतौ चात्रापि ईक्षणशब्दः स्वरूपाख्यानमिति।

आधुनिकास्तु सूत्रमिदमेवं व्याचक्षते—ईक्षणश्रुतेरशब्दं प्रधानादिकं न जगत्कारणं हेतुगर्भविशेषणत्वेनाशब्दत्वादित्येव हेतुः। नास्ति शब्दो यस्मिन्निति विग्रहेणाश्रौतत्वादित्यर्थः। [2]अशब्दत्वे च हेतुरीक्षतेरिति। श्रुत्युक्तकारणविशेषणस्येक्षणस्याभावादित्यर्थः इति। *तत्र ( तन्न ), ईक्षणाभावेन "तदैक्षते" त्यादिश्रुत्यर्थत्वाभावस्यैव सिद्धेः, न तु सामान्यतः श्रुत्यर्थत्वाभावस्य[2]। "प्रधानक्षेत्रज्ञपतिर्गुणेशः, अजामेकाम्, यस्तन्तुनाभ इव तन्तुभिः प्रधानजैः स्वभावतः, मायां तु प्रकृतिं विद्यादि" त्यादिश्रुतिभिः प्रधानस्यापि श्रौतत्वात्। शक्तिविधया प्रधानस्य जगत्कारणत्वश्रवणञ्च "बह्वीः प्रजाः सृजमानां सरूपाः" इत्यादिश्रुतिष्विति।

कथं वाऽशब्दत्वमपि, स्मृतिशतात्, सांख्योक्तानुमानत, ईश्वराविकारित्वान्यथानुपपत्त्यादिभिश्च प्रधानहेतुत्वसिद्धेः। [3]किं च अश्रौतत्वहेतोर्जीवेश्वरत्वसिद्धिः। न चात्र प्रधानमात्रस्य जगत्कारणत्वं निषिध्यत इति वाच्यम्, न्यूनतापत्तेः। उत्तरोत्तराधिकरणेषु जीवानामुत्पत्तिनिराकरणदर्शनादिति[3]।

यत्तु "मायां तु प्रकृतिं विद्यादि" त्यादिश्रुतेरर्थं कल्पयन्ति—मायात्राविद्या, तामेव प्रकृतिं जगत्कारणं विद्यादिति, तदप्यसारम्, "अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः" इत्यव्यवहितपूर्ववाक्ये का माया ? को वा मायया बद्ध ? इत्याकाङ्क्षायां प्रवृत्तस्य "मायां त्वि" त्यादिवाक्यस्य यथोक्तार्थतानौचित्यात्। [4]प्रकृत्यादिकमुद्दिश्य मायादिशब्दवाच्यत्वप्रतिपादनं विना आकाङ्क्षानिवृत्त्यसंभवात्[4] शुक्तिरजताद्यविद्यायां मायाशब्दाप्रयोगाच्च। ऐन्द्रजालिकमन्त्रादावेव व्यामोह-

---

[1] अयं पाठ उभयत्र ह० लि० पु० वर्तते।
अयं पाठः २ पु० ना० इति मु० शा०।

[2] अयं पाठ उभयत्र ह० लि० पु० वर्तते।
अयं पाठः २ पु० ना० इति मु० शा०।

* '। तत्र।' इति पाठ उभयत्र ह० लि० पु० वर्तते। तन्न इत्येव पाठस्तत्र भाति।

[3] अयं पाठ उभयत्र ह० लि० पु० वर्तते। अयं पाठः २ पु० नास्तीति मु० शा०।

[4] अयं पाठ उ० ह० लि० पु० वर्तते।
अयं पाठः २ पु० नास्तीति मु० शा०।

कशक्तौ लोके मायाव्यवहाराच्च। कार्ये कारणाभेदात्तु तद्रचितपदार्थेष्वपि माया-शब्दप्रयोगः। "भूयश्चान्ते विश्वमायानिवृत्तिरि" त्यादौ च मायाया [1]व्यापारनिवृत्ति-रेवावगम्यते न नाश इति। तस्मात्—

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्।
अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्॥

इति श्रुतौ श्रुत्यन्तरस्मृतिप्रसिद्धप्रकृतेरेव मायाशब्दवाच्यत्वं विधीयत इति।

तदेवमीक्षापूर्वकमहदाद्यखिलसृष्टिश्रवणात् केवलप्रधानादिजडवर्गात् हिरण्य-गर्भादिभ्यश्चातिरिक्तं सदा सर्वज्ञं पर ब्रह्मेति सिद्धम्। तदुपाधौ विश्वाकारनित्यवृत्त्य-नङ्गीकारे सर्वकर्तृत्वानुपपत्तेः, स्वोपाधिवृत्तावेव स्वस्य अकर्तृत्वात्। तथा च "स विश्वसृग् विश्वविदात्मयोनिरि" त्यादिश्रुतिविरोधः स्यात्। आत्मयोनितया तु ब्रह्मापि क्वचित् आत्मयोनिरित्यंशांशिनोरभेदेनोच्यते[2] आत्मनो जीवचेतनस्य योनित्वाद् वेति बोध्यम्। [3]धारावाहिकानन्तवृत्तिस्वीकारे च गौरवमात्रमधिकं स्यात्[3]।

न चैवं नित्यवृत्तिसत्त्वेन प्रकृतेः प्रतिक्षणपरिणामित्वभङ्ग इति वाच्यम्, परि-माणादिवत् वृत्तिविशेषस्य नित्यत्वेऽपि जीववृत्त्यादिभिः प्रतिक्षणपरिणामसंभवाच्च। ईशोपाधेरपरिणामित्वेऽपि जडत्वसाधर्म्येण प्रकृतिमध्ये प्रवेशसंभवाच्चेति। अथैवं "स ईक्षाञ्चक्रे, सोऽकामयते" त्यादिश्रुतिषु ब्रह्मणो ज्ञानकामनाद्युत्पत्तिवचनमनुपपन्न-मिति चेन्न, स्वकार्यजनकसामग्रीसमवधाननिमित्ताभिव्यक्तिरूपोत्पत्तेः लोकव्य-वहारसिद्धाया अनुवादात्। लोकेऽप्यभिव्यञ्जकस्य तैलसंबन्धस्यानन्तरं व्यवह्रियते "कुङ्कुमगन्ध इदानीं जात" इति। अथवाऽमुककालेऽमुकं पश्यन् करिष्यामीतीक्षण-संकल्पाद्यवच्छेदककालाद्युत्पत्त्यैवेक्षणाद्युत्पत्तिरुपचर्यते, "शिखी जात" इत्यादिवदिति मन्तव्यम्।

जीवज्ञानादिवदीश्वरज्ञानादेरनित्यत्वाङ्गीकारे च—

नैवाहस्तस्य न निशा नित्यस्य परमात्मनः।
उपचारात्तथाप्येतत्तस्येशस्य द्विजोच्यते॥
अभयं भ्रान्तिरहितमनिद्रमजरामरम्।

इति विष्णुनारसिंहपुराणादावगम्यमानमीश्वरस्य जीवव्यावृत्तं ज्ञानोपरमादिरूप-निशादिशून्यत्वं नोपपद्येत। उपचारश्चाभिव्यक्त्यादिरूपो व्याख्यात एवेति।

स्यादेतत्, ईक्षणनिमित्तकप्रकृतिप्रवृत्तिस्वीकारे प्रकृतिस्वातन्त्र्यप्रतिपादकयोः सांख्ययोगयोरप्रामाण्यप्रसङ्गः। तौ हि पुरुषार्थमात्रप्रयुक्तायाः प्रकृतेः स्वयं पुरुषेण

---

[1] व्यापारानिवृत्तिरिति मु० पु० पाठोऽयुक्तः।

[2] अयमेव पाठ उभयत्र ह० लि० पु० वर्तते।
अभेदेन जीवयोनित्वादुच्यत इति २ पु० पा० इति मु० शा०।

[3] अयं पाठः २ पु० अधिक इति मु० शा०।

संयुक्तायाः सकाशान्महदाद्युत्पत्तिं मन्येते। [1]सांख्ययोगयोश्चायमेव विशेषो यत् त्रिविधोऽपि सात्त्विकराजसतामसरूपो महान् सांख्यमते पूर्वकल्पसिद्धजीव एव, तत एव च ब्रह्मविष्णुमहेश्वरा इत्युच्यन्ते, न पुनर्नित्य ईश्वरोऽस्तीति। योगमते तु महतः सात्त्विको भागो नित्यैश्वर्यशक्तिमान् नित्यमुक्तः "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर" इति योगसूत्रात् सत्त्वाख्यकार्योपाधिकत्वं जन्यज्ञानत्वं परेषामप्यनुमतमिति।[1]

न चैवम् "आदिः स संयोगनिमित्तहेतुः परस्त्रिकालादकलोऽपि दृष्टः" इत्यादिश्रुतिविरोधात् सांख्ययोगयोरप्रामाण्यमेवास्त्विति वाच्यम्, "तत्कारणं सांख्ययोगाधिगम्यं ज्ञात्वा देवं मुच्यते सर्वपाशैरि" ति श्वेताश्वतरादिश्रुतिभ्यः, "नास्ति सांख्यसमं ज्ञानं नास्ति योगसमं बलमि" त्यादिस्मृतिभ्यश्च तत्प्रामाण्यसिद्धेः। यच्च सांख्ययोगशब्दयो रूढिं परित्यज्यान्यार्थतावर्णनं, तदपि न, "सांख्यस्य वक्ता कपिलः, हिरण्यगर्भो योगस्य वक्ता नान्यः कदाचने" ति योगियाज्ञवल्क्यादेः,

संख्यां प्रकुर्वते सांख्याः प्रकृतिं च प्रचक्षते।
तत्त्वानि च चतुर्विंशत् तेन सांख्या इति स्मृताः॥

इति मोक्षधर्मादेश्च विरोधादिति।

अत्रोच्यते—केवलजीवात्मज्ञानादपि मोक्षो भवतीति प्रतिपादयितुं सांख्या अनीश्वरबौद्धमताभ्युपगमवादेन प्रतिज्ञातमात्मानात्मविवेकं प्रतिपादयन्ति, ईश्वरव्यवस्थापनस्य स्वशास्त्रेऽनुपयोगात्, श्रुतिभ्यो ब्रह्मविष्णुशिवातिरिक्तेश्वरसाधने प्रयासबाहुल्यात्, ब्रह्ममीमांसयैव तत्साधनस्य कृतत्वाच्च। अभ्युपगमवादश्च विष्णुपुराणादौ दृष्टः—

एते भिन्नदृशां दैत्या विकल्पाः कथिता मया।
कृत्वाभ्युपगमं तत्र संक्षेपः श्रूयतां मम॥

इत्यादिषु। न पुनरीश्वरमेव परमार्थतोऽपि सांख्या नाङ्गीकुर्वन्ति "तत्कारणं सांख्ययोगाधिगम्यमि"—त्युक्तश्रुत्यादिभिस्तदभ्युपगमावगमात्, "जगदाहुरनीश्वरमि" त्यादिना स्मृतिष्वासुरत्वेन निरीश्वरवादस्यात्यन्तनिन्दितत्वाच्चेति।

योगास्तु ईश्वरमभ्युपगम्यापि तस्य वैषम्यनैर्घृण्यनिरासायासलाघवाय स्वभाववादाभ्युपगमवादेन प्रकृतिस्वातन्त्र्यमनूद्यैवेश्वरप्रणिधानात् योगादिकं प्रतिपादयन्ति, [2]ईश्वरस्य भक्तभूतानुग्रहमात्रप्रयोजनस्वीकारेण[2] अन्यथा प्रकृतिपुरुषयोः स्वत एव संयोगे "आदिः स संयोगनिमित्तहेतुरि" त्यादिश्रुतिविरोधेन योगाप्रामाण्यानौचित्यादिति दिक्।

इदं पुनरिहावधेयम्—रजस्तमःसंभिन्नतया मलिनं कार्यसत्त्वं परमेश्वरस्य

---

[1] अयं पाठः २ पु० नास्तीति मु० शा०।
अयं पाठ उभयत्रापि ह० लि० पु० न वर्तते।

[2] अयं पाठः २ पु० नास्तीति मु० शा०। अयं पाठ उभय ह० लि० पु० वर्तते।

नोपाधिः, किन्तु केवलं नित्यज्ञानेच्छानन्दादिमत् सदैकरूपं कारणसत्त्वमेव तस्योपाधिः "न स्थानतोऽपि परस्योभयलिङ्गमि" त्यागामिसूत्रात्। सृष्टिस्थितिसंहारेष्वधिकारिणस्तु सत्त्वादिकार्योपाधिकास्त्रयो देवा ब्रह्मविष्णुमहेश्वराः महदाख्या अवान्तरेश्वरा एव। न च "मत्तः परतरं नान्यत् किंचिदस्ति धनञ्जये" त्यादिगीतादिविरोध इति वाच्यम्, तथाविधवाक्यानां व्यक्तपरत्वात् ईश्वरस्य वा ( चा ) व्यक्ततया व्यवहार्यत्वाभावात्। एतेन तेषां परमेश्वरत्वादिकमपि व्यक्तापेक्षया बोध्यम्। नित्यत्वं च "आभूतसम्प्लवं स्थानममृतत्वं हि भाष्यत" इति स्मृतेर्बोध्यम्।

ब्रह्मादीनां त्रयाणां तु स्वहेतौ प्रकृतौ लयः।
प्रोच्यते कालयोगेन पुनरेव समुद्भवः॥

इति मात्स्यादिभ्यस्तेषामप्युत्पत्तिलयसिद्धेरिति। अथवा "तद् यो यो देवानां प्रत्यबुध्यत स एव तदभवदि" ति श्रुतेर्विष्णुदेवताया औत्पत्तिकब्रह्मात्मभावात् "मत्त. परतरं नास्ति" इत्यादिवचनमुपपद्यते। तथा च वक्ष्यत्याचार्यः—शास्त्रदृष्ट्या तूपदेशो वामदेववदि" ति। ❈अत एवानुगीतायां "परं हि ब्रह्म कथितं योगयुक्तेन तन्मये" ति श्रीकृष्णवचनाद् भगवद्गीतायां परं ब्रह्मैव कार्यब्रह्मणा श्रीकृष्णेन अहमित्युपदिष्टमिति निर्णीतम्। अन्येषामपि ज्ञानिनां ब्रह्मभावेऽपि विष्णावेव मुख्यतो ब्रह्मभावाविर्भावात् "मत्तः परतरं नास्ती" ति वचनं युक्तं *नान्यस्य ( नान्यत्र )। तदुक्तं मोक्षधर्मे तस्य सर्वज्ञानिमुख्यत्वम्—

"अनाद्यन्तं परं ब्रह्म न देवा नर्षयो विदुः।
एकस्तद् वेद भगवान् धाता नारायणः प्रभुः॥
नारायणात् सृष्टिगण[1]" इत्यादिना। तथा शिवस्यापि "मत्तः

परतरं नास्तीति" ‡युक्ति ( उक्ति ) र्युक्ता।❈

ये हि जीवाः पूर्वपूर्वसर्गेषु करणवर्गेण सहैव सायुज्यमुक्त्या परमेश्वरतां गताः, ते वासुदेवव्यूहे अन्तर्भवन्ति। तत्र च व्यूहे एक एव वासुदेवो नित्येश्वरः, इतरे तदंशाः वासुदेवाः तथा संकर्षणप्रद्युम्नानिरुद्धाख्यव्यूहरूपिणः विभूतिगणाः पूर्वसर्गसिद्धाः, त एते यथायोग्यं सन्ति, महदादिविराडन्तरूपेण ब्रह्मविष्णुरुद्रादिरूपेण चांशावताराः परमेश्वरस्य भवन्ति "आगच्छन्ति यथाकालं गुरोः सन्देशकारिणा ( कारिणः )" इति मोक्षधर्मात्। तथा च ये हरिहरादयः परमेश्वरकोटयस्तेषां "मत्तः परतरं नास्ती" ति तद्वचनमुपपद्यत एव। यद्यपि तेषां जगद्व्यापारवर्जमेवैश्वर्यं तथापि परमेश्वरात्मकतया सर्वस्त्रष्टृत्वसर्वाधारत्वाद्युपदेशोऽपि तेषु युज्यत इति। तेषां च कार्योपाधित्वम्—

---

❈ अयं पा० २ पु० ना० इति मु० श्रा०।

* उभय इ० लि० पु० अपि नान्यस्येत्येव पाठः।

[1] महाभा० मो० अ० २१० श्लोक० २३।

‡ उभय इ० लि० पु० अपि युक्तिरित्येव पाठः अस्ति।

गुणेभ्यः क्षोभ्यमाणेभ्यस्त्रयो देवा विजज्ञिरे।
एका मूर्तिस्त्रयो देवा ब्रह्मविष्णुमहेश्वराः॥
सात्त्विको राजसश्चैव तामसश्च त्रिधा महान्।

इति मात्स्यादिभ्य[१] इति।

बुद्ध्याख्यं समष्टिर्महत्तत्त्वं हि त्रिगुणात्मकमेकमेव सत्त्वाद्यंशभेदेन त्रयाणां देवानां सूक्ष्मशरीरं भवतीत्येका मूर्तिरुच्यते हरिहरात्मकदेहवत्। अतएव चैतत् सूक्ष्मशरीराधारभूतं पिण्डाख्यं स्थूलशरीरमप्येषामेकमेवेति त्रयाणामेव विश्वरूपत्वमुपपद्यते। त्रयश्च देवाश्चेतनरूपा भिन्ना एवेत्यर्थः। अतएव—

"अन्योन्यमनुरक्तास्ते अन्योन्यमनुजीविताः।
अन्योन्यं प्रगताश्चैव लीलया परमेश्वराः॥"

इति मात्स्यादिवाक्यमप्युपपन्नं त्रयाणामेकपिण्डतया परस्परसापेक्षत्वात् वातपित्तकफवत्। एतेन त्रयाणां भेदाभेदावपि व्याख्यातौ वेदितव्याविति।

ननु कार्योपाधिकत्वेऽपि योगिकायव्यूहवत् तेषामीश्वरलीलावतारत्वमेवास्तु, किमर्थं विष्ण्वादीनां चेतनान्तरत्वं कल्प्यते, "त्रिधा कृत्वात्मनो देहं सोऽन्तर्यामीश्वरः स्थितः" इति स्मृतेरिति चेन्न, कूर्मविष्णुपुराणादिषु पुरुषान्तरेण सह प्रकृतिं संयोज्यैव परमेश्वरस्तदुभयात्मकं देवतात्रयरूपं महान्तं सृजतीत्यवगमात्।

यथा कौर्मे—

प्रधानं पुरुषं चैव प्रविश्याशु महेश्वरः।
क्षोभयामास योगेन परेण परमेश्वरः॥
प्रधानात् क्षोभ्यमाणाच्च तथा पुंसः पुरातनात्।
प्रादुरासीन्महद्बीजं प्रधानपुरुषात्मकम्॥ इति।

न हि विष्ण्वादिदेवतायाः कृष्णाद्यवतारेषु पुरुषान्तरप्रवेशः श्रूयते फलवान् वा भवति। [२]अतो विष्ण्वादिदेवानां न साक्षादीश्वरावतारत्वं किं त्वंशावतारत्वम्, अतएव ऋष्यादीन् प्रकृत्य स्मर्यते—

एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्।
इन्द्रमायाकुलं लोकं मृडयन्ति युगे युगे॥

इति। अत्र कृष्णो विष्णुः स्वयं परमेश्वरस्तस्य पुत्रवत् साक्षादंश इत्यर्थः, ऋष्यादीनामंशांशिवचनादिति[२]। ईश्वरस्य प्रवेशश्च ज्ञानेच्छाप्रयत्नैर्व्यापनं, जीवस्य क्षोभश्च गुणद्वारा, योगश्च ऐकाग्र्यमिति। अयं च क्षोभः संयोगविशेषद्वारा महतो हेतुः। $तथा—

गुणोपाधिकभेदेषु त्रिष्वेतेषु सनातनः।
संयोज्यात्मानमखिलं जगत्कार्यं करोति यः॥

---

[१] मत्स्य पु० अ० ४ श्लो० १६।

[२] अयं पा० २ पु० नास्तीति मु० शा०। अयं पाठः उभय ह० लि० पु० वर्तते।

यस्याज्ञया जगत्सर्वं ब्रह्मा सृजति नित्यशः ।
हरिश्च पालको रुद्रो नाशकः स हि मोक्षदः ॥
मायाया गुणभेदेन विष्णुं रुद्रं पितामहम् ।
सृष्ट्वाऽनुप्राविशच्चैषामन्तर्यामितया परः ॥
ब्रह्माद्या मुनिशार्दूल पराभेदेन केवलम् ।
कुर्वन्ति सर्गस्थित्यन्तान् परतत्त्ववदेव हि ॥
मायाकार्यगुणछत्रा (च्छन्ना)ब्रह्मविष्णुमहेश्वराः ।
मायोपाधिपराग्रूपा न जीवव्यूहसंस्थिताः ॥$
अनाद्यं तं ( द्यन्तं )परं ब्रह्म न देवा नर्षयो विदुः ।
एकस्तद् वेद भगवान् धाता नारायणः प्रभुः ॥
नारायणाद् ऋषिगणास्तथा मुख्याः सुरासुराः ।
राजर्षयः पवित्राश्च परमं दुःखभेषजम् ॥ इति,
ब्रह्मविष्णुशिवादीनां यः परः स महेश्वरः ।

इति च नारदीयस्कान्दमोक्षधर्ममात्स्यवाक्येभ्योऽपि न साक्षादवतारत्वम् ।

तथा मनुयाज्ञवल्क्ययोरपि "खं संनिवेशयेत् खेष्वि" त्यादिना "प्रजने च प्रजापतिमि" त्यन्तेन सर्वशरीरेषु ब्रह्मविष्णुरुद्रपर्यन्तान् देवानुक्त्वा तेषां विष्णवादीनामप्यन्तर्यामितया पुरुषान्तरमुक्तम्,

प्रशासितारं सर्वेषामणीयांसमणोरपि ।
रुक्माभं स्वप्नधीगम्यं विद्यात्तं पुरुषं परम् ॥

इत्यादिना । तथा मनुनैव—

यत्तत् कारणमव्यक्तं नित्यं सदसदात्मकम् ।
तद्विसृष्टः स पुरुषो लोके ब्रह्मेति गीयते ॥

इत्यनेनाद्यपुरुषस्याव्यक्तब्रह्मकार्यस्यापि लौकिकब्रह्मत्वमुक्त्वा तस्यैव नारायणत्वमुक्तम्-

आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥

इति । अतो नारायणादप्यतिरिक्तः परमेश्वर इति । नारायणादिशब्दानामुपाधिमात्रपरत्वे च लक्षणापत्तिरिति । अपि च सूर्यादिसाहचर्येण विभूतित्वस्मरणादपि ईश्वरस्य विष्णवादीनां भेदोऽवगम्यते । तथा मात्स्ये—

पूजयेद् ब्रह्मविष्णवर्करुद्रविश्वात्मकं शिवम् ।
व्रतोपवासनियमैः श्रद्धया च विमत्सरः ॥
ब्रह्मा विष्णुश्च भगवान् मार्तण्डो वृषवाहनः ।
इमा विभूतयः प्रोक्ताश्चराचरसमन्विताः ॥ इति ।

नन्वेवं कथं गीतादिषु विष्णवादिदेवतैश्वर्यमेवोक्तं न तु परमेश्वरस्तस्यैश्वर्यं वेति चेत्,

---

$ अयं पाठः २ पु०नास्तीति मु० ग्रा० ।
अयं पाठः उभय ह० लि० पु० वर्तते ।

एवं सततयुक्ता ये भक्तास्त्वां पुर्युपासते।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥

इत्यादि प्रश्नप्रतिवचनाभ्यां विष्णुदेवाद् भेदेन परमेश्वरकथनात्। "अनादि मत्परं ब्रह्म न सत् तन्नासदुच्यते" इत्यादिना च परमेश्वरस्यैश्वर्यादिकथनादिति।

नन्वेवं कथमीश्वरो विष्णुरिति शिव इति चोच्यते नान्य इतीति चेत्, विष्णवादीनां स्वाभाविकब्रह्मात्मभावात्, साक्षादंशत्वान्मुख्यशक्तित्वाच्चेत्यवेहि "तत् यो यो देवानां प्रत्यबुध्यत स एव तदभवदि" ति श्रुतेः;

एकः शुद्धोऽक्षरो नित्यः सर्वव्यापी तथा पुमान्।
सोऽप्यंशः सर्वभूतस्य मैत्रेय परमात्मनः॥ इति,

ब्रह्मविष्णुशिवा ब्रह्म ( ह्मन् ) प्रधाना ब्रह्मशक्तयः। इति च स्मृतेश्च।

त्रयाणामपि च मध्ये विष्णुरेव ब्रह्मणो मुख्या शक्तिः—

सर्वशक्तिमयो विष्णुः स्वरूपं ब्रह्मणः परम्।
स परः सर्वशक्तीनां ब्रह्मणः समनन्तरः॥

इति पराशरवचनात्।

[1]ननु त्रिषु मध्ये शिव एवास्य मुख्या शक्तिरित्यपि शैवपुराणेपूच्यत इति चेत्, सत्यम्—विवक्षितगुणभेदेन कल्पभेदेन वा तस्य चोपपत्तिः। तदुक्तं कौर्मे—

सात्त्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेः।
तामसेषु शिवस्योक्तं राजसेषु प्रजापतेः॥ इति दिक्[1]

विष्णोर्ब्रह्मा ब्रह्मणश्च रुद्र इति सृष्टिक्रमश्च स्थूलदेहरूपेण पृथक् पृथगाविर्भाव एव बोध्यः, पुराणेषु तथा दर्शनादिति।

ये तु ईश्वरस्यान्तर्याम्यतिरिक्तविधयाऽपि योगिनामिव लीलाशरीरमिच्छन्ति तेषां मते[2] "न तस्य कार्यं करणं च विद्यते, अप्राणो ह्यमनाः शुभ्रो अक्षरात् परतः परः" इत्यादिश्रुतिविरोधः "रूपवदेव हि तत्प्रधानत्वादि" त्यागामिसूत्रविरोधश्च। कार्यं शरीरं करणं बुद्ध्यादि, बुद्ध्यादिना हि शरीरं प्रेर्यत इति। ब्रह्माण्डमधिकृत्य—

"तस्मिन् कार्यं च करणं संसिद्धं परमेष्ठिनः।"

इति स्मरणात्।

---

[1] अयं पाठः २ पु० ना० इति मु० शा०।
उभय ह० लि० पु० पाठोऽयं वर्तते।

[2] ईदृश एव पाठः ह० लि० पु० वर्तते, न टिप्पणीस्थः।
परमेश्वरस्यापि लीलाशरीरस्य छेदभेदादिना दुःखभोगो दुर्निवार इति २ पु० अधिकः पा० इति मु० शा० टिप्पणी।

[1]तथा—

"अशरीरः शरीरेषु सर्वेषु निवसत्यसौ।" इति,
"देहद्वयस्थितो नित्यः सर्वदेहविवर्जितः।"

इति च भारतादिष्वीश्वरस्य शरीरद्वयं प्रतिषिद्धम्[1]

तस्माद् विष्ण्वादिदेवानामेव स्थित्यादिलक्षणस्वाधिकारपालनार्थं मत्स्याद्यो लीलावताराः। ते च परब्रह्मणः प्रकृष्टशक्तितया आवेशावतारतया वा परमेश्वरत्वेनोपास्या इति। तथा च श्रुतिः "यन्मनसा न मनुते येनाहुर्मनो मतं तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते। यस्यामतं तस्य मतं मतं यस्य न वेद सः, अविज्ञातं विजानताम् विज्ञातमविजानताम्" इति।

ननु "नाहं प्रकाशः सर्वस्य योगमायासमावृतः।
मूढोऽयं नाभिजानाति लोके मामजमव्ययम्॥"

इति विष्णुदेवतावाक्यात् तस्याप्यमतत्वादिकमस्तीति चेत्, विष्णुदेवतायामपि महत्तत्त्वरूपोपाधिनेव ( नैव ) सर्वव्यवहारात्, तस्य च पराप्रत्यक्षत्वात्। तथापि "यन्मनसा न मनुते" इत्यस्य विष्णुदेवतायामसंभवः—

मनसैव जगत्सृष्टिं संहारं च करोति यः।
तस्यारिपक्षक्षपणे कियानुद्यमविस्तरः॥

इति विष्णुपुराणादौ विष्णुदेवताया मनोऽवगमादिति।

ननु विष्णुदेवतायाः परमेश्वराद् भेदे सति—

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा॥
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।
जीवभूतां महाबाहो ययेदं धार्यते जगत्॥§

इति विष्णुदेवतावाक्यं नोपपद्येत, परब्रह्मण एव प्रकृतिपुरुषाधिष्ठातृत्वस्वीकारादिति, मैवम्—अत्र वाक्ये () भूम्यादिरूपविकाराणामेव प्रकृतित्वस्मरणात्। अत एव जीवशब्दस्य व्यष्टिजीवपरत्वादिति। [2]अथवा तादृशानि सर्वाण्येव वाक्यानि परब्रह्मात्मताभिप्रायेणेति[2]।

नन्वेवं परब्रह्मणः सकाशाद् भेदे सति कथं विष्णुशिवप्रकरणस्थानि सृष्ट्यादिवाक्यानि ब्रह्मनिरूपणे साधकतयोपन्यस्यन्ते विचारकैरिति चेत्, तयोरीश्वरकोटितया

---

[1] अयमपि पाठः ह० लि० पु० वर्तते।

§ विष्णु पु० अं० १ अ० १२ श्लो० ५३।

() भूम्यादिरूप "इति उभय ह० लि० पु० पाठः साधुः।
भ्रमादिरूप "इति मु० पु० पाठो न सम्यक्।

[2] उभय ह० लि० पु० पाठोऽयं वर्तते। अयं पाठः २ पु० ना० इति मु० शा०।

परमेश्वरेण सह व्यवहारसाम्यादिति गृहाण। [१] अतएव—त्रयाणामेकभावानां यो वै भिदामि" त्यादिस्मृतिभिस्त्रयाणामेव देवानां स्वाभाविकब्रह्मात्मभावसाम्यात्, सर्वोपनिषत्स्वत एव ब्रह्मतयोपदिश्यन्ते उपासनार्थमिति[१]। परब्रह्मणश्च स्वतो नामरूपाद्यभावान् मुख्यविकारयोर्हरिहरयोर्नामरूपाभ्यामेव शास्त्रेपु प्रायशो व्यपदेशः [२]अतएव वैष्णवाः शैवाश्चाविवेकिनो विष्णवाद्यतिरिक्तं परमेश्वरमविद्वांसो ब्रह्ममीमांसाशास्त्रं विष्णवादिपरतया व्याचक्षत[२] इति मन्तव्यम्। अनामरूपत्वं च परब्रह्मणो विष्णुपुराणादावुक्तम्—

न सन्ति यत्र सर्वेशे नामजात्यादिकल्पनाः।
सत्तामात्रात्मके ज्ञेये ज्ञानात्मन्यात्मनः परे॥
नामरूपे न यस्यैको योऽस्तित्वेनोपलभ्यते।

इत्यादिनेति। आत्मनः परे जीवादतिरिक्त इत्यर्थः।

पञ्चसूत्र्यां समासेन पूर्वाचार्यैः प्रवर्तितः।
वेदान्तनगरीमार्गो विज्ञानार्केण दर्शितः॥



[१] अयं पाठः २ पु० ना० इति मु० शा०।
उभय ह० लि० पु० पाठोऽयं वर्तते।

[२] अयं पाठः २ पु० ना० इति मु० शा०।
अयं पाठो द्वयोः ह० लि० पु० वर्तते।

पञ्चसूत्र्यां संक्षेपतः प्रदर्शितः शास्त्रार्थः इतः परं प्रपञ्च्यते। 'ईक्षतेर्नाशब्दमि" ति सूत्रेण ब्रह्मणोऽशब्दत्वं[1] अशब्दस्य प्रधानादेः शास्त्रयोनित्वं वा निराकृतम्। [2]ब्रह्मणः परमपुरुषत्वं वा प्रसाधितं "तदैक्षत बहुस्यामि" तीक्षणश्रुतेः।[2] तत्रेदमाशङ्क्यते—

ननु प्रत्यासन्नकार्यकारितामपेक्ष्य कूलं पिपतिषतीत्यादिप्रयोगवत् तदैक्षतेत्यादिप्रयोगोऽप्यचेतन एव प्रधानादौ गौणोऽस्तु, "तत्तेज ऐक्षत, ता आप ऐक्षन्ते" त्यादौ सह पठितवाक्ये गौणत्वस्यावश्यं वाच्यत्वादिति, तामिमामाशङ्कामपाकरोति—

## गौणश्चेन्नात्मशब्दात् ॥ ६ ॥

ईक्षणशब्दो गौण इति चेन्न, आत्मशब्दात्। "सदेव सोम्येदमग्र आसीत् तदैक्षत" इत्यादिना प्रकृते सदीक्षितरि जगत्कारणे "तत्सत्यं स आत्मे" ति चेतनवाच्यात्मशब्दस्य प्रयोगात् प्रधानादेश्चाचेतनत्वादित्यर्थः। यच्चोक्तं गौणप्रायपाठ इति तदपि न, "तत्तेज ऐक्षत" इत्यादावपि तेजआद्यभिमानिदेवतानामेवेक्षितृत्वस्य "अभिमानिव्यपदेशस्त्वि" ति सूत्रेणैव व्यवस्थापयिष्यमाणत्वात्। मुख्यार्थसंभवे गौणत्वस्यान्याय्यत्वाच्चेति ॥

नन्वात्मशब्दस्यापि नानार्थतया प्रकृते भवत्यूर्वी जलात्मिकेत्यादिवदविभागाधारवाचित्वमेवास्तु, तत्राह—

## तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥

"आचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्य" इति वाक्यशेषे सदात्मनिष्ठस्य मोक्षकथनाच्चेतनवाच्येवायमात्मशब्दः। "तरति शोकमात्मविदि" त्यादिश्रुत्यन्तरे चेतनरूपात्मज्ञानादेव संसारनिवृत्त्यवगमादित्यर्थः। यच्चोक्तमात्मशब्दो नानार्थ इति, तदपि न, निरुपपदात्मशब्दस्याचेतने प्रयोगादर्शनाल्लाघवाच्च "क्षेत्रज्ञ आत्मा पुरुष" इति कोषादिभ्यश्च चेतनमात्रशक्तत्वात् अनेकार्थत्वस्यान्याय्यत्वात्। अविभागलक्षणगुणेनान्यत्रात्मशब्दस्य गौणत्वसंभवात्। अस्ति [५] श्रुत्यन्तरेऽपि जगत्कारणे निरुपपद आत्मशब्दः "आत्मा वा इदमग्र आसीदेकमेवाद्वितीयमि" ति।

तस्मात्तदेकवाक्यतयाऽपि "स आत्मा तत्त्वमसी" तिवाक्ये चेतनवाच्येवात्मशब्दो न पुनरैतदात्म्यमिदं सर्वमित्यस्य समानार्थकः। तथा सति पौनरुक्त्यापत्तेः।

---

[1] अशब्दत्वम् अशब्दस्य प्रधानादेः इति प्रथम ह० लि० पु० पाठः साधुः।
अशब्दत्वम् अशब्दप्रधानादेः इति द्वितीय ह० लि० पु० पाठः।

[2] अयं पाठ उभय ह० लि० पु० वर्तते।
अयं पाठः २ पु० नास्तीति मु० शा०।

अस्मन्मते च "एतदात्म्यमिदं सर्वमि" त्यनेन भवदुक्तात्मताया एव जगत्कारणे लब्धत्वान्न पौनरुक्त्यम्, "स आत्मे" त्यस्य चेतनार्थकत्वादिति ॥

ननु प्रधानोपासकस्यापि क्रममुक्तिः श्रूयते इति युक्तस्तन्निष्ठस्य मोक्षोपदेश इत्याशङ्कायामाह—

हेयत्वावचनाच्च ॥ ८ ॥

साक्षान्मोक्षहेतुत्वं परित्यज्य परम्परया मोक्षहेतुत्वे तदा तात्पर्यं कल्पेत (कल्प्येत) यदि सच्छब्दवाच्याया हेयत्वं मुमुक्षोः क्वापि श्रुत्योच्येत, नत्वेवम्। अतो हेयत्वावचनात् मोक्षहेतुज्ञानविषयश्चिदात्मा मुख्येक्षितैवात्र ग्राह्य इत्यर्थः। "तस्य तावदेव चिरं यावन्न विमोक्ष्य" इति ज्ञेयान्तरनिरसनमपि क्रममुक्त्यभिप्रायेणेत्यनुचितं स्यादिति बोध्यम् ॥

नन्वेवमात्मशब्दादिहेतुत्रयेण प्रधानादावचेतने मा भवतु ईक्षणशब्दो गौणः, सर्गादौ तूत्पद्यमाने जीवविशेषे तु गौणः स्यात् अदृष्टादिद्वारा आसन्न आत्मशब्दादीनां त्रयाणां सूत्रत्रयोक्तानामुपपत्तेश्चेत्याशङ्क्यापरसूत्रत्रयेणेक्षणशब्दस्य जीवे गौणत्वं निराकरोति—

स्वाप्ययात् ॥ ९ ॥

स्वाप्ययश्रवणादपि गौणो नेक्षणशब्दो जीवेष्वित्यर्थात्। एतदेव हि सत्कारणमीक्षितं प्रकृत्य श्रूयते "यत्रैतत् पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षत "इति। तत्र पुरुषशब्दोक्तस्य जीवस्य लयाधारभूतमेव स्वशब्दोक्तं वस्तु सदाख्यं जगत्कारणमवगम्यते। तच्च न जीवो भवितुमर्हति लयस्य भेदतन्त्रत्वेन स्वस्मिन् लयासंभवात्। अतः सदीक्षणश्रुतिर्जीवेऽपि न गौणीत्यर्थः ॥

नन्वाकाशादीनां पराप्रतिष्ठतामात्रेण स्वप्रतिष्ठितत्वव्यवहारवदेव जीवानामपि पराप्रलीनत्वेनैव स्वाप्ययव्यवहारः श्रौतोऽस्तीति तत्राह—

गतिसामान्यात् ॥१०॥

मुख्य एवात्र स्वाप्ययो भवति, कुतो ? गतिसामान्यात्। "अथास्य प्रयतः वाङ् मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामि" त्युत्तरवाक्ये सह पठितैर्मन आदिभिर्जीवानां गतेरप्ययस्य समानत्वौचित्यादित्यर्थः। मन आदीनां हि गतिः स्वभिन्नेष्वेव प्राणादिषु उक्ता, तत्सहपाठाच्च। "अथास्य प्रयत" इति जीवस्य प्रयाणमपि स्वभिन्नवस्तुन्येवोचितम्। तथा चाकाशदृष्टान्तवदत्र न गौणः स्वाप्ययोऽपि तु मुख्य एव सह पाठादित्यर्थः ॥ किंच—

श्रुतत्वाच्च ॥११॥

[1]अत्रैव प्रकरणे वाक्यशेषे "यथा मधु मधुकृतो निस्तिष्ठन्ति नानात्मनां

---

[1] अयं पाठः २ पु० नास्तीति मु० शा०। अयं पाठो ह० लि० पु० द्वये वर्तते

वृक्षाणां रसान् समवहारमेकतां रसं गमयन्ती" त्यादिदृष्टान्तैर्जीवानां मुख्यस्यैव स्व यस्य श्रुतत्वाच्चेत्यर्थः[१]। तथा श्रुत्यन्तरे मुख्यस्यैव स्वाप्ययस्य श्रुतत्वादपि मुख्य एवात्रापि स्वाप्ययो ग्राह्यः। श्रुत्यन्तरं च "तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरमेवायं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमि" ति। अत्र हि स्वाभिन्ने प्राज्ञे जीवस्याप्ययः शब्दादेव श्रूयत इति। एतदेवाचार्यो वदिष्यति "सुषुप्त्युत्क्रान्त्योर्भेदेने" ति सूत्र इति।

अथैवं स्वाभिन्ने कथं स्वशब्द इति चेन्न, सर्वजीवानामात्मतया ब्रह्मण एव मुख्यस्वशब्दार्थत्वादिति।

ये तु "स्वाप्ययादि" ति सूत्रत्रयेणापि यथाकथञ्चित् प्रधानकारणतानिराकरणमेव वर्णयन्ति, तेषां जीवानिराकरणन्यूनता सूत्रकारस्यापरिहार्या। कथं वा शरीरादिष्विव प्रधानेऽपि जीवस्य स्वत्वेन स्वाप्ययहेतुना प्रधाननिराकरणं संभवतीति न विद्मः। यदपि "गतिसामान्यादि" ति सूत्रे सर्ववेदान्तानां चेतनकारणत्वे तात्पर्यस्य समानत्वादित्यर्थं व्याख्याय तेन हेतुना प्रधानकारणत्वं निरस्यत इति वर्णयन्ति, तदप्यसारम्, चेतनकारणतावाक्यानां सर्वेषामेव परैरुपचारपरत्वाभ्युपगमेन तथाविधतात्पर्यस्यैवासिद्धेः।

एतेन "श्रुतत्वाच्चे" त्यस्य सूत्रस्यापि साक्षाच्चेतनकारणत्वश्रवणान्न प्रधानं जगत्कारणमित्यर्थोऽप्यपास्तः। "सर्वविदि" त्यादिश्रुतिष्वपि देशकालादिविशेषव्यवस्थितसर्गहेतुत्वेन सर्वज्ञत्वाद्युपचारस्यैव परैरभ्युपेयत्वादीक्षणश्रुताविवेति न किंचिदेतत्।

इदं पुनरिहावधेयम्—आचार्यैरभ्युपगमवादमाश्रित्यैव श्रुतितात्पर्यदार्ढ्यार्थं सूत्रषट्केन गौणत्वमीक्षणस्वाप्ययादीनां निराकृतम्। वस्तुतस्तु मुख्यार्थे बाधकाभावेन गौणत्वमेवाप्रसक्तमिति बोध्यम्। यदि वाऽपूर्वार्थकल्पनामात्रभिया श्रुतिषु गौणी वृत्तिराश्रीयेत तदा कोऽपि श्रौतोऽपूर्वः पदार्थो न सिध्येत्, सर्वत्रैव लक्षणादिना दृष्टमात्रार्थतासंभवादिति जितं प्रत्यक्षमात्रप्रमाणकैश्चार्वाकैरिति। तस्मादीक्षणस्वाप्ययादिश्रुतिभिरेव प्रधानजीवाद्यतिरिक्त ईक्षितेश्वरः सिध्यतीति मन्तव्यम्। प्रधानादिव्यावृत्तेरसिद्धौ श्रुत्यन्तरस्याप्रदर्शनात्। तस्मादीक्षत्यधिकरणेनैव प्रसाधितं ब्रह्मात्म्यैकरसैस्तत्तद्विशेषगुणमात्रैरेवावधारयिष्यत इत्यवधेयम्। अन्यथा चानन्दमयाकाशाद्यधिकरणपरम्परास्वभ्यासब्रह्मलिङ्गादिहेतूनां वक्ष्यमाणानामसिद्ध्यापत्तेः। ब्रह्मण एवासिद्धत्वेन तदभ्यासतल्लिङ्गादीनामप्यसिद्धेरिति॥

"शास्त्रयोनित्वादि" ति सूत्रेणाशेषविशेषतो ब्रह्म शास्त्रात् सिद्ध्यतीत्युक्तं, तत्रेक्षत्यधिकरणे स्वरूपतो ब्रह्म धर्मी प्रसाधितः। इदानीमुच्चावचास्तद्गता गुणविशेषाः कल्पिता नामरूपकर्मादयः उपासनाद्यर्थं प्रतिपाद्या भवन्ति। तदर्थं येषु येषु वाक्येषु तत्तद्गुणवद्ब्रह्मपरत्वापाततो ब्रह्मपरत्वं सन्दिह्यते, अन्यसाधारणाद्

धर्मनामादिभेदात्, तानि वेदान्तवाक्यानि ब्रह्मपरत्वेन[1] मीमांस्यानि, तत एव तत्तद्वाक्योक्तगुणानां ब्रह्मणि प्रतिपादनसिद्धेरित्येतदर्थमेतत्पादसमाप्तिपर्यन्तः परो ग्रन्थ आरभ्यते—

## आनन्दमयोऽभ्यासात् ॥१२॥

तैत्तिरीयके "ब्रह्मविदाप्नोति परं, तदेषाभ्युक्ता, सत्यं ज्ञानमनन्तं ब्रह्म, यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते" त्यनेनादौ सत्यत्वादिगुहाप्रविष्ट[2] त्वान्ततद्गुणैर्ब्रह्मोपास्यत्वेन विधायास्यानन्तत्वगुहाप्रवेशौ प्रतिपादयितुं ब्रह्मणः सकाशादाकाशादिक्रमेणान्नमयविराट् पुरुषपर्यन्तां सृष्टिमुक्त्वा पश्चादन्नमयमारभ्यान्तरतः क्रमेण सर्वान्तर आनन्दमय आम्नायते—"तस्माद्वा एतस्माद् विज्ञानमयादन्योऽन्तर आत्मा आनन्दमय" इति। तत्र संदिह्यते—

किमयमानन्दमयः प्रकृतं ब्रह्मैव, किं वा हिरण्यगर्भोऽथवा प्रधानादिरिति। तत्र प्रतिभाति हिरण्यगर्भ एवायमानन्दमयः, अन्नमयादिविकारात्मप्राये पाठात्। विकारार्थकमयट्शब्दश्च हिरण्यगर्भे युक्तः सुखात्मकसत्त्वकार्यत्वात् न[3] तु ब्रह्मणि, पुच्छत्वेनैव ब्रह्मणो निर्देशात्, प्रकरणापेक्षया शब्दस्य बलवत्त्वाच्च। अथवा प्रधानमेवास्तु तथा, प्राचुर्यार्थकमयटः सुखदुःखमोहात्मकैः (केऽ[4])प्रधाने संभवात्, न तु ब्रह्मणि, आत्मनो निर्गुणचिन्मात्ररूपत्वात्, तथा चानन्दादयः प्रधानस्येति वक्ष्यतीति।

तत्रायं सिद्धान्तः—आनन्दमय आत्मा ब्रह्मैव, कुतः? अभ्यासात् ब्रह्मण्यानन्दमयतायाः पुनः पुनर्वचनात। "ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः, यतो वाचो निवर्तन्तेऽप्राप्य मनसा सह, आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन" इति वाक्यशेषे "विज्ञानमानन्दं ब्रह्म, एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती" त्यादिश्रुत्यन्तरेषु चेति।

ननु प्रचुरानन्दत्वस्यैवायमभ्यासो नानन्दमयत्वस्येति चेन्न, अरण्यमयो ग्राम इत्यादाविवात्र मयटः प्राचुर्यार्थताया एवोत्तरसूत्रेण वक्ष्यमाणत्वात्। नन्वेवं सहपाठादन्नमयादिरपि ब्रह्म स्यात्, आनन्दमयत्ववदन्नमयत्वादेरप्यौपाधिकत्वसंभवादिति चेत् न, अन्नादिष्वेव ब्रह्मदृष्टेः कथनात्, न पुनर्ब्रह्मण्यन्नादिप्राचुर्यस्येति वैषम्यात्।

---

[1] 'ब्रह्मपरत्वेन' इति उभयत्र ह० लि० पु० पाठः।
'परब्रह्मत्वेन' इति मु० पु० पाठोऽसाधुः।

[2] "प्रविष्टत्वानद्गुणैः" इत्युभयत्र ह० लि० पु० पाठः।
"प्रविष्टत्वात्तद्गुणैः" इति मु० पु० पाठः।

[3] 'ननु' ब्रह्मणि इत्येव पाठ उ० ह० लि० पु०, मु० पु० च वर्तते, स चासम्यक्।
"न तु ब्रह्मणि" इति पाठः समुचितः।

[4] 'मोहात्मकैः' इत्येव उ० ह० लि० पु० अपि पाठः।
"मोहात्मकै" इति पाठो युक्तः पाठः।

अथैवमानन्दमयस्य ब्रह्मत्वे कथं तदवयवे ब्रह्मशब्दप्रयोगो "ब्रह्म पुच्छं प्रतिष्ठे" ति, मैवम्, सोपाधिनिरुपाधिभेदेनावयवविभागकल्पनात्। ननु भवन्मतेऽधिष्ठानरूपस्य ब्रह्मणोऽनानन्दत्वात् कथमानन्दमयावयवत्वमिति चेत्, यथा अप्राणस्याकाशस्य प्राणाधारत्वेन काल्पनिकं प्राणमयपुच्छरूपप्रतिष्ठात्वं तथैवेति गृहाण। यथा चानन्दस्य नात्मस्वरूपत्वं न वाऽऽत्मधर्मत्वं तथोक्तं पञ्चसूत्र्यां वक्ष्यते च "आनन्दादयः प्रधानस्य, प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे" इति सूत्रयोरिति ग्रन्थबाहुल्यभिया नेह प्रस्तूयते। तस्माद् ब्रह्मणः सत्यसंकल्पत्वादिवत् पूर्णानन्दत्वमप्यौपाधिकमप्युपासार्थमेवात्र मीमांसितं न पुनश्चैतन्यवदात्मधर्माभिप्रायेणेति मन्तव्यम्। एतेनानन्दमयवाक्यस्य ब्रह्मपरत्वावधारणेन तद्वाक्यशेषीभूता अपरेऽपि गुणा "एष ह्येवानन्दयाति भीषास्माद् वातः पवते भीषोदेति सूर्यः" इत्यादिभिरुक्ताः ब्रह्मणि प्रतिपादिता भवन्तीत्याशयः।

आधुनिकास्तु श्रुतावानन्दमयः कारणोपाधिर्जीवो वा भवतु, न तु ब्रह्म, ब्रह्मणः पुच्छत्वेनैव निर्देशात् आनन्दमयस्य विकारप्राये पाठाच्च। सूत्राणि त्वेवं योजनीयानि—आनन्दमयवाक्ये ब्रह्म पुच्छं प्रतिष्ठेत्यत्र मुख्यमेव ब्रह्म ग्राह्यं न तु गौणं हिरण्यगर्भादि। कुतः? अभ्यासात्। "असन्नेव स भवत्यसद् ब्रह्मेति वेद चेदि" ति निगमनश्लोके ब्रह्मणः केवलस्य पुनरुच्यमानत्वात्, निरुपपदब्रह्मशब्दस्य परब्रह्मवाचकत्वात्। आगामिसूत्रेषु च विकारादिशब्दानवयवादिलक्षणया व्याख्याय यथाकथञ्चिदर्थः कर्तव्य इत्याहुः। तच्चिन्त्यम्, सूत्रे यथाश्रुतार्थत्यागानौचित्यात् [1]लिङ्गपुराणादिविरोधाच्च। यथा लैङ्गे शिववाक्यम्—

> अन्नमयोऽसौ भूतात्मा सोऽन्नप्रचुरको यतः।
> प्राणमयश्च प्राणात्मा संकल्पात्मा मनोमयः॥
> विज्ञानात्मा जीव एव विज्ञानमय उच्यते।
> य आनन्दमयो ह्यात्मा दयात्मा परमेश्वरः॥
> सोऽहमेव जगत्सर्वमहं सर्वत्र संस्थितः[1]। इति॥

ननु विकारवाची मयडन्ताऽऽनन्दमयशब्द औपाधिकनित्यानन्दं परं ब्रह्म न वक्तुमर्हति, ब्रह्मणोऽकार्यत्वात्, किन्तु तत्कार्यभूतं हिरण्यगर्भादिकमेवेत्याशङ्क्यापाकरोति—

## विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥१३॥

अन्नरसमयसाहचर्येणानन्दविकारवाचकान्मयट्शब्दान्नानन्दमयः परब्रह्मेति चेन्न, प्राचुर्यात्। "स एको ब्रह्मण आनन्द" इत्यादिवाक्यशेषे प्राचुर्यश्रवणान्न विकारार्थतेति शेषः। यच्चोक्तं सह पठितस्यान्नरसमयस्य विकारत्वम् "अन्नात् पुरुष" इति श्रवणादिति, तन्न, "अन्नात् पुरुष" इति वचने तर्ह्यन्नविकारत्वमेवायाति, न त्वन्नरसविकारत्वम्। अन्नरसमय एव च पुरुष आद्यपर्यायप्रोक्तोऽन्नमय इति। अतो

---

[1] अयं पा० २ पु० नास्तीति मु० ग्रा०। अयं पाठ उ० ह० लि० पु० वर्तते।

नास्ति विकारप्रायपाठः, प्रत्युत प्राणमयमनोमयादिप्राचुर्यप्रायपाठादन्नरसमयस्यापि तत्प्राचुर्यार्थकतैव निर्णीयते। प्राणमयान्तर्गताकाशस्यापि प्राणप्राचुर्यस्यैवानुभवसिद्धत्वात् प्राणविकारत्वानुपपत्तेश्च। आनन्दमयस्य च प्राचुर्यार्थकत्वं श्रुतेरेवावगम्यते। मनुष्यमारभ्योत्तरोत्तरस्मिन् स्थाने शतगुणानन्दमुक्त्वा ब्रह्मानन्दस्य निरतिशयत्वप्रतिपादनादिति ॥

इतश्च विकारार्थे मयट्—

## तद्धेतुव्यपदेशाच्च ॥ १४ ॥

आनन्दहेतुत्वं ह्यानन्दमयस्य व्यपदिशतीति वाक्यशेषः। "एष ह्येवानन्दयाती" ति आनन्दयतीत्यर्थः। स च व्यपदेश एवकारघटितो न विकारत्वे सत्युपपद्यते, आनन्दमयानन्दयितुरन्यस्यापि प्रसक्तेः। यद्वा आनन्दहेतोर्ब्रह्मणोऽप्यानन्दमयमध्ये ([1]पुच्छरूपेण[1])व्यपदेशान्न विकारार्थतेत्यर्थः। तथा प्राणहेतोराकाशस्य प्राणमयमध्ये पाठात् प्राणमयस्यापि न विकारार्थतेति प्राचुर्यार्थतैव सर्वत्र ग्राह्या। मनोमयविज्ञानमययोः परिपठितेषु च श्रद्धायजुरादिषु तद्विकारेषु मनोबुद्धिप्राचुर्यं मनोबुद्ध्योस्तेषु मुख्यकारणत्वाद् बोध्यम्, यथा मनः प्रचुरं सुखं तेजःप्रचुरं रूपमिति ॥

न केवलमभ्यासादेवानन्दमयो ब्रह्म अपि त्वितोऽपीत्याह—

## मान्त्रवर्णिकमेव च गीयते ॥ १५ ॥

चो हेतौ "सत्यं ज्ञानमनन्तं ब्रह्मे" त्यादौ मन्त्रात्मके वर्णे यत् प्रकृतं ब्रह्म, तन्मान्त्रवर्णिकं, तदेव च गुहाप्रविष्टत्वेन प्रतिपादयन्त्या ब्राह्मणश्रुत्या आनन्दमयरूपेण गीयते स्तूयते नत्वितरः। मन्त्रब्राह्मणयोर्भिन्नार्थत्वे वाक्यभेदप्रसङ्गात्, एकस्य प्रकरणेऽन्यस्याप्रकृतस्य स्तव्यत्वानौचित्याच्चेत्यर्थः। अन्नमयादीनां चतुर्णां चानन्दमयशेषत्वेनैवोपयोगः संभवति, आनन्दमयस्त्वनन्यशेष इति तस्याब्रह्मत्वे वाक्यभेदोऽपरिहार्य एव।

न चानन्दमयस्य ब्रह्मत्वे "तस्यैष एव शारीर आत्मा यः पूर्वस्ये" ति श्रुतिर्नोपपद्येत, शारीरस्य जीवस्यानन्दमयात्मकत्वानुपपत्तेरिति वाच्यम्, तदर्थाज्ञानात्। तस्यां हि श्रुतौ तस्येत्यंशविचारणमेव पूर्वस्येत्यनेन कृतम्, पूर्वस्य विज्ञानमयस्य य आत्मा स एव एवेति श्रुत्यर्थः। तत्र च शारीरशब्द आधाररूपेणैव तत्प्रविष्टत्वेनाप्यात्मा भवतीति बोधयितुं प्रयुक्तः, न तु शारीरोऽत्र प्रकरणे जीवः ब्रह्मप्रकरणाज्जीवानां चानन्दमयं विहायापरकोषचतुष्टयेष्वन्तर्भावात्। "स एष वा पुरुषोऽन्नरसमय" इत्यादिना कोषेष्वेव पुरुषत्ववचनात्, "एतमन्नमयमात्मानमुपसंक्रामती" त्यादावात्मत्ववचनाच्च। [2]आत्मशब्दस्यात्र गौणत्वे तु विज्ञानकोशमात्रं जीवस्तु उक्तलिङ्गपुराणादि[2] ति बोध्यम्।

---

[1] अयं पाठः २ पु० नास्तीति मु० शा०। पाठोऽयमुभय ह० लि० पु० वर्तते।

[2] अयं पा० २ पु० नास्तीति मु० शा०।

अयं पाठ उ०ह०लि०पु० वर्तते, किन्तु 'आत्मशब्दस्यात्' इति असम्यक् पाठस्तयोः।

इदानीं जीवविशेषस्यानन्दमयश्रुत्यर्थत्वे बाधकमाह—

**नेतरोऽनुपपत्तेः ॥१६॥**

इतरो हिरण्यगर्भादिरूपो जीव आनन्दमयो न भवति, कुतः? अनुपपत्तेः। "सोऽकामयत बहुस्यां प्रजायेयेति, स तपोऽतप्यत स तपस्तप्त्वा इदं सर्वमसृजत यदिदं किं च, तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवदि" त्यादीनां "तदात्मानं स्वयमकुरुते" त्यन्तानां ब्रह्मलिङ्गानां जीवेऽनुपपत्तेरित्यर्थः। जीवानां हि सङ्कल्पपूर्वकासंकुचितसर्वस्रष्टृत्वं न सम्भवति। स्वसृष्टौ स्वसंकल्पासंभवात्, सृष्टेः पूर्वं करणाद्यभावात्। अतएव स्वकृतेः स्वोत्पत्तिरपि न संभवति।

ननु "स तपस्तप्त्वा" इति श्रवणाददृष्टद्वारा प्राग्भवीयसंकल्पकृतिभ्यां सर्वोत्पादकत्व जीवविशेषस्य संभवतीति चेन्न, तथापि स्वपूर्वापरान् सर्गान्तरान् प्रति स्वस्याकारणत्वेन सर्वस्रष्टृत्वे संकोचतादवस्थ्यात्। सन्देहस्थले वैशेषिकोक्ततर्कानुगृहीतम् "एको देवः सर्वभूतेषु गूढ" इत्येकनित्येश्वरबोधकश्रुत्यन्तरमनुसृत्यैव प्रकृतश्रुत्यर्थावधारणौचित्याच्च, साक्षात्कर्तृपरत्वसंभवे परम्परया कर्तृपरताया अन्याय्यत्वाच्चेति। या च तपःश्रुतिः सा सृष्टिध्यानपरा "यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः" इति श्रुत्यन्तरात्। तत्रापि मानसं कर्मैवोक्तमिति चेन्न, तस्य निर्णीतब्रह्मप्रकरणस्थत्वात। ब्रह्मणश्च क्लेशकर्मविपाकाशयैरपरामृष्टतया पतञ्जल्यादिभिरुक्ततया तन् (मूल) भूतश्रुत्या सदा कर्माभावावगमात्, "अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात्। अन्यत्र भूताच्च भव्याच्च यत्तत् पश्यसि तद्वदे" त्यादिपरमेश्वरप्रकरणस्थप्रत्यक्षश्रुत्या "धर्माधर्मविमुक्तं यद् विमुक्तं पुण्यपापयोरि" त्यादिस्मृत्या च स्फुटमीश्वरस्य सदा कर्मप्रतिषेधाच्च। वस्तुतस्तु ब्रह्मप्रकरणे तपःश्रुतिस्तेजःपरा, तेजः सृष्ट्वैव छान्दोग्ये जगत्सर्जनात्, "यस्य ज्ञानमयं तपः "इत्यत्र तपःशब्देन तेजस एवोक्तत्वाच्च। "तपसा चीयते ब्रह्म ततोऽन्नमभिजायते" इति तत्पूर्ववाक्यस्य लोकानुसारित्वौचित्यात्, तेजसश्च ज्ञानमयत्वमीश्वरध्यानजत्वादिति॥

**भेदव्यपदेशाच्च ॥१७॥**

इतश्च न जीव आनन्दमयः, कुतः? भेदव्यपदेशात्। "एतस्माद् विज्ञानमयादन्योऽन्तर आत्मा आनन्दमय इत्यनेनेत्यर्थः। अयं भावः—अन्नमय-प्राणमय-मनोमय-विज्ञानमयाश्चत्वारः पुरुषाः स्थूलशरीरप्राणमनोबुद्ध्युपाधिका जीवभेदा एव। तत्र स्थूलशरीरिणोः मनुष्यादयः, तेषां स्थूलशरीरं विना भोगाद्यभावात्। प्राणादिशरीरिणश्च त्रिविधा देवा उत्तरोतरं श्रेष्ठाः सूक्ष्मशरीरैरेव पूर्वनिरपेक्षैस्तेषाम् भोक्तृत्वात्। श्रुतौ च विज्ञानमयादूर्ध्वं कदापि जीवावस्था नास्ति, बुद्धिं विना जीवव्यवहाराभावात्। तथा च श्रुतिः "कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः" इति। या चान्या जीवावस्था विलयरूपा सा श्रुतिषु नदीसमुद्रवदविभागत ईश्वराद् भेदेन नोच्यते "परेऽव्यये सर्व एकीभवन्ति" इत्येव श्रवणात्। एवं च सति विज्ञानमयाद् बुद्ध्यवच्छिन्नजीवाद् भेदेनोच्यमान आनन्दमयो न जीवो

भवितुमर्हति, विज्ञानमयावस्थाया उपरि जीवानां ब्रह्मण्येकीभावस्यैव श्रुतिषु कथनात् । तस्माद् विज्ञानमयावस्थजीवस्यान्तःस्थोऽन्तर्याम्येवानन्दमय इति गम्यते, तद्भेदेन तदन्तरत्ववचनादिति ।

एवमेव समानार्थके श्रुत्यन्तरेऽपि भेदव्यदेशोऽस्ति "य आत्मनि तिष्ठन्नात्मनोऽन्तर एष त आत्मा अन्तर्याम्यमृत" इति ।

केचित्तु "रसो वै सः रसं ह्येवायं लब्ध्वा आनन्दीभवती" ति वाक्यशेषे रसशब्दवाच्यादानन्दमयाल्लब्धव्याल्लब्धुर्जीवस्य भेदेऽ (भेदो) व्यपदेशादिति सूत्रार्थमाहुः । तन्न—अत्र वाक्ये भेदवाचकशब्दाभावात् । आर्थिको हि भेद इति चेन्न, "आत्मलाभः परो नान्य आत्मा देहादिवर्जितः" इत्यादि स्मृतावभेदेऽपि लब्धलब्धव्यव्यवहारदर्शनादिति ।

ननु सूत्रकारेण जीवब्रह्मणोर्भेदः कथमुच्यते, "तत्त्वमसि, स एव जीवः सुखदुःखभोक्ते" त्याद्य भेदप्रतिपादकवाक्यशतव्याकोपादिति चेन्न, भेदप्रतिपादकसूत्रजातबलेनैवास्माभिस्तत्त्वमस्यादीनां ब्रह्मात्मतामात्रे तात्पर्यस्य विस्तरेण पञ्चसूत्र्यां व्यवस्थापितत्वात् । अखण्डतात्पर्यस्य च प्रयोजनादिभिः पराकृतत्वात् । "स एव जीव" इत्यादिवाक्यानां च जडसाधारण्येनाविभागलक्षणाभेदपरत्वस्य तत्रैव व्याख्यातत्वात् । अखण्डतात्त्विकाभेदस्य मोक्षहेतुविवेकाख्यभेदबोधक नेति नेत्यस्थूलादिश्रुतिशतविरोधेन "विष्णोः स्वरूपात् परतो हि तेऽन्ये रूपे प्रधानं पुरुषश्च विप्रे" त्यादिश्रुतिशतविरोधेन चापास्तत्वात् । अतएव भेदनिन्दावाक्यानामपि विभागलक्षणभेदपरत्वस्योक्तत्वात् । ग्रन्थबाहुल्यभिया तु नात्र विपुलीक्रियते, पुनश्च यथास्थानमेतद् विस्तारयिष्यामः । यत्तु [1]अखण्डत्वादीनामौपाधिकभेदपरत्वेन भेदसूत्राणां व्याख्यानं तत्तदा कथञ्चित् सम्भाव्येत, यदि "उभयव्यपदेशात्त्वहिकुण्डलवत्, प्रकाशाश्रयवद्वा तेजस्त्वादि"त्यादिसूत्रैरभेदवाक्यानां भेदाभेदपरत्व[2] माचार्यो नाचक्षीतेति ॥

ननु मा भवतु जीव आनन्दमयः प्रधानादिकं तु स्यादित्याशङ्क्याह—

## कामाच्च नानुमानापेक्षा ॥१८॥

श्रुतिषु संक्षेपेणोक्तम् विशेषतो विस्तरतश्चानुमीयते स्मर्यत इत्यनुमानं प्रधानादिकं तदप्यानन्दमयवाक्ये नापेक्षणीयम्, कुतः ? कामात् । "सोऽकामयत" इति कामनाश्रवणादित्यर्थः ।

ननु "कामः संकल्पो विचिकित्से" त्यादिश्रुत्या कामस्य प्राकृतत्वप्रतिपादनात् कामश्रुतिः प्रकृतेरानन्दमयत्वसाधिकैवेति चेन्न, तात्पर्यापरिज्ञानात् । न हि प्रकृति-

---

[1] "अखण्डतात्वादिनामौपा" इत्युभयत्र ह० लि० पु० पाठः, स च न समुचितः । "अण्डत्वादीनामौपा" इति मु० पु० पाठोऽप्यसम्यक् ।

[2] भेदाभेदपरत्वमित्येव पाठ उ० ह० लि० पु० वर्तते ।

[3] अंशांश्यभेदपरत्वमिति २ पु० पाठ इति मु० शा० ।

स्वातन्त्र्यवादी सकलां सृष्टिं संकल्पपूर्विकां वदति, बौद्धसृष्टेरेव सांकल्पिकत्वाभ्युपगमात्, न त्वबुद्धिपूर्वकस्य महदादिरूपप्राकृतसर्गस्य। अत्र तु महत्तत्वस्य विज्ञानाख्यस्यापि सृष्टिं संकल्पपूर्विकां श्रुतिर्वदति "सोऽकामयते" त्यादिना "विज्ञानं चाविज्ञानं चे" त्यन्तेन। अतः कामपूर्वकविज्ञानादिस्रष्टृत्वेन केवलं प्रधानं नानन्दमयः। प्रधाने नित्यसंकल्पाङ्गीकारे तु सिद्ध एव नित्यः सर्वज्ञ ईश्वरः, संकल्पज्ञाननियतत्वात्। तथा च प्रधानाख्योपाधिमान[1]मुख्यश्चेतनविशेष एवानन्दमय उचितः न तु तदुपसर्जतीभूतं प्रधानम्।

किं च सर्वजनीनानुभवानुसारेण ब्रह्मध्यानायोपदिशति श्रुतिः, लोके च स्फटिकलौहित्यवदौपाधिकोऽपि कामादिर्ज्ञानसामानाधिकरण्येनैव व्यवह्रियते। "विद्यया अहं जानामीतिवदहमिच्छाम्यहं सुखी" त्यादिव्यवहारस्यात्मन्येव सर्वैरभ्युपगमात् न तु प्रधानादौ। विचारादेव तु प्रधानादावित्युच्यते। तस्मादानन्दकामादेः प्राकृतत्वेऽपि "सोऽकामयते" ति लोकानुसारिवाक्यस्य केवले प्रधानेऽचेतनत्वादसंभव इति साधूक्तम्। अपि च यथा योधेषु वर्तमानौ जयपराजयौ राजन्युपचर्येते तत्फलभोक्तृतया स्वामित्वात्, तथोपाधिस्थाः सर्वे व्यापारास्तदध्यक्षचेतनेषूपचर्यन्ते स्वामित्वात् न तु विद्वद्भिरप्यन्यत्र व्यपदिश्यन्तेऽनादिवाग्व्यवहारानुसारात्। अतः कामस्योपाधिधर्मत्वेऽपि "सोऽकामयते" ति श्रुतिरचेतनेऽनुपपन्नैवेति॥

इतश्च जीवो वा प्रधानादिर्वा नानन्दमय इत्याह—

## अस्मिन्नस्य च तद्योगं शास्ति ॥१९॥

किं च अस्मिन् प्रकरणे अस्य इतरशब्दोक्तजीवस्य तद्योगं तत्रानन्दमये योगमविभागं वेद्यतया श्रुतिः शास्ति उपदिशति "यदा ह्येवैष एतस्मिन्नदृश्ये अनात्म्ये अनिरुक्ते अनिलयनेऽभय प्रतिष्ठां विन्दतेऽथ सोऽभयं गतो भवति, यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति, तत्त्वेवं भयं विदुषोऽमन्वानस्ये" ति। अस्यायमर्थः—यदा एव जीव एतस्मिन्नानन्दमये ब्रह्मणि अदृश्ये चक्षुराद्यगोचरेऽनात्म्ये आत्मान्तरशून्ये परमात्मनो जीववदात्मान्तराभावात्, अनिरुक्ते विशिष्य शब्दान्तरागोचरे ऽनिलयने जीववल्लयशून्ये सदा प्रबुद्धेऽभयं यथा स्यात्तथा प्रतिष्ठामविभागं समुद्रे नद्या इव विन्दते लभते। लाभश्चात्रानुभवरूप उत्तरवाक्यात्। अथ तदनुभवानन्तरमेव स विद्वान् संसारभयादुत्तीर्णो भवति। यदा तु एतस्मिन्नुत्+अरम् अल्पमपि अन्तरं विभागं कुरुते अहं ततः पृथक् स्वतन्त्र इति मन्यते, अथ तस्य संसारभयं भवति, यतस्तदेव ब्रह्मामन्वानस्याचिन्तकस्य भयं भयहेतुर्विदुषो विद्वद्दृष्ट्येति। न च जीवे स्वस्य विभागः संभवति, तस्य भेदतन्त्रत्वात्। नापि प्रधानेऽन्यत्र वाऽचेतने अविभागवेदनात् जीवस्याभयमात्यन्तिकं संभवति, अतो न तयोरानन्दमयत्वमिति॥

---

[1] 'उपाधिमानमुख्य' इत्येव उ० इ० लि० पु० पाठः।

यथानन्दमयवाक्यस्य ब्रह्मपरत्वावधारणेन परमानन्दत्वादयोऽभ्यर्हितगुणा ब्रह्मणि मीमांसिता एवं गुणान्तरावधारणाच्च श्रुत्यन्तरेऽपि ब्रह्मपरत्वमवधारयति—

अन्तस्तद्धर्मोपदेशात् ॥२०॥

काण्वषष्ठाध्याये श्रूयते "स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिन् सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा भूयान् नो एवासाधुना कनीयानि" त्यादि। तत्र संशयः—किमयं सिद्धजीवो हिरण्यगर्भादिरथवा परमेश्वर इति, विज्ञानमयशब्दस्य योगरूढिभ्यामात्म-सामान्यवाचित्वात्। तत्र प्राप्तं, जीव एव, जाग्रत्स्वप्नसुषुप्त्यवस्थाभिर्जीवस्य पूर्वं प्रक्रान्तत्वात्। "किं ज्योतिरेवायंपुरुष" इत्यादित्यज्योतिरि" त्यादिप्रश्नप्रतिवचन-परम्पराभिः, तथा मध्येऽपि "स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयश्चक्षुर्मय" इत्यादिना "यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापी भवति" इत्यन्तेन जीव एवाभ्यस्यते। जीवे चात्र ब्रह्मशब्दो हिरण्यगर्भभावेन बोध्यः "प्राजापत्यं ब्राह्मं वा रूपं तनुत" इत्यव्यवधानतः प्रागुक्तत्वात्। शयनमपि च जीवे सुखेनोपपद्यत" इति।

एवं प्राप्ते आह—अन्तरत्र ब्रह्मैव भवितुमर्हति, कुतः? तद्धर्मोपदेशात्। सर्व-वशित्व, शुभाशुभकर्मफलाभागित्व, सर्वाधिपतित्वादीनां परमेश्वरधर्माणामत्रोपदेशात्, जीवानां सिद्धानामप्यसिद्धदशायां प्रतिहतेच्छतया पूर्वमुक्तान् प्रत्याधिपत्याद्यभावात्, सत्कर्मणैव भूमपदप्राप्तेश्चेति।

न च प्रकरणाद्यनुरोधात् सर्ववशित्वादिषु सर्वशब्दस्य संकोचः कर्तव्य इति वाच्यम्, ब्रह्मणोऽपि सन्निहितावान्तरप्रकरणात्। "अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत" इत्यादिना हि "अथायमशरीरोऽमृतः प्राणो ब्रह्मैवे" ति मध्येन "एकधैवा-नुद्रष्टव्यमेतदप्रमेयं ध्रुवम्। तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मण "इत्यन्तेना-वान्तरवाक्येनोपस्थिते ब्रह्मणि किं तदित्याकाङ्क्षया यथोक्तवाक्यं प्रवर्तत इति। शयनं चोपचरितं ब्रह्मण्यपि सुप्रसिद्धम् "सर्वभूतगुहाशय" इत्यादिवाक्येषु।

वस्तुतस्तु अस्मिन्नपि संवादे परब्रह्मैव महाप्रकरणि ज्ञेयं तत्रैवोपसंहारात्, फल-प्रदर्शनपूर्वकं ज्ञेयत्वेन विधानाच्च। जीवद्वारा च ब्रह्मणः प्रतिपादनाय जीवस्यादौ विस्तारितत्वात् प्रकरणित्वं भ्रमादेवावगम्यते। अतएव समस्तावस्थासहिते जीवे प्रतिपादितेऽपि पुनर्जनकेन पृष्टे "अत ऊर्ध्वं विमोक्षायैव ब्रूही" ति। ततो याज्ञ-वल्क्येन प्रतिपादिते परब्रह्मणि जनकोऽन्यत्र पप्रच्छेति। याज्ञवल्क्यमैत्रेयीसंवादे च जीवब्रह्मसाधारणात्मसामान्यस्यैव प्रकरणित्वं न तु केवलब्रह्मणः, जडविवेकमात्रस्य ज्ञेयत्वेनोक्तत्वादतो न जीववाक्योच्छेद इति बोध्यम्।

एतद्वाक्यस्य ब्रह्मपरत्वावधारणेन "स एष नेति नेत्यात्मा अगृह्यो हि गृह्यते" इत्यादिनोक्ता विवेकासङ्गत्वादयो गुणाः ब्रह्मणि प्रतिपादितास्तत्त्वज्ञानोपयोगिन इति द्रष्टव्यम्॥

न केवलं धर्मव्यपदेशादेवात्रान्तस्थो विज्ञानमयो जीवादन्यः परमेश्वरः, अपि तु—

भेदव्यपदेशाच्चान्यः ॥२१॥

भेदव्यपदेशादपि जीवादन्योऽत्रान्तस्थ इत्यर्थः। भेदव्यपदेशश्च यथा वाक्यशेषे "येषां नोऽयमात्मा आत्मन्येवात्मानं पश्यती" ति आधाराधेयभावस्य भेदतन्त्रत्वात्। न चास्मच्छब्द आत्मशब्दश्चात्मसंघातमात्रपर इति वाच्यम्, मुख्यार्थपरित्यागेन संघातलक्षणायां प्रमाणाभावात्। "आत्मनि तिष्ठन्नात्मानमन्तरो यमयत्येष त आत्मा अन्तर्याम्यमृत" इति श्रुत्यैकवाक्यत्वाच्च। न च तत्राप्युपाधिमात्रलक्षणा संभवति, "यः प्राणेषु तिष्ठन्, यो मनसि तिष्ठन्, यश्चक्षुषि तिष्ठन्नित्यादिपृथग्वचनानर्थक्यप्रसङ्गात्। "यः सर्वेषु भूतेषु तिष्ठन्नि" ति वाक्याच्च सुतरां सर्वभूताख्यजीवात्मस्थत्वं लब्धमेव। तथा "पश्यत्स्विहैव निहितं गुहायामि" ति श्रुत्या च तदेकवाक्यतयाप्यात्मशब्दो नात्र संकोच्यः। तथा "प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया हरिरि" त्यादिस्मृतिशतानुमिततन्मूलश्रुत्येकवाक्यतयाऽपि नात्र संकोचो युक्तः। न च तथापि पूर्वपूर्वसर्गसिद्धजीवेष्वेवान्तर्यामितां प्राप्तेषु तदितरजीवानामात्मनिष्ठतयोपास्यत्वेन भेदव्यपदेशोपपत्तिरिति वाच्यम्, सिद्धानां प्रतिसर्गमनेकत्वेन "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मे" त्यादिश्रुत्येकवाक्यतया सर्वभूतस्थस्यैकस्यैवात्मनोऽत्रात्मनिष्ठत्वेन सर्वजीवैः सर्वसर्गेषूपास्यत्वनिर्णयात्। कदाचित् प्रकरणवशादेव कुत्रचिद् वाक्ये फलविशेषार्थं हिरण्यगर्भादिरूपसिद्धानामुपास्यत्वसंभवादिति।

आधुनिकास्तु, अस्मिन्नधिकरणे छान्दोग्यप्रथमप्रपाठकस्थं "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुरि" त्यादिवाक्यमप्युदाहरन्ति, "स एष सर्वेभ्यः पाप्मभ्य उदित" इति वाक्यशेषे च ब्रह्मधर्मोपदेशाद् ब्रह्मपरत्वमस्य वर्णयन्ति, तन्न, पाप्मभ्य उदयस्य पापविनाशरूपतया ब्रह्मधर्मत्वाभावात्, धर्मान्तरस्य चानुक्तत्वात्। प्रत्युत तेनैव लिङ्गेन चन्द्रनक्षत्रादिदेवताप्रकरणपठि[1] ततया च देवताविशेषत्वावधारणाच्च। न चादित्यस्यान्तरिति भेदनिर्देशानुपपत्तिरिति वाच्यम्, आदित्यस्यान्तरपि आदित्यभिन्नस्य हिरण्यगर्भादेः स्मरणात्।

ब्रह्मादीनां परं धाम त्रयाणामपि संस्मृतम्।
वेदमूर्तिधरः पूषा पूजनीयः प्रयत्नतः ॥[2]

इति मात्स्यादिषु त्रयाणामपि मध्ये हिरण्यशब्दो हिरण्यगर्भ एवात्रोपास्यत्वेन गम्यते। किं च—

ध्येयः सदा सवितृमण्डलमध्यवर्ती,
नारायणः सरसिजासनसंनिविष्टः।

---

[1] 'पठिततया च' इत्येवोभयत्र ह० लि० पु० पाठः। 'पठितया च' इति मु० पु० पाठोऽसाधुः। [2] अ० ५२ श्लो० २४।

केयूरवान् कनककुण्डलवान् किरीटी,
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥

इति रूपयोः श्रुतिस्मृत्योर्नारायणाख्यहिरण्मयस्य सूर्यमण्डले उपासनासिद्धेस्तदेकवाक्यतया हिरण्यश्मश्रुत्वादिश्रुतेरपि नारायणपरत्वमेव न परमेश्वरपरत्वम्। अपि च यस्मिन् वाक्ये रूपं संस्थानादिकं श्रूयते तत्र तद्रूपिदेवतापरिग्रह एवौत्सर्गिकः असाधारण्यात्। ब्रह्मणश्च स्वतो नीरूपतायाः "अरूपवदेव हि तत्प्रधानत्वादि" ति सूत्रेण वक्ष्यमाणत्वात्। क्वचित्तु प्रकरणादिबलाद् देवादीन् विहाय देवादिरूपैरेवारूपोऽपीश्वर उपास्य इष्यते। न चात्र तथा बलवत् प्रकरणादिकमस्ति, अन्यथा च देवतोपासनमात्रोच्छेदापत्तः, सर्वत्रैव ब्रह्मोपासासंभवात्। लीलाविग्रहोऽपि च विष्ण्वादिदेवतानामेव स्वस्वाधिकारसम्पादनार्थं न त्वीश्वरस्य "अप्राणो ह्यमनाः शुभ्रो अक्षरात् परतः परः, न तस्य कार्यं करणं च विद्यत" इत्यादिश्रुतेः संकोचे प्रमाणाभावात्। विष्ण्वादयस्तदवताराश्चावेशावतारा एव परमेश्वरस्येत्युक्तमीक्षतेर्नाशब्दमित्यत्र। तदुक्तम् विष्णुपुराणे—

स देवोऽन्यशरीराणि समाविश्य जगत्स्थितिम्।
करोति सर्वभूतानां नाशं चान्ते जगत्पतिः॥

इति दिक्॥

उक्तवाक्यनिर्णयेन सर्ववशित्वादयो गुणा मीमांसिताः। इदानीमाकाशादिविभूतिरूपिब्रह्मपराणि वाक्यानि तत्तद्वाक्योक्तगुणनिर्णयाय मीमांस्यन्ते पादसमाप्तिं यावत्—

## आकाशस्तल्लिङ्गात् ॥२२॥

काण्वचतुर्थाध्याये पठ्यते सुषुप्तं जीवं प्रकृत्य "एतत् सुप्तोऽभूद् य एष विज्ञानमयः पुरुषः क्वैष तदाऽभूत् कुत एतदागादि" त्यस्य प्रत्युत्तरे "तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेत" इत्यादि। तत्राकाशः किं भूताकाशः, किं वा तद्देवता, किं वा परं ब्रह्मेति संशयः, उपक्रमोपसंहारयोर्ब्रह्मवाचकब्रह्मात्मादिशब्दवन्मुख्यवाक्ये भूताकाशादिवाचकस्याकाशशब्दस्य श्रवणात्, अन्यतरस्य गौणत्वे नियामकाभावात् त्रयाणामेव च स्वापाधारत्वाविशेषाच्च।

तत्रायं निर्णयः—आकाशः प्रकृतेः (ते) परं ब्रह्म, कुतः ? तल्लिङ्गात्। लिङ्गानि च "स यथोर्णनाभिस्तन्तुनोच्चरेद् यथाऽग्नेः क्षुद्रा विस्फुलिङ्गाः व्युच्चरन्ति, एवमेवास्मादात्मन सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति तस्योपनिषत् सत्यस्य सत्यमि" ति उत्तरवाक्ये वक्ष्यमाणदृष्टान्तनामादीनि सर्वश्रुतिषु ब्रह्मणि तथा दृष्टान्तदर्शनात्। अचेतनस्य भूताकाशस्याग्निविस्फुलिङ्गदृष्टान्तानर्हत्वाच्च। देवतायाश्च सर्वदेवान्तर्गतस्वस्याकारणत्वात्, "य एवायमाकाशे पुरुष इति पूर्ववाक्येनाकाशदेवतायाः ब्रह्मत्वप्रतिषेधाच्च। "सत्यस्य सत्यमिति" च नाम पूर्ववाक्येन ब्रह्मण्येव व्याख्यातम्। तत्र हि सत्यशब्देन पञ्चभूतानि व्याख्याय तदपेक्षयापि निषेधशेषं ब्रह्म सत्यमिति श्रुत्यैव स्पष्टमुक्तम्। तथा—

चैतन्यापेक्षया प्रोक्तं व्योमादिसकलं जगत् ।
असत्यं, सत्यरूपं तु कुम्भकुण्डाद्यपेक्षया ॥

इतिस्कान्देऽप्युक्तश्रुतिसमानार्थके ब्रह्मण एव सत्यसत्यत्वं लब्धमिति । तस्माच्छब्दसाम्येऽपि ब्रह्मलिङ्गाद् ब्रह्मैवाकाशशब्दार्थः । आकाशशब्दश्च ब्रह्मणि रूपकविधया विभुत्वनिर्लेपत्वादि[1]गुणलाभाय श्रुत्या प्रयुक्तो मुखे चन्द्रशब्दवत् । अतएव "परमे व्योमन् प्रतिष्ठिते" त्यादिबहुषु श्रुतिष्वाकाशरूपेण ब्रह्म निर्दिश्यते । एतेनागाम्यधिकरणेष्वपि प्राणज्योतिरादिशब्दा अपि जीवनत्वप्रकाशकत्वादिप्रतिपादनाय रूपकत्वेनैव व्याख्येयाः । नानार्थताया गङ्गायां घोष इतिवल्लक्षणायाश्चायुक्तत्वादिति ।

वस्तुतस्तु आकाशप्राणज्योतिरादय.शब्दाः आकाशादिभावापन्नब्रह्मपरा एवैतेषु ब्रह्मवाक्येषु भवन्ति । केवलब्रह्मपरत्वे सत्याकाशादिलिङ्गानुपपत्तेः । तत्र शयनमाकाशलिङ्गमस्ति, शयनं हि व्यापारोपरमः, स च करणवर्गस्य स्वस्वगोलकपरित्यागेन हृत्पद्मस्थशून्यप्रदेशावस्थानादेव भवतीति । वक्ष्यमाणश्च ब्रह्मपरज्योतिर्वाक्ये ज्योतिषो भौतिकस्य लिङ्गम् "तस्यैषा दृष्टिर्यत्रैतस्मिन् शरीरे संस्पर्शेनोष्णिमाने[2] (नं) विजानातीत्यादि । मनुष्यादिशब्दवच्चैवं सति निरुढलक्षणयैव शक्तितुल्यया युक्त आकाशादिशब्दस्यापि तेषामात्मनि ब्रह्मणि प्रयोगः ।

लौकिका वैदिकाः शब्दा ये केचित् सन्ति पार्वति ।
नामानि रामचन्द्रस्य सहस्रं तेषु चाधिकम् ॥

इत्यादि स्मृति[3] ( ते ) रिति । अयमेव च पक्ष आचार्यसंमत इति "जीवमुख्यप्राणलिङ्गादि" त्यादिवक्ष्यमाणसूत्राद् गम्यते । तेन हि सूत्रेण जीवप्राणरूपाभ्यामेव ब्रह्मोपासना सिद्धान्तमेष्यति । अस्मिन्नपि पक्षे "परमे व्योमन्नि" त्यादौ रूपकमेव ।

आधुनिकास्तु अस्मिन्नधिकरणे छान्दोग्यप्रथमप्रपाठकस्थवाक्यमिदमुदाहरन्ति "अमुष्य लोकस्य का गतिरित्ययं लोक इति अस्य लोकस्य का गतिरित्याकाश इति होवाच, सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त" इति । अत्र सर्वभूतकारणत्वं ब्रह्मलिङ्गमित्याहुः । [4]तन्न, प्रकरणादिशून्यात् केवललिङ्गात् श्रुतेर्बलवत्त्वात् । न ह्यत्र वाक्ये अस्मदुदाहृतवाक्यवद् ब्रह्मणः प्रकरणं श्रुतिर्वास्ति । श्रुतिलिङ्गेत्यादिपूर्वमीमांसासूत्रेण च शब्दापेक्षया लिङ्गस्य दुर्बलत्वमवधारितम् । नाप्यत्र ब्रह्मलिङ्गमस्ति । "अस्य लोकस्य का गति" रित्यत्र हि भूर्लोकस्थजना एवोक्ताः, प्रत्युत्तरे भूतानीत्युक्तत्वात् । एवं च "सर्वाणि भूतानी" त्यादि ब्रह्मलिङ्गं न भवति, आकाशसाधारण्यादाकाशाद् वृष्ट्यादिद्वारैषां भूर्लोकस्थानां सर्वभूतानां सृष्टिस्थितिसंहारादिति ॥

---

[1] "निर्लेपत्वादि घ्राण" इत्येकत्र "गुण" इत्यन्यत्र तथा 'मुख्ये' इत्येकत्र एवं 'मुखे' इत्यन्यत्र ह० लि० पु० पाठः ।
निर्लयत्वादि घ्राण ...... मुख्ये इति मु० पु० पाठो न सम्यक् ।

[2] 'उष्णिम.ने' इत्येव उ० ह० लि० पु० पाठः, ( नं ) इति समुचितः ।

[3] स्मृतिरित्येवोभयत्र ह० लि० पु०, मु० पु० च पाठः ।

[4] 'तत्र' उ० ह० लि० पु०, मु० पु० च पाठः ।

पूर्ववदेवाह—

**अत एव प्राणः ॥ २३॥**

ब्रह्मप्रकरणशब्दवति श्रुत्यन्तरे पूर्वसूत्रोदाहृतवाक्यसदृशं वाक्यं श्रूयते "क्वैष एतद् वा लोके पुरुषोऽशयिष्ट क्व वा एतदभूत् कुत एतदागादिति" प्रश्ने "यदा सुप्तः स्वप्नं न पश्यत्यथास्मिन् प्राण एवैकधा भवति एतस्मादात्मनः प्राणाः यथायतनं विप्रतिष्ठन्त" इत्यादि। अत्र सर्वं पूर्वसूत्रवद् बोध्यम्। अत एवेति ऊर्णनाभिदृष्टान्तादिरूपात् ब्रह्मलिङ्गादेवेत्यर्थः।

अत्राप्याधुनिकाः छान्दोग्यप्रथमप्रपाठकस्थमेव वाक्यान्तरमुदाहरन्ति "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ती" ति। तत्र दूषणं पूर्वसूत्रवदेव बोध्यम्। अधिकं तु अत्रादित्याभ्यां सह पाठो ब्रह्मपरत्वे बाधक इति॥

पूर्ववदेवाह—

**ज्योतिश्चरणाभिधानात् ॥ २४ ॥**

छान्दोग्यतृतीयप्रपाठक इदमाम्नायते "अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषु लोकेषु इदं वाव तत् यदिदमन्तः पुरुषे ज्योतिरिति"। अत्र किमादित्यादिज्योतिरुच्यते किं वा भूतज्योतिर्भावापन्नः परमात्मेति संदिह्यते ज्योतिःशब्दाद् ब्रह्मणश्च पूर्ववाक्यसन्निहितत्वात्।

तत्रायं निर्णयः— ज्योतिरिह ब्रह्म, कुतः? चरणाभिधानात्। पूर्वस्मिन् वाक्ये चतुष्पाद् ब्रह्म निर्दिष्टम् "एतावानस्य महिमा अतो ज्यायांश्च पूरुषः पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवी" ति मन्त्रेण, तत्र यतश्चतुपाद्ब्रह्मणस्त्रिपादमृतं द्युसंबन्धि निर्दिष्टं तस्यैव चरणत्रयस्यात्र ज्योतीरूपेणाभिधानात् द्युसंबन्धप्रत्यभिज्ञाबलेनोचितत्वादित्यर्थः। आदित्यादिज्योतिस्त्वसन्निहितम्, अतः पूर्ववाक्यस्थपुरुषादिशब्दलिङ्गादिबलात् ज्योतिःशब्दोऽत्र ज्योतिःशक्ति[1] शबलब्रह्मपरो न केवलब्रह्मपरश्च। केवलब्रह्मपरत्वे "तस्यैषा दृष्टिर्यत्रैतस्मिन् शरीरे संस्पर्शेनोष्णिमानं विजानाति तस्यैषा श्रुतिर्यत्रैतत्कर्णावपिगृह्य निनदमिव नदथुरिवाग्नेरिव ज्वलत उपशृणोति तदेतद्दृष्टं च श्रुतं चेत्युपासीते" ति ज्योतिर्लिङ्गानुपपत्तेः॥

**छन्दोऽभिधानान्नेति चेन्न, तथा चेतोऽर्पणनिगदात् तथाहि दर्शनम् ॥२५॥**

ननु पूर्वस्मिन्नपि वाक्ये चतुष्पात्त्वेन ब्रह्म न प्रक्रान्तं गायत्रीमेव प्रक्रम्य तामेव भूतपृथिवीशरीरहृदयभेदैर्व्याख्याय सैषा चतुष्पदा गायत्री तदेतदेवाभ्यनूक्तमेतावानस्य महिमेत्यादिना गायत्र्याख्यच्छन्दस एवाभिधानादिति चेन्न, तथाचेतोऽर्पणनिगदात् गायत्र्याख्यच्छन्दोविभूत्या तदनुगते ब्रह्मण्येव चेतः समाधानस्य कथनात्।

---

[1] 'ज्योतिःशक्तिशबल' इति उ० इ० लि० पु० पाठः।
'ज्योतिः शबल' इति मु० पु० पाठः।
शक्तिस्थाने उपाधिरिति २ पु० पाठ इति मु० श्रा०।

हि यस्मात् तथा दर्शनश्रुतिर्वर्तते "अतो ज्यायांश्च पुरुष" इति, केवलगायत्र्यां पुरुषत्वासंभवादित्यर्थः। "गायत्री छन्दसामहमि" ति स्मृतिरप्येवं दृश्यत इति ॥

किंच—

भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २६ ॥

एवं गायत्रीद्वारा ब्रह्मण्येव चित्तसमाधानं भूतादिपादकथनोपपत्त्यर्थमपि मन्तव्यमित्यर्थः। न हि ब्रह्मापरिग्रहे भूतपृथिवीशरीरहृदयानां चतुर्णां पादानां छन्दसि संभवः परिच्छिन्नत्वात् ॥

ननु पूर्ववाक्ये "त्रिपादस्यामृतं दिवी" ति द्यौराधारत्वेन निर्दिष्टा इह तु "यदतः परो दिवो ज्योतिरि" ति पञ्चम्या द्यौरवधित्वेनेत्युपदेशभेदान्न तत्रोक्तस्यात्र प्रत्यभिज्ञानमस्तीति सूत्रावयवेनाशङ्क्य समाधत्ते—

उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २७ ॥

नायं दोषः, उभयस्मिन् सप्तम्यन्ते[1] पञ्चम्यन्ते च चोपदेशेऽर्थस्याविरोधादर्थैक्यादित्यर्थः। यथा हि वृक्षाग्रे श्येनो वृक्षाग्रात् परतः श्येन इत्युभयथैक एव श्येनो वृक्षाग्र उदीयमान उपदिश्यते। सामान्यतो बोधितोऽपि वृक्षाग्रसंलग्नश्येनान्तरव्यावृत्तये परत इति। यथैव[2] ( तथैव ) दिव्येव सज्ज्योतिरवच्छिन्नं ब्रह्म दिव आरम्भकज्योतिर्व्यावृत्तये दिव पर इत्युच्यते। एवं हि समष्टिलिङ्गशरीरभावापन्नं ज्योतिर्विराडाख्यस्थूलशरीरस्य द्युशिरसि स्थितं लभ्यत इति। इदं च लिङ्गदेहतापन्नं ज्योतिरिति "अस्यैव चोपपत्तेरूष्मे"—त्यागामिसूत्रात् श्रुत्यनुसारिणो बोध्यम्।

यद्यपि लिङ्गशरीरं सप्तदशावयवकं सूक्ष्मपञ्चभूताश्रितमेव, तथापि [3]ज्योतिःप्राधान्याद् वैशेष्यात्तद्वादे तिन्यायेन[3] ज्योतिरित्युच्यते। तस्मिन् ज्योतिष्यनुगतश्चान्तर्याम्यत्र ज्योतिःशब्दार्थो बोध्यः। तदेतत् श्रुत्योक्तम् "यदतः परो दिवो ज्योतिर्दीप्यते, इदं वा व तद् यदिदमन्तः पुरुषे ज्योतिरि"ति। प्रदीपकलिकाकारं हृदिस्थमित्यर्थः, अंशांशिनोरभेदादिति भावः। स्थूलदेहमध्ये चान्यतेजो नास्ति, जठरादौ चास्यैवाधिक्येन वृत्तिलाभमात्रम्। अस्यैव चोष्मा संस्पर्शेन जीवद्देहेषूपलभ्यत इति श्रुत्योक्तत्वात्। अतो न ब्रह्माण्डाद् बहिः स्थितमावरणरूपं ज्योतिरिह ग्राह्यं दिवीत्याधारत्वानुपपत्तेश्चेति निर्णयः ॥

पूर्ववदेवाह—

प्राणस्तथाऽनुगमात् ॥ २८ ॥

---

[1] 'सप्तम्यन्ते च' इत्येकस्मिन् ह० लि० पु०, मु० पु० च पाठः।
"सप्तम्यन्ते पञ्चम्यन्ते च" इत्यन्यस्मिन् ह० लि० पु० पाठः।

[2] 'तथैव' इत्युभयस्मिन् ह० लि० पु० पाठः।

[3] "तथापि ज्योतिरित्युच्यते" इत्येव पाठ. उ० ह० लि० पु०।
अयं पा० २ पु० नास्तीति मु० शा०।

अत एव प्राण इत्यधिकरणे विरुद्धलिङ्गाभावाल् लिङ्गेनैव ब्रह्मावधृतम्। इदानीं यत्र विरुद्धनानालिङ्गानि सन्ति तत्र लिङ्गमात्रं न नियामकम्, अतस्तथाविधं प्राणवाक्यं लिङ्गाविरोधपूर्वकं हेत्वन्तरेण ब्रह्मपरतया अत्रावधारणीयमित्यपौनरुक्त्यम्। न केवलं लिङ्गादेव प्राणो ब्रह्म अपि तु अनुगमादपीति तथाशब्दार्थः, ज्योतिरधिकरणेन व्यवधानं च तदधिकरणस्य न्यायस्योत्तरसूत्रे आश्रितत्वादित्यनेनानुकर्षार्थमिति मन्तव्यम्।

कौषीतकीब्राह्मणोपनिषदि इन्द्रप्रतर्दनाख्यायिकायां प्रतर्दनमिन्द्र उपदिदेश "प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्स्वे" ति। तत्र संशयः—प्राणोऽत्र इन्द्रो, वायुविशेषो, जीवः, परमात्मा वेति। चतुर्णामपि लिङ्गदर्शनात्। तत्र तं मामायुरमृतमुपास्स्वेति इन्द्रदेवतालिङ्गम्। "अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति" इति प्राणलिङ्गम्। "न वाचं विजिज्ञासीत वक्तारं विद्यात्" इति जीवलिङ्गम्। "एष ह्येव साधु कर्म कारयति यमूर्ध्वं निनीषते, स एष प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमर इति च ब्रह्मलिङ्गमिति।

तत्रायं निर्णयः—प्राणोऽत्र ब्रह्म, कुतः? अनुगमात्। ब्रह्मण इन्द्रादिषु त्रिष्वेवानुगमात् सर्वलिङ्गोपपत्तेरिति शेषः। तेषु चानुपपत्तेरिति भावः। ब्रह्म हि सर्वरूपं "सर्वं खल्विदं ब्रह्म तज्जलान् तदनुप्रविश्य सच्च त्यच्चाभवदि" त्यादिश्रुतेः। अतः सर्वे धर्मा इन्द्रत्वादयस्तत्र संभवन्ति, इन्द्रादिधर्मास्तु न प्राणादिष्विति॥

अनुगमादिति हेतुमेव विवृणोति त्रिभिरुपसूत्रैः—

**न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन्॥२९॥**

ननु "प्राणोऽस्मि प्रज्ञात्मे" तीन्द्रस्योपदेष्टुः स्वात्मोपदेशात् प्राणो न ब्रह्म किन्तु बलादियोगादिन्द्र एवेति चेन्न, यस्मादस्मिन् प्रकरणे अध्यात्मसंबन्धप्राचुर्यमेव वर्तते नाधिदैवसम्बन्धप्राचुर्यमिति शेषः। आत्मानं जीवमधिकृत्य वर्तते यत् तदध्यात्मं प्राणादिकं "स्वभावोऽध्यात्ममुच्यते" इति स्मृतेः स्वस्यात्मनः पदार्थजातमिति। तस्यैव संबन्धप्राचुर्यं दृश्यते "न वाचं विजिज्ञासीत वक्तारं विद्यादि" त्युपक्रम्य "तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राश्च प्राणेष्वर्पिताः, स एष प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमर" इत्यादिष्विति। प्रज्ञामात्राः ज्ञानेन्द्रियांशाः अतोऽत्र सर्वोपकरणसहितो जीवोऽवश्यं ग्राह्यः। तथा च नेन्द्रपरिग्रहः संभवति, इन्द्रस्य प्रतिनियताधिकारेण सर्वानुगतत्वाभावादिति। यच्च "त्रिशीर्षाणं त्वाष्ट्रमहनमरुन्मुखान् यतीन् शालावृकेभ्यः प्रायच्छन् तस्य मे तत्र लोमापि न मीयत" इति वाक्यं तदिन्द्रस्य प्राणत्वे लिङ्गं न भवति ज्ञानस्तुतिपरत्वात् तद्वाक्यस्येति॥

कथं तर्हि वक्तुरात्मोपदेश उपपद्यतां तत्राह—

**शास्त्रदृष्ट्या तूपदेशो वामदेववत्॥३०॥**

"तं मामुपास्स्वे" त्युपदेशस्तु "एष त आत्मा तत्त्वमसी" त्यादिशास्त्रीयज्ञाना-

देव मन्तव्यो यथा वामदेवस्येत्यर्थः। यथा हि वामदेवो रुद्रः ऋषिविशेषो स्वस्यात्मा ब्रह्मेति ज्ञात्वा ब्रह्मण्यात्मभावेनाहं मनुरभवं सूर्यश्चेति शास्त्रीयज्ञानवानभूत् "तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चे" त्यादिश्रुतेः, तथैवेन्द्रोऽपि परमात्मानं स्वस्यात्मानं ज्ञात्वोपदिदेश "मामुपास्स्वे" ति, न तु देवात्मानं "स म आत्मेति विद्यादि" ति पारोक्ष्येणैवोपसंहारादिति। प्रतिपादितं च पञ्चसूत्र्यां ब्रह्मणो मुख्यमात्मत्वं स्वतः सदा सर्वद्रष्टृत्वात्। जीवानां च कादाचित्कात्यल्पतदधीनज्ञानयोग्यतामात्रेण गौणमात्मत्वं ब्रह्मत्ववत्, तदेवमन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतं नान्योऽतोऽस्ति द्रष्टा,

ते चैनं नाभिनन्दन्ति पञ्चविंशकमप्युत।
ईश्वरेच्छावशात् सोऽपि जडात्मा कथ्यते बुधैः॥

इत्यादि श्रुतिस्मृतिपरम्पराभिः अतो नेह प्रस्तूयते॥

## जीवमुख्यप्राणलिङ्गान्नेति चेन्न, उपासात्रैविध्यादाश्रितत्वादिह तद्योगात्॥ ३१॥

ननु देवतालिङ्गाभावेऽपि जीवस्य पञ्चवृत्तेः प्रधानप्राणस्य चोपदर्शितलिङ्गाभ्यां तावेव प्राणशब्दार्थौ युक्तौ न ब्रह्म तल्लिङ्गद्वयानुपपत्तेरिति चेन्न, उपासात्रैविध्यात्। जीवप्राणब्रह्मधर्मैर्ह्यत्र उपासायास्त्रैविध्यं श्रूयते, तथा चात्र जीवादीनामुपास्यत्वे जीवोपासनं, प्राणोपासनं, ब्रह्मोपासनं चेति वाक्यभेदः स्यादित्यर्थः।

ननु ब्रह्मपरत्वेऽप्युपासात्रैविध्येन वाक्यभेदः स्यात्, नेत्याह-तद्योगादिति। इह एकस्मिन्नेव ब्रह्मणि प्रकारत्रयेणैकस्या एवोपासाया युक्तत्वात् उपास्यधर्म्यभेदादित्यर्थः। इदमपि क्व दृष्टम्? तत्राह आश्रितत्वादिति। तथा "चेतोऽर्पणनिगदादि" "त्यनेन पूर्वाधिकरणे गायत्रीरूपेण "पादोऽस्य विश्वा भूतानी" त्यादिपुरुषधर्मेण चैकस्यैव ब्रह्मण एकस्या उपासाया आश्रितत्वादित्यर्थः। उपासात्रैविध्यं च जीवरूपेण, मुख्यप्राणरूपेण, "स न साधुना कर्मणा भूयान्" इत्यादिना स्वरूपेण चैकस्या एवोपासायास्त्रिप्रकारत्वम् नीलं सुगन्धि महदुत्पलमितिवदिति।

अत्र शास्त्रदृष्ट्येत्याद्युक्तसूत्रे जीवब्रह्मणोः एकांशवदखण्डताऽऽचार्यसंमता न भवतीत्यवधारणीयम्। अखण्डत्वे हि जीवधर्मोऽपि ब्रह्मधर्म एवेत्युपासाद्वैविध्यमेव स्यात्, तथा पूर्वपक्षोऽपि जीवलिङ्गेन न स्यात्। यदीन्द्रस्य "मामुपास्स्वे" त्युक्तिः शास्त्रदृष्ट्येत्यादि सूत्रे ना (सूत्रेणा) [1]खण्डतया समाहिता स्यात् तदा तुल्यन्यायतयेतरस्य जीवधर्मस्यापि समाधाने सिद्धे पुनर्जीवलिङ्गानुदयादिति॥

इति ब्रह्ममीमांसायां विज्ञानयतिविरचिते विज्ञानामृताख्यऋजुभाष्ये
प्रथमाध्यायस्य प्रथमः पादः॥

—(*)—

[1] सूत्रे नाखण्डतयां इत्येकस्मिन् ह० लि० पु० पाठः। मु० पु० अप्येवं पाठः।
सूत्रे नाखण्डताया इत्यन्यस्मिन् ह० लि० पु० पाठः।

## प्रथमाध्याये द्वितीयपादः

पूर्वपादे आकाशाधिकरणमारभ्य कानिचिद् विभूतिभी रूपैस्तदनुगतब्रह्मबोधकानि वाक्यान्यवधारितानि, ईश्वरविभूतयस्तद्वाक्यानि च विशिष्य सर्वाणि ब्रह्मणाऽप्यवधारयितुं न शक्यन्ते, तस्य सर्वरूपत्वान् श्रुतीनां चानन्त्यात्। तथा च गीता -

नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप। इति।

अत इदानीम्—

अथवा बहुनैतेन किं ज्ञातेन तवार्जुन।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्॥

इत्यादिस्मृतीरनुसरन् सामान्यतः सर्वैरेव प्रकृतिपुरुषतत्कार्यरूपैस्तत्तच्छ्रुतिषु श्रुतिलिङ्गादिभ्यो ब्रह्मावधारणीयमित्याह—

सर्वत्र प्रसिद्धोपदेशात्॥ १॥

न केवलम काशाद्यनुगतमेव ब्रह्मा विभागलक्षणाभेदेनाकाशादिरूपमेव मन्तव्यम्। अपि तु सर्वत्रैव जीवपर्यन्तेष्वनुगतं ब्रह्म सर्वरूपं ज्ञेयं, कुतः? प्रसिद्धोपदेशात्, "सर्वं खल्विदं ब्रह्म तज्जलान्, तत्सृष्ट्वा तदेवानुप्राविशत्, सच्च त्यच्चाभवत्, रूपं रूपं प्रतिरूपो बभूव, यः सर्वस्मिंस्तिष्ठन् सर्वस्यान्तरो यस्य सर्वं शरीरमि" त्यादिरूपात् सकलस्मृतिप्रसिद्धात् श्रौतोपदेशादित्यर्थः। एषु च वाक्येषु सामान्यात्मपरत्वे प्रधानपरत्वे च यः संशयः स प्रसिद्धशब्देन निराकृत, एतादृशोपदेशस्य मनुवशिष्ठपराशरादिभिः स्वशास्त्रेषु परमात्मन्येव कृतत्वात्। $ यथा मनौ शरीरेष्वंशभेदेनाधिकारिणो विष्ण्वादीनुक्त्वोक्तम् -

प्रशासितारं सर्वेषामणीयांसमणोरपि।
रुक्माभं स्वप्नधीगम्यं विद्यात्तं पुरुषं परम्॥
एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम्।
इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम्॥ इति।

विष्णुपुराणे च—

तदेव सर्वमेवैतत् व्यक्ताव्यक्तस्वरूपवत्।
तथा पुरुषरूपेण कालरूपेण वस्थितम्॥
प्रधानपुरुषव्यक्तकालानां परमं हि यत्।
पश्यन्ति सूरयः शुद्धं तद्विष्णोः परमं पदम्॥ [१] इति $।

ननूक्तेषु श्रुतिस्मृतिवाक्येषु कुत्रचिदाधाराधेयभावः कुत्रचिच्चाभेद इति कथमेषा-

---

$ अयं पाठ उ० ह० लि० पु० वर्तते। अयं पा० २ पु० नास्तीति मु० शा०।
[१] अं० १ अ० २ श्लो० २४।

मेकार्थपरतोच्यत इति चेन्न, अविभागलक्षणस्यैवाभेदस्योक्ततया सर्वेषामेकार्थत्वात्। अत एव तदनुप्रविश्येत्युक्तवाक्ये प्रवेशादेवाभेदः प्रतिपादितः। अत एव च सूत्रकारेणापि पूर्वं ब्रह्मेत्येवंरूपस्य श्रुतिगणस्यार्थोऽविभाग एवेति प्रतिपादयितुं सर्वमित्यनुक्त्वा सर्वत्रेति सूत्रितमिति।

अत्रानेन पादेन "सर्वभूतेषु चात्मानमि" त्येवंविधानां श्रुतीनामन्तर्यामिपराणां ब्रह्मपरत्वमवधार्यते, उत्तरपादेन च "यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यती" त्येवंविधवाक्यानामाधारतापराणामर्थोऽवधारणीय इति विभागो बोध्यः। एवं च सति

"यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति।
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते॥"

"यस्मिन् सर्वाणि भूतान्यात्मैवाभूद् विजानतः तत्र को मोहः कः शोक एकत्वमनुपश्यत" इति सकलवेदान्तस्य मुख्योपासना मीमांसिता भविष्यतीत्याचार्याशयः। तथा "तत्तु समन्वयादि" त्यत्रोक्तः समन्वयश्च सिद्धो भविष्यतीति॥

सर्वं खल्वित्यादिवाक्येषु न केवलं स्मृत्यादिप्रसिद्धादेवोपदेशाद् ब्रह्म ग्राह्यम्, अपि तु—

## विवक्षितगुणोपपत्तेश्च ॥२॥

सर्वं खल्वित्यादिवाक्येषु विवक्षितास्तात्पर्यविषयगुणाः सत्यसंकल्पत्वादयस्तेषां ब्रह्मण्येवाञ्जस्येनोपपत्तेश्चेत्यर्थः। तेष्वेकं वाक्यमुदाह्रियते—छान्दोग्यतृतीये इदमाम्नायते "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीताथ खलु क्रतुमयः पुरुषः स क्रतुं कुर्वीत, मनोमयः प्राणशरीरो भारूपः सत्यसंकल्प आकाशात्मा सर्वकर्मा सर्वकाम एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद् वा एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षाद् एतद् ब्रह्म एतमितः प्रेत्याभिसंभवितास्मीति यस्य स्याददूधा न विचिकित्साऽस्तीति"। अस्यार्थः—सर्वं खल्विदं ब्रह्म तज्जत्वात् तल्लत्वात् तदनत्वात् तज्जीवनाच्च[1] इति हेतोः सर्वत्र रागद्वेषशून्यतया शान्तो भूत्वा, प्रकरणाद् वाक्यशेषे ब्रह्मशब्देन प्रत्यभिज्ञायमानत्वाच्च। तदेव ब्रह्मोपासीत सदा चिन्तयेत्। यतोऽयं पुरुषो जीवसमूहः क्रतुमयः संकल्पमय एव "यं यं वापि स्मरन् भावमि" त्यादिस्मृतेः। तत्राधिकारिणमाह—स क्रतुमिति। यस्य पुरुषस्याद्धा तत्त्वतो ब्रह्मनिश्चयोऽस्ति न[2] तु विचिकित्सा संशयः स क्रतुं वक्ष्यमाणोपासनं कुर्वीत। तत्रोपासनायाः आकारमाह—मनोमय इत्यादिनेति। प्रेत्येति वचनादत्राभिसंभवनं ब्रह्मलोकद्वारा बोध्यम्। तत्र संशयः—

किमत्र मनोमयत्वादिना प्रसिद्धो मानसो ब्रह्मा गौणब्रह्मोपास्योऽथ वा परमिति? तत्रायं निर्णयः—यद्यपि मनोमयब्रह्मशब्दावेकैकस्य गौणतयोभयत्रोपपन्नौ[3], तथापि

---

[1] 'जीवनाद्य' इत्युभयत्र ह० लि० पु०, मु० पु० च पाठः, किन्तु 'च' इति उचितं भाति।
[2] 'न तु' इत्युभयस्मिन ह० लि० पु० पाठः।
'तत्तु' इति मु० पु० पाठोऽसाधुः।
[3] पन्नौ इत्येव उ० ह० लि० पु० पाठः। 'पत्तेः' इति मु० मु० पाठोऽसाधुः।

सत्यसंकल्पत्वात् संकुचितसर्वकर्मत्वादयो गुणा ब्रह्मण्येवोपपद्यन्ते। अतोऽणुरपि विशेषोऽध्यवसायकर इतिन्यायेन गौणमुख्ययोर्मध्ये मुख्ये संप्रतिपत्तिरितिन्यायेन च परं ब्रह्मैव सर्वं खल्वित्यत्रोक्तं तदेव चोपास्यमिति। मनोमयत्वादयश्च धर्मा ब्रह्मण्यपि गौणास्तस्य सर्वमयत्वप्रसिद्धेः। "स म आत्मे" त्युच्यमानस्य जीवात्मत्वस्योपपादनार्थं तु विशिष्य जीवोपकरणमयत्वमुक्तं न तु मनआदीनां करणत्वादिकमत्र विवक्षितं, येन ब्रह्मणि तदनुपपत्तिः स्यात्। तदेतत् सूत्रकारैर्विवक्षितशब्देनोक्तमिति बोध्यम्। एवं श्रुत्यन्तरेऽपि संशयनिर्णयादय उन्नेयाः॥

## अनुपपत्तेस्तु न शारीरः ॥३॥

शारीरो जीवः शरीरपरिच्छिन्नवृत्तिकत्वात्। स नात्रोक्तः, यथोक्तगुणानुपपत्तेरित्यर्थः॥

## कर्मकर्तृव्यपदेशाच्च ॥४॥

भेदतन्त्रात् कर्मकर्तृव्यपदेशादपि "एतमितः प्रेत्याभिसंभवितास्मी" त्येवंरूपात् शारीरो हिरण्यगर्भादिः सकलजीवः श्रुतिस्मृतिषु ब्रह्मोपासकत्वेन प्रसिद्धतया नोक्तश्रुत्यर्थ इत्यर्थः॥

नन्वयं कर्मकर्तृव्यपदेशो 'राहोः शिर' इतिवद् गौणतया व्याख्येय इति तत्राह—

## शब्दविशेषात् ॥५॥

अभिसंभवितास्मीत्यादिरूपात्ततः श्रुतिषु यथायोग्यं शब्दविशेषान्नात्र कर्मकर्तृव्यपदेशो गौण इत्यर्थः। अभिसंभवनप्रवेशादिकं हि लयरूपं श्रुतिषु भेदेनैव प्रयुज्यते, तथा जीवस्यावरोहे वायुर्भूत्वा धूमो भवतीति, नदीनां च समुद्रप्रवेशे ताः समुद्रात् समुद्रमेवापियन्ति स समुद्र एव भवतीति। भवनं चाविभाग इति प्रागेवोक्तमिति॥

## स्मृतेश्च ॥६॥

स्मृतिभिर्भजनीयत्वादिरूपैर्भेदसिद्ध्या 'सर्वं खल्वि" त्यादिश्रुतौ कर्मकर्तृत्वव्यपदेशो न गौणइत्यर्थः। सा स्मृतिः—

बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः॥
इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः।
वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च॥
ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
तमेव शरणं गच्छ सर्वभावेन भारत॥ इत्यादिरिति॥

प्रसिद्धोपदेशादितिहेतोरसिद्धिमाशङ्क्य समाधत्ते—

## अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति चेन्न, निचाय्यत्वादेवं व्योमवच्च ॥७॥

अर्भकमल्पमोको नीडं स्थानं यस्य तस्य भावस्तत्त्वं तस्मादल्पायतनत्वादिति यावत् । तथा तद्व्यपदेशात् अर्भकव्यपदेशाच्च न ब्रह्मपरत्वमुपदर्शितवाक्यानां भवति, "एष म आत्मा अन्तर्हृदय" इति परिच्छिन्नायतनत्वकथनात्, अणीयान् व्रीहेर्वेत्यादिना चाल्पत्वश्रुतेरिति चेन्न, एवं निचाय्यत्वात् एवं द्रष्टव्यत्ववचनादित्यर्थः । अन्तःकरणावच्छेदेनैव हि परमेश्वरो जीवानामात्मतयाऽभिव्यज्यत इति । ननु वास्तवमल्पत्वमेव कथं न स्यादित्याशङ्क्याह व्योमवच्चेति । ज्यायान् पृथिव्या इत्यादिना व्योमवद् व्यापकं च यतः श्रूयते इति शेषः । अनेन च दृष्टान्तेन घटाकाशवत् मन आद्यवच्छिन्नतया अल्पीयस्त्वव्यपदेशः श्रुत्युक्ताणीयस्त्वदृष्टिश्चोपपादितेति द्रष्टव्यम् ॥

## संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॥८॥

नन्वेकस्मिन्नेव हृदयमनःप्राणादावात्मद्वयाभ्युपगमे जीवसुखादिना परमात्मनि संभोगः प्रसक्तः स्त्रीपुरुषयोरन्योन्यसंमिश्रणे तुल्यभोगरूपस्य संभोगस्य दर्शनादिति चेन्न, वैशेष्यात् । ज्ञान्यज्ञादिरूपेणोभयोर्विशेषवत्त्वात् । तथा च जीवाद् ब्रह्मणि स्वरूपभेदात् जीवोपाधितो ब्रह्मोपाध्युत्कर्षाच्च न भोगसङ्कर इत्यर्थः । दृष्टं चैतत् यथा अश्वभोगेनाश्वारूढस्य राज्ञो न भोग इति । स्त्रीपुरुषयोश्चोपाधिभेदेऽप्युपाध्योरेकजातीयतया भोगसाम्यमिति ।

ये पुनरखण्डतां जीवब्रह्मणोराहुस्तेषामयं दोषोऽपरिहार्य एव आत्मैक्ये सति चक्षुराद्यवान्तरोपाधिजन्यभोगस्य तद्व्यापकोपाधिमनोद्वारेण यथा जीवे संभवः तथा मनोरूपावान्तरजीवोपाधिजन्यभोगस्यापि तद्व्यापकोपाधिद्वारेणेश्वरे युक्तत्वात्, व्याप्यव्यापकभावापन्ननानामनोभिरेकात्मनि विविधयोगानां कायव्यूहस्थले दृष्टत्वाच्च । यदि च जीवरूपेण ब्रह्मणोऽपि दुःखभोगादिकमभ्युपगम्यते "स एव जीवः सुखदुःखभोक्ते" तिवाक्यात् तदा "न लिप्यते लोकदुःखेन बाह्यः, एकस्तयोः खादति पिप्पलानामन्यो निरन्नोऽपि बलेन भूयात्[१] (भूयान्) इत्यादिश्रुतिस्मृत्योः जीवभोगस्य प्रतिषेधो ब्रह्मणि विरुध्येत । "स एव जीवः सुखदुःखभोक्ते" त्यादिवाक्यं च ब्रह्मैवेदं विश्वमित्यादिवाक्यवदेवाविभागलक्षणाभेदपरमिति प्रपञ्चितं पञ्चसूत्र्याम् ।

यदपि जीवब्रह्मशब्दयोरुपाधिविशिष्टे एव शक्तिर्वाच्या तथा चोपाधिभेदान्न भोगसङ्कर इति तन्मतं तदपि प्रागेव निराकृतम् । विशिष्टस्यानतिरिक्तत्वे सङ्करतादवस्थ्यात्, अतिरिक्तत्वे च भवदभिमताखण्डत्वानुपपत्तेः । लक्षणां विनाऽप्यस्य उक्ताभेदेनाभेदवाक्योपपत्तौ लक्षणाया अन्याय्यत्वात् । तटस्थज्ञानापत्त्याऽहं कर्तेत्यविद्यानिवृत्त्यसंभवाच्च, जीवे ब्रह्मणि चोभयत्रैवाध्यारोपापवादयोरविवेकरूपयोर्वैयधिकरण्यापत्तेश्चेति । यदपि तैरुच्यते, जीवेऽपि भोगः कल्पित इति, तदपि न, स्वप्रतिबिम्बितसुखदुःखसाक्षात्काररूपत्वात्तस्येति दिक् ।

अस्मिन् सूत्रे समुपसर्गप्रदानाद् ब्रह्मणि स्वातन्त्र्येण नित्यानन्दभोगोऽस्तीति गम्यत इति स्मरणीयम् ॥

---

[१] भूयात् इत्युभयस्मिन् ह० लि० पु० अपि पाठः ।

इदानीं भोगप्रसङ्गेनेश्वरस्यात्तृत्वगुणमवधारयति—

## अत्ता चराचरग्रहणात् ॥ ९ ॥

कठवल्ल्यां श्रूयते—"य इमं मध्वदं वेद आत्मानं जीवमन्तिकात्, ईशानं भूतभव्यस्य ततो न विजुगुप्सत" इति। तत्राग्निर्वा, जीवो वा, परमात्मा वा अत्तृत्वेनोक्त इति संशयः, त्रयाणामेवाग्निजीवपरमात्मनामस्यामुपनिषदि पूर्वमुपवर्णिततया प्रकरणस्य तुल्यत्वादिति। तत्र पूर्वपक्षः—जीव एवात्र भोक्ता, मध्विति विशेषवचनात्। ईश्वरो हि मिष्टामिष्टं जगदेव स्वात्मन्युपसंहरतीति तत्परत्वे विशेषवचनानौचित्यात्। अत एव नाग्निरपि, तस्यापि मिष्टाविचारात्। तस्मात्, जीवमन्तिकादिति जीवशब्दाच्च जीव एवात्रात्ता युक्त इति। तत्रायं सिद्धान्तः—

अत्तात्र परमात्मैव, कुतः? चराचरग्रहणात्। इयं पृथिवी सर्वेषां भूतानां मध्वित्यादिका एव चतुर्थाध्यायीयमधुविद्यानुसारेणात्र मधुशब्देन समस्तचराचरग्रहणात्। किं च "ईशानं भूतभव्यस्ये" त्यनेनात्तुरीशितव्यतया समस्तचराचरग्रहणमपि परमात्मनो अन्यत्रासंकुचितसर्वैश्वर्याभावादत्रोपपद्यते। अतः सकलभूतभव्यचराचरेश्वरत्वेनोक्तोऽत्ता परमेश्वर एव भवति॥

## प्रकरणाच्च ॥ १० ॥

"न जायते म्रियते वा विपश्चिदि" त्यादिना सन्निधानेन ब्रह्मण एव प्रकृतत्वात्, अग्निजीवयोश्च व्यवहितावान्तरप्रकरणस्थत्वादित्यर्थः। जीवशब्दश्च जीवरूपेणोपासनार्थमित्युक्तं "जीवमुख्यप्राणलिङ्गादि" ति सूत्र इति॥

नन्वयं भोगोऽपि जीवरूपेणैवास्तु किं पृथग् भोगान्तरकल्पनयेति तत्राह—

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥

इतश्च परमेश्वरोऽत्ता भवति, हि यस्मात् गुहां प्रविष्टावात्मानौ जीवेश्वरौ द्वावेवात्तारौ, तद्दर्शनात्। "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे। छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः" इति पूर्ववाक्ये द्वयोरेव जीवेश्वरयोर्भोक्तृत्वश्रवणादित्यर्थः। पुण्यस्य लोके विराडाख्यपुरे परार्ध्ये परमर्द्धिमति या गुहा भुवर्लोकाख्यं हृदयगह्वरं तस्यां ज्योतिर्मण्डलरूपलिङ्गशरीरोपाधिना प्रविष्टौ ऋतं सत्यं कामजातं पिबन्तौ भुञ्जानौ समष्टिजीवेश्वरौ ब्रह्मविदग्नित्रिणाचिकेतसः छायातपसदृशौ वदन्ति सह स्थितिगतिनियमादिभ्य इति श्रुत्यर्थः। तस्मात् द्वयोरेव पृथक् पृथग् भोक्तृत्वं सिद्धम्। तथा गीतायामपि जीवस्य भोक्तृत्वमुक्तम्—

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्।<br>
उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः।<br>
परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः॥

इत्यादिना। शान्तिपर्वादौ च—

"त्रीन् लोकान् व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः" इत्यादिना। तथा युक्ते-

रपि ईश्वरस्य भोगः सिध्यति। ईश्वरस्य नित्य आनन्दः श्रुत्यादिभिरानन्दमयाधिकरणे पञ्चसूत्र्यां च प्रसाधितः। तथा ईश्वरोपाधेः सत्त्वरूपतयाऽप्यानन्दवत्त्वं सत्त्वस्य सुखस्वभावत्वात्। स चानन्दोऽवश्यमीश्वरचेतने भासते तस्य सर्वज्ञत्वात्। तथा चोपाधिवृत्तिद्वारतां विना स्वप्रतिबिम्बितसुखानुभवो ब्रह्मणोऽभ्युपगतः, स एव च भोग इति।

किं चानन्दाभोक्तृत्वे सतीश्वरस्य नित्यानन्दत्वेन स्तुतिर्नोपपद्यते, अभोग्यानन्दस्य लोकेऽनुपादेयत्वात्। "अनश्नन्नन्योऽभिचाकशीती"त्याद्या भोगप्रतिषेधकश्रुतिस्मृतयस्तु 'जीवदर्शनं प्रत्ययाविशेषाख्यं मुख्यभोगमेवापाकुर्वन्ति'[1]। किं वा "न लिप्यते लोकदुःखेन बाह्यः" इति श्रुत्येकवाक्यतया जीवसुखदुःखेनेश्वरे साङ्कर्यमेव प्रतिषेधन्ति। तथा च यथा राज्ञः सेवकापराधिनौ सुखदुःखे भोजयतस्तद्विलक्षणं सुखमात्रस्य भोगान्तरं तत्समकालीनं दृश्यते, तथैव परमेश्वरस्यापि भोगान्तरमनुमेयमिति।

नचैवं "क्लेशकर्मविपाकाशयैरपरामृष्टः" इति पातञ्जलसूत्रे बिम्बान्तर्गतभोगस्य निराकरणं विरुध्येतेति वाच्यम्, वक्ष्यमाणभोगत्रयमध्ये भोगद्वयप्रतिषेधस्यैव व्यासभाष्यव्याख्यानतस्तदर्थत्वात्। तथाहि क्लेशादिव्याख्योत्तरं भाष्यम्—"विपाको जात्यायुर्भोगाः, ते च मनसि वर्तमानाः पुरुषे व्यपदिश्यन्ते, स हि तत्फलस्य भोक्तेति। यो ह्यनेन भोगेनापरामृष्टः स ईश्वर" इति। अत्र च द्विविधो भोगोऽवगम्यते, एको विपाकान्तर्गतो मनोनिष्ठः, स चान्नपानस्रक्चन्दनादिसूक्ष्मांशैः सुखाद्यात्मकस्य मनसः पोषणं शब्दाद्याकारवृत्तिश्च, "अन्नमशितं त्रेधा विधीयते तस्य योऽणिष्ठस्तन्मनो भवती"त्यादिश्रुतेः, भुज पालनाभ्यवहारयोरित्यनुशासनाच्च। एतेन देहप्राणयोरपि भोग उदाहृतश्रुतिशेषादेव बोध्यः। उक्तश्रुतौ च मनःशब्दो मनःप्रधानलिङ्गशरीरवचनस्तेन चक्षुरादीनामपि संग्रहः।

द्वितीयश्च भोगो यथोक्तभोगजन्ययोर्मनोनिष्ठयोः सुखदुःखयोः पुरुषे अविवेकरूपः "सत्त्वपुरुषयोः प्रत्ययाविशेषो भोग" इति सुखभोगप्रतिपादकयोगसूत्रात्।

तृतीयस्तु सुखादीनां साक्षादनुभवमात्ररूपः सांख्यशास्त्रसिद्धो गौणो भोग इति सांख्यसूत्रात्। तत्राद्यो भोगः सर्वेषामेव पुरुषाणां नास्ति, अविकारित्वादसङ्गत्वाच्च। द्वितीयश्च भोगोऽस्ति बुद्धेः जीवानां च, बुद्धिपुरुषनिष्ठयोः सुखादितदनुभवयोरविविक्तधर्मिकयोरेव भोगत्वात्। तृतीयस्तु जीवब्रह्मणोरेव, उपाधिगतसुखादीनां साक्षित्वादिति। अतस्तृतीय ईश्वरस्य भोगो न क्लेशादिसूत्रे निषिद्ध इति। ईश्वरभोगस्य च नित्यसुखगोचरतया नित्यतया च न तत्र कर्माद्यपेक्षा।

ननु कथं तर्हि "कामव्यूहमीश्वरः पिबती"त्युक्तं, तद्भोगस्य कामाप्रयुक्तत्वादिति चेन्न, नित्यस्याप्यैश्वर्यसुखस्य जीवानां कामभोजनेनाभिव्यज्यमानतया शब्दादिकामसुखमीशो भुङ्क्त इत्युपचारात् न त्वीश्वरो जीववत् कामजन्यंसुखं भुङ्क्त इति दिक्।

---

[1] अयं पाठः उ० ह० लि० पु० वर्तते। अयं पाठः २ पु० नास्तीति मु० श्या०।

अपरे तु ब्रह्मणि भोगमनिच्छन्त[1] ऋतं पिबन्ताविति श्रुतौ पिबन् पायश्चयं द्वावात्मानौ छत्रिणो गच्छन्तीतिवल्लक्षणया प्रयुक्ताविताहुः। तन्न, लक्षणानौचित्यात्, "भोगमात्रसाम्यलिङ्गाच्चे" ति चतुर्थाध्यायसूत्रे (ण) स्मृतिमूलश्रुत्योक्तयुक्त्या च भोगसिद्धेश्च।

$"पिबन्ते नाम विषयमसंख्याताः कुमारकाः।
[२]एकस्तु पिबते देव स्वच्छन्देनात्मकाम्यये" ॥ ति श्रुत्या*

साक्षादेव ब्रह्मणोऽपि भोगकथनाच्च।

अव्यक्तस्थेन रूपेण वैश्वानरमुखेन च।
सर्वं प्रत्युपभोगाय जायते परमात्मनः॥
कर्माणीश्वरतुष्ट्यर्थं कुर्यान्नैष्कर्म्यमाप्नुयात्।

इति याज्ञवल्क्यवाक्यादिभिरपि परमेश्वरस्य भोगसिद्धेश्च। अव्यक्तस्थ (स्व) रूपं कारणोपाधिशबलं वैश्वानरश्च समष्टिजीवो व्यष्टिसमष्ट्यभेदात्तु जीवान्तराणामपि संग्रहः।$

किं च "सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयोऽप्यानन्दभुक् चेतोमुखः प्राज्ञ" इति माण्डूक्यादौ स्पष्टमेव प्राज्ञस्येश्वरस्य भोगः श्रूयते। न चात्र प्राज्ञशब्देन जीव एवोक्तः 'सुषुप्तस्थान' इति सुषुप्तावस्थाकथनादिति वाच्यम्, अंशावस्थानामंशिन्युपपत्तेर्लक्षणानौचित्यात्। श्रुतिषु जीवानां सुषुप्तावस्थाया§ (यां) प्राज्ञे विलीनत्वादेव प्राज्ञत्ववचनात्। "भिद्येते नामरूपे समुद्र" इत्येवं‡ (व) प्रोच्यत" इति श्रौतदृष्टान्तात्। प्राज्ञशब्दस्य ज्ञानिनिरूढस्य प्रकृष्टाज्ञत्वम्[३] तथा साक्षात् सुषुप्तावस्था तु

---

[१] एकस्मिन् ह० लि० पु० 'अतं पिबन्तावि' त्यशुद्ध एव पाठः।
अन्यस्मिन् ह० लि० पु० च 'ऋतं पिबन्तावि' ति शुद्धः पाठः।
"अनिच्छन्तो अन्तं पिबन्तौ" इति मु० पु० पाठोऽपि न सम्यक्।

$ अयं पाठः उभयस्मिन् ह०लि०पु० वर्तते। अयं पाठः २ पु० नास्तीति मु०श्रा०।

[२] 'एवस्तु' इत्येकस्मिन् 'एकस्तु' इत्यन्यस्मिन् ह० लि० पु० पाठः।
'एषस्तु' इति मु० पु० पाठः।

* 'श्रुत्यो' इत्येकस्मिन् 'श्रुतया' इत्यन्यस्मिन् ह० लि० पु० पाठः।
'श्रुत्योः' इति मु० पु० पाठः।

§ 'वस्थाया' इत्येकस्मिन् ह० लि० पु० पाठः।
'वस्था' इत्यन्यस्मिन् ह० लि० पु० पाठः। 'यां' पाठः साधुः भाति।

‡ 'इत्येवं प्रोच्यत' इत्युभयस्मिन् ह० लि० पु० पाठः।

[३] 'प्रकृष्टाऽज्ञ तथा साक्षात्' इत्यादि पाठ एकस्मिन् ह० लि० पु० वर्तते।
'प्रकृष्टाऽज्ञ तथा साक्षात् सुषुप्तावस्था मूढ जीव' इत्यादि पाठः अन्यस्मिन् ह० लि० पु० वर्तते।
"प्रकृष्टाज्ञतया साक्षात् सुषुप्तावस्थामूढजीव" इति पाठो युक्तो भाति।

जीववाचकत्वव्यवस्थापनं तु मोहमूलकत्वादुपेक्षणीयम्, रूढेर्योगापहारित्वात्। सुषुप्ता-वस्थायामेवायं पुरुषः "प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमि" ति श्रुत्या स्त्रीपुरुषदृष्टान्तेन प्राज्ञजीवयोर्भेदस्यापि कथनाच्चेति। माण्डूक्यादौ च तुरीयाख्यात्यन्तलयावस्थापर्यन्तमवस्थाचतुष्टयं परमात्मन्यंशांश्यभेदेनोपासनार्थमुक्तम्। पुरुषसूक्तादिषु चतुष्पात्त्वेन परमेश्वरस्यैवोपासनादर्शनात्। अतः "ईश्वरप्रणिधानाद्वा, तस्य वाचकः प्रणवः, तज्जपस्तदर्थभावनम्" इतियोगसूत्रपुरुषसूक्तैकवाक्यतया माण्डू-क्यादावपि परमात्मपरत्वमवधार्यते। तेन तेषु जीवपरत्वभ्रमोऽ[1]वस्थाश्रवणमात्रेण न कार्य इति। प्रसङ्गान्माण्डूक्यादेर्जीवपरत्वं निराकृतमिति द्रष्टव्यम्॥

ननु ऋतं पिबन्तावित्यत्रात्मशब्दाप्रयोगाद् बुद्धिजीवावेवार्थौ स्याताम्। तथाहि पैङ्गिरहस्यब्राह्मणे "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते, तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीती" ति रूपा तदीया ऋग्व्याख्या। तथा "तयोरन्यः पिप्पलं स्वाद्वत्ती" ति सत्त्वम् अनश्नन्नन्योऽभिपश्यति ज्ञः, तदेतत् सत्त्वं येन स्वप्नं पश्यति, अथ योऽयं शरीर उपद्रष्टा स क्षेत्रज्ञः तावेतौ सत्त्वक्षेत्रज्ञाविति। तत्र सत्त्वाख्यायाः बुद्धेर्भोगो रूपादिविषयगतसुखदुःखाभ्यवहरणं, ताभ्यां पुष्टिर्यथा दुग्धमाधुर्यादीनां शर्करामाधुर्यादिभिः पुष्टिः। स एव चाविकारे सुखादिशून्ये च पुरुषे प्रतिबिम्ब्यते न तु बुद्धिगतसुखदुःखयोः प्रतिबिम्बगतमभ्यवहरणं भोगविशेष इति बोध्यम्। तथा पैङ्गिरहस्यैकवाक्यतया "ऋतं पिबन्ता" वित्यत्रापि सत्त्वक्षेत्रज्ञावेव विवेकार्थमर्थावास्तामित्याशङ्क्याह—

## विशेषणाच्च॥ १२॥

यदुक्तं तत्र विशेषणात् पिबन्ताविति विशेषवचनादित्यर्थः। तत्र ह्येकस्य भोक्तृ-त्वमन्यस्याभोक्तृत्वमुक्तम्। अत्र च द्वयोरेव भोक्तृत्वमिति कथमेकवाक्यता स्यादिति। चकारश्च चराचरग्रहणादिति हेत्वपेक्षया सूत्रद्वयपर्यवसिते द्वितीयहेतौ "गुहां प्रविष्टा-वात्मानौ ही" त्यत्र योजनीयः। किं च ऋतं पिबन्तावित्यस्याव्यवधानेनैवोत्तरवाक्ये जीवब्रह्मणी एव विशिष्य श्रूयेते "यः सेतुरीजानानामक्षरं ब्रह्म तत्परमि" ति "पर-मात्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण" इति च। जीव इति ईजानानां यतमाना-नामतस्तावेव पिबन्ताविति पूर्ववाक्ये ग्राह्यौ। अत एव च पैङ्गिरहस्यसमानाऽपि "द्वा सुपर्णा सयुजे" त्यादि मुण्डकश्रुतिर्न सत्त्वक्षेत्रज्ञपरा। मुण्डकेऽप्यव्यवहितोत्तर-वाक्ये जीवेश्वरयोरेव प्रतिपादनात् "समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक" इत्यनेन। तस्मात् पैङ्गिरहस्य[2] (स्यं) विवेकपरतया सांख्यानां मूल (मूलम्) काठकमुण्डके (तु) ब्रह्ममीमांसकानां मूलमिति विवेक्तव्यम्। न पुनरेकवाक्यताऽत्र कार्येति।

---

[1] भ्रमाऽवस्था इति पाठ उ० ह० लि० पु०, मु० पु० च वर्तते।
'भ्रमोऽवस्था' इति पाठो युक्तः।

[2] 'रहस्य' 'मूल' इत्येव पाठ उ० ह० लि० पु० अपि वर्तते।
'मुण्डके तु' इति पाठ उ० ह० लि० पु० वर्तते।

इदानीं ब्रह्मण आत्मान्तरशून्यत्वाशनाद्यतीतत्वादिगुणानवधारयितुं तदावेदक-वाक्यमपि ब्रह्मपरत्वेनावधारयति—

अन्तर उपपत्तेः ॥ १३ ॥

काण्वपञ्चमाध्याये "यदेव साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वे" ति प्रश्नस्य प्रत्युत्तरम् "एष त आत्मा सर्वान्तरो योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति"। साक्षादपरोक्षादिति विशेषणयोरगौणमलाक्षणिकं चेत्यर्थः। तत्र संशय—किमयं सर्वान्तरः पूर्ववाक्योक्तसर्वान्तरो जीव एव, वाक्यद्वयस्य रूपसाम्यात्, उत्तरवाक्ये विवेकपरत्वेन[1]वाशनायाद्यतीतत्वोपपत्तेरत एवापौन-रुक्त्यसम्भवाच्च, किं च परमात्मनो अशनायाद्यतीतत्वस्य सर्वथोपपत्तेरिति। तत्रायं निर्णयः—

अन्तरोऽत्र परमात्मैव, उपपत्तेः। न हि यदेवेत्यवधारणं जीवेषूपपद्यते, पर-मात्मापेक्षया जीवानामप्यमुख्यब्रह्मत्वात्, "य आत्मनि तिष्ठन्नात्मनोऽन्तर" इत्यादि श्रुत्यन्तरेषु जीवानामन्तरात्मान्तरसिद्धेश्च। अत एव जीवपरे पूर्ववाक्ये यदित्ये-वास्ति न तु यदेवेति। तत्र च "प्राणेन प्राणिति" इत्यादिजीवलिङ्गमप्यस्ति। ब्रह्मणि तु यदेवेत्युपपद्यते ब्रह्मणोऽन्तरात्मान्तरस्यासिद्धेः, "न चास्य कश्चिज्जनिता न वाधिप[2]" इति श्रुतेश्चेति॥

स्थानादिव्यपदेशाच्च ॥ १४ ॥

इतोऽप्यत्र वाक्येऽन्तरः परमात्मैव, स्थानादिव्यपदेशात्। स्थानमाधारः, व्यपदेशौचित्यात् इत्यर्थः। पूर्ववाक्ये हि आधाराणां घ्राणेन्द्रियादीनां नाद्यन्तानां[3] (नाड्यन्तानां) तत्पूर्ववाक्योपस्थितानामन्तरस्थतया एक आत्मा प्रोक्तः "एष त आत्मा सर्वान्तरः" इत्यादिना सर्वशब्दस्य बुद्धिस्थवाचित्वात्। तदनन्तरं वा[4] (चा) न्योऽ-प्यात्मा सर्वान्तर उच्यते। अतः पूर्वोपस्थिततयात्र तस्याप्यात्मनोऽयमन्तर इति गम्यते' पूर्ववाक्यादेवाधारक्रमेण व्यपदेशौचित्यादिति॥

सुखविशिष्टाभिधानादेव च ॥ १५ ॥

सुखेषु विशिष्टमुत्तमं सुखं[5] (ख) विशिष्टम्। तथा च "अशनापिपासे शोकं

---

[1] 'परत्वेन वाशनायाद्यतीत' इत्युभयत्र ह० लि० पु० पाठः।
'परत्वेन वाशनाद्य ीत' इति मु० पु० पाठः।
[2] 'न वाधिप' इत्युभय ह० लि० पु० पाठः।
'न वाऽधिप' इति मु० पु० पाठोऽसाधुः।
[3] 'नाद्यन्तानां' इत्येकस्मिन् ह० लि० पु० पाठः।
'वाय्वन्तानां' इत्यन्यस्मिन् ह० लि० पु० पाठः।
[4] 'वा' इत्युभयस्मिन् ह० लि० पु० पाठः।
[5] 'सुखं' इत्युभयस्मिन् ह० लि० पु० पाठः।

## सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥

व्यपदेशादिति चछेदेनानुवर्त्यते। सुषुप्त्युत्क्रान्त्योरवस्थयोरपि अर्थात् जीवाद् भेदेनैव ब्रह्म ज्ञेयमित्यर्थः। कुतः? व्यपदेशात् तदाप्यन्योन्याभावलक्षणस्य भेदस्य श्रुत्यैव व्यपदेशादित्यर्थः। यथा तत्रैव बृहदारण्यीयप्रकरणे सुषुप्त्यधिकारे "तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमि" ति, उत्क्रान्त्यधिकारे च "तद्यथा अतः सुसमाहितमुत्सर्जयद् यायादेवमेवायं शारीर आत्मा प्राज्ञेनात्मना अन्वारूढ उत्सर्जयद् याती" ति। अनयोर्वाक्ययोः सुषुप्तावुत्क्रान्तौ च जीवब्रह्मणोः स्फुटं रूपभेद उच्यत इति। अत्र चोत्क्रान्तिशब्दो जीवस्य देहत्यागमात्रपरतया मोक्षादीनामपि ग्राहकः। मोक्षावस्थायामपि "निरञ्जनः परमं साम्यमुपैती" ति श्रुतौ साम्यान्तर्गतस्य भेदव्यपदेशात्, "ब्रह्मैव सन् ब्रह्माप्येती" त्युक्तवाक्येष्वप्ययस्य भेदतन्त्रत्वाच्च। ब्रह्मैव सन्निति त्यक्तदेहाद्यभिमान इति, प्राप्तगौणब्रह्मभाव इति वार्थः। अगौनरुक्त्याय विशेषणपदस्यैव गौणतौचित्यादिति। प्रलयावस्थायाञ्च "यत्प्रयन्त्यभिसंविशन्ती" त्यादिश्रुतौ कोषखड्गयोरिव प्रवेष्टव्यप्रविष्टयोर्भेदोऽवगम्यत इति।

नन्वेवमपि सुषुप्तावेकीभावस्तुरीये च ब्रह्मचिन्मात्रावशेषो माण्डूक्यादिसकलश्रुत्यन्तरेभ्यः सेत्स्यतीति चेत्, उदाहृतयोर्बृहदारण्यकवाक्ययोरविभागपरत्वस्यागत्या वक्तव्यतया तदेकवाक्यत्वेनेतरश्रुतेरपि तत्परत्वमवधार्यते। तथा हि सुषुप्तौ तावत् स्त्रीपुरुषयोरिव मिथुनीभूय भुञ्जतोः स्पष्टविभागाभावेन जीवेश्वरयोरविभागलक्षण एकीभावः श्रुत्योच्यते। सुषुप्तौ जीवस्य भोगश्रवणेन चित्तवृत्तिसंबन्धतः सूक्ष्मविभागस्यैव सत्त्वात्। तुरीये तु चित्तस्यात्यन्तं विलयेन जीवस्याप्यत्यन्तविलयादीश्वरोपाधेश्च नित्यवृत्तिमतोऽपि व्यापाराभावेन प्रसुप्तत्वात्। ब्रह्मचैतन्ये च सर्वविषयावभासनलक्षणव्यापारस्य तुरीयाख्यमहाप्रलयावस्थायामप्यप्रच्यवाद् ब्रह्मचिन्मात्रावशेषता श्रुत्योच्यते। सुषुप्ततुरीययोरयमवान्तरः सूक्ष्मभेदश्च शिष्यैर्न विस्मरणीयः। तदेतत् स्वयमाचार्यो वक्ष्यति "अविभागो वचनादि" ति सूत्रेण। अस्माभिरपि षञ्चसूत्र्यां जीवब्रह्मणोरविभागलक्षण एवाभेदो नाखण्डत्वमिति विस्तरेण प्रतिपादितम्।

एतेन सुषुप्तिप्रलयमोक्षेष्वपि जीवब्रह्मणोराचार्येण भेदवचनादानौपाधिकः स्वाभाविक एव तयोर्भेद आचार्यसिद्धान्तोऽवधार्यते। भेदस्यौपाधिकत्वे सत्युपाधिविलयदशायां भेदप्रतिपादनानुपपत्तेः। न हि घटविलये तदौपाधिक आकाशे भेदो वक्तुं केनापि शक्यते युज्यते वा। भेदस्यापारमार्थिकत्वे सति तदानीमननुभूयमानभेदस्यानुवादानुपपत्तेः, अभेदस्यैव प्रतिपादनार्हत्वादिति। तस्मादेतत्सूत्राज्जीवब्रह्माखण्डतावादोऽपसिद्धान्त एवाधुनिकानामिति मन्तव्यम्।

आधुनिकास्तु अत्राधिकरणे बृहदारण्यकस्थज्योतिर्ब्राह्मणस्य जीवपरत्वशङ्कायां ब्रह्मपरत्वमवधार्यते, सुषुप्त्युत्क्रान्त्योर्जीवाद्भेदेन ब्रह्मणो व्यपदेशाद्धेतोरित्याहुः। तत्र (तन्न) ज्योतिर्ब्राह्मणे जीवस्यैव महाप्रकरणित्वात्। सुषुप्त्युत्क्रान्तिप्रकारकथनप्रसङ्गे-

नव प्राज्ञस्य कीर्तनात् "ब्रह्मैव सन् ब्रह्माप्येती" त्यवान्तरवाक्यशेषस्यैव गन्तव्यब्रह्मप्रकरणत्वात्, तत्र च सुषुप्त्युत्क्रान्त्यश्रवणादिति ॥

पत्यादिशब्देभ्यश्च ॥ ४३ ॥

सुषुप्त्युत्क्रान्त्योरपि भेदेनैव ब्रह्म प्रतिपत्तव्यमित्यन्वयः। पत्यादिशब्दाश्च "एष भूताधिपतिरेष भूतपालः, प्रधानक्षेत्रज्ञपतिर्गुणेशः, परेऽव्यये सर्व एकी भवन्ति, य आत्मानमन्तरो यमयती" त्याद्याः शतशः। न ह्यत्यन्तमभेदेन पतित्वादिकं संभवति, स्वस्वामिभावैकीभावयमनादेर्भेदतन्त्रत्वात्। न च सुषुप्त्युत्क्रान्त्योरभेदेऽपि जाग्रदादावौपाधिकभेदेन पतित्वादिकं संभवतीति वाच्यम्, औपाधिकभेदेन पतित्वादेरप्यौपाधिकत्वात् पतित्वादीनां कल्पितत्वापत्तेः। तच्च सत्यामुपपत्तौ न युक्तमिति।

आधुनिकास्तु अनेन सूत्रेण पत्यादिशब्दवतीषु श्रुतिषु ब्रह्मपरतानिर्णायकतया पृथगधिकरणं रचयन्तः सूत्रं चकारशून्यं पठन्ति। तथा च पत्यादिकं ब्रह्म श्रुतिभ्य इत्यर्थमाहुस्तन्न, स्पष्टशब्दे सति संशयस्यैवाभावात् तदभावे च हेत्वसिद्धिरिति ॥

इति ब्रह्ममीमांसायां विज्ञानयतिविरचिते विज्ञानामृताख्यऋजुभाष्ये
प्रथमाध्यायस्य तृतीयः पादः ॥ ३ ॥



## अथ प्रथमाध्यायस्य चतुर्थः पादः

तदेवं पादत्रयेण जगज्जन्मादिकारणस्य ब्रह्मणः शास्त्रयोनित्वं प्रतिपादितम्, ब्रह्मपरत्वेन सन्दिह्यमानानां वाक्यानां ब्रह्मपरत्वावधारणेन तत्र तत्रोक्ता ब्रह्मगुणाश्चानन्दमयत्वान्तर्यामित्वादय उपासनोपयोगिनोऽवधृताः, तथा "तत्तु समन्वयादि" त्यनेनोक्तो जगद्ब्रह्मणोरन्योन्यसमन्वयश्चाकाशस्तल्लिङ्गादित्याद्यधिकरणैः प्रसाधित, प्रसङ्गाच्च ब्रह्मविद्याधिकार्य्यादयोऽपि विचारिताः। इदानीं ब्रह्मणो जगज्जन्मादिकारणत्वे श्रुतिविरोधस्य परिहारमुखेन जगज्जन्मादिकारणत्वनिर्वाहिकां ब्रह्मणः शक्तिं प्रधानादिमवधारयति चतुर्थपादेन—

**आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥१॥**

ननु ब्रह्मणो जगत्कारणत्वादिकं कथं श्रुत्यर्थः स्यात् यत एकेषां शाखिनां श्वेताश्वतरादीनामानुमानिकं प्रधानमपि जगज्जन्मादिकारणत्वेन श्रूयते "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपा" इत्यादिषु। नन्वेवमुभयोरेव कपालद्वयवद् विश्वोपादानत्वमस्त्विति, मैवम्, स्वातन्त्र्येणोभयोः कारणत्वे सति ब्रह्मणो विकारित्वापत्तेरिति पूर्वपक्षदलार्थः। तमिमं पूर्वपक्षं शक्तिशक्तिमद्भावेनोभयोरेव कारणत्वेन समाधत्ते—न शरीररूपकविन्यस्तगृहीतेरिति। वक्ष्यमाणवाक्ये शरीरेण रूपकेण दृष्टान्तेन विन्यस्तमुपन्यस्तं यन्मायाख्यं प्रधानं तस्यैवाजावाक्ये स्पष्टत्वेन ग्रहणात्, न तु स्वतन्त्रकारणस्य कस्यचिदित्यर्थः। एतदुक्तं भवति—नाजावाक्ये स्वातन्त्र्येण प्रधानस्य कारणत्वं प्रोक्तं येन विरोधः स्यात्, किन्तु यथा अजाख्यच्छागीयशरीरस्य तज्जीवशक्तिविधया सजातीयबहुप्रजाकारणत्वं, तथैव प्रधानस्यापि ब्रह्मशक्तिविधया कारणत्वमुक्तं वक्ष्यमाणदृष्टान्तानुसारात्, रूपकरूप्ययोरस्मिन्नप्यंशे साम्यस्य विवक्षितत्वात्। तथा वाजादि[1] (चाजादि) वाक्यैः शरीरवच्छक्तिविधया प्रधानादीनामुपादानत्वादिकं बोध्यते, तद्विना निर्विकारस्य ब्रह्मण उपादानत्वानुपपत्तेः। ब्रह्मवाक्यैश्च शरीरिवच्छक्तिमद्विधया शक्तिद्वारा ब्रह्मणोऽधिष्ठानकारणत्वं प्रतिपाद्यत इति श्रुतीनामविरोध इति।

ननु भवेदेवं यद्यजानिरूपितप्रधानशक्तिकत्वेनात्र ब्रह्मोक्तं स्यात्, न त्वेवम्, अजाशरीरित्वेन ब्रह्मणः प्रतिपाद्यत्वे अन्यभोगत्वहेयत्ववचनानौचित्यात्। न च "अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य" इत्युत्तरार्धे अजाधिष्ठातृ ब्रह्म कथितमिति वाच्यम्, उत्तरार्धे [2]ज्ञानजीवयोरेव प्रतिपादनात् न तु ब्रह्मणः,

---

[1] "तथा वाजादि" इत्येव पाठः उ० ह० लि० पु० वर्तते।

[2] ज्ञानजीवयोरित्येकस्मिन् ह० लि० पु० पाठः।
ज्ञज्ञजीवयोरित्यन्यस्मिन् ह० लि० पु० पाठः।

"जहात्येनां भुक्तभोगामजोऽन्य" इति भोगत्यागस्य जीवलिङ्गत्वात्। तत्कथमजाया ब्रह्मशरीरदृष्टान्तताऽवधृतेत्याशङ्कायामाह—दर्शयति चेति। चो हेतौ, दर्शयति ह्यर्थाद् ब्रह्मशरीरतुल्यत्वं प्रधानस्य श्रुतिः—

"यस्तन्तुनाभ इव तन्तुभिः प्रधानजैः स्वभावतो देव-
एकः समावृणोति स नो दधातु ब्रह्माव्ययम्।
अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः।
एतज्ज्ञेयं नित्यमेवात्मसंस्थं नातः परं वेदितव्यं हि किञ्चित्।
भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्।
मायां तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्"।

इत्यादिवाक्यशेषैरित्यर्थः। अत्र तन्तुनाभदृष्टान्तादिभिस्तन्तुनाभशरीरतुल्यत्वं प्रधानस्य लब्धमिति।

नचैवं प्रधानस्यानुमानिकत्वं कथमुच्यते श्रुत्यापि तत्कारणतासिद्धेरिति वाच्यम्, स्मृतिषु प्राधान्येन विशिष्य च प्रतिपादनतः स्मार्तानुमानिकादिवचनाद् ब्रह्मण औपनिषदत्ववचनवदिति॥

इदानीं तस्य प्रधानाख्यशक्तेः स्वरूपं दर्शयन्नपि शरीरवदेव परमात्मनः प्रधानं न स्वतन्त्रमित्याह—

**सूक्ष्मन्तु तदर्हत्वात्॥ २॥**

तदानुमानिकं प्रधानं जडप्रपञ्चस्य सूक्ष्मं तु सूक्ष्मतामात्रविशेषवज्जडमेवाभ्युपगन्तव्यम्, कुतः? अर्हत्वात् योग्यत्वात्, कार्यस्वरूपस्यैव कारणस्यौचित्यादित्यर्थः। सृजमानां सरूपा इति श्रुतेश्चेति भावः। तथा च स्थूलप्रपञ्चस्य देहादेश्चेतनाधिष्ठानेनैव कार्यकारित्वदर्शनात् कारणस्य सूक्ष्मस्यापि जडत्वाद्यविशेषेण चेतनाधिष्ठितत्वमनुमीयते न स्वातन्त्र्यं परेच्छाननुविधायित्वरूपमित्यर्थः।

अथवेदं सूत्रमेवं व्याख्येयम्—ननु प्रधानाङ्गीकारे प्रलयकालीनस्य ब्रह्मचिन्मात्राद्वैतस्य क्षतिरित्याशङ्कामपाकरोति "सूक्ष्मं तु तदर्हत्वात्"। तु शब्दः शङ्काभिनिवृत्त्यर्थः। तत् प्रधानं समुद्रविलीनसैन्धववत् सूक्ष्ममर्हत्वात्, अप्रत्यक्षत्वाद्युपपत्तये तथौचित्यादित्यर्थः। तथा च विलीनावस्थसैन्धवेन समुद्रस्येव साम्यावस्थारूपेण प्रधानादिनाऽपि ब्रह्मणो न द्वैतं किन्त्वैक्यमेव समुद्रसैन्धवयोरिवेति भावः। व्युत्पादितं चेदं विस्तरतस्तत्तु समन्वयाधिकरणे विस्तारयिष्यते च तदनन्यत्वाधिकरण इति॥

ननु प्रलयाद्वैतानुरोधेन प्रधानापलाप एव कथं न क्रियते मुख्याद्वैतपरिग्रहस्यैवौचित्यादित्याशङ्कायामाह—

**तदधीनत्वादर्थवत्॥३॥**

सृष्ट्यादीनां प्रधानाधीनत्वात् प्रधानमर्थवत् प्रयोजनवदित्यर्थः। न हि शक्तिं विना केवलादेकस्मादसङ्गचिन्मात्राद् ब्रह्मणोऽविकारिणो वै (वि) चित्रासंख्यविश्व-

निर्माणं कादाचित्कं संभवति । अतः प्रकृतिपुरुषादिरूपा ब्रह्मशक्तिरिष्टेति । अत एव विष्णुपुराणे—

निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः ।
कथं सर्गादिकर्तृत्वं ब्रह्मणो ह्युपपद्यते ॥

इत्याशङ्कायां प्रत्युत्तरम्—

शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः ।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ॥[1] इति ।

अस्यायमर्थः—यतः सर्वभावानां शक्तयः सर्वपदार्थेषु प्रकृतिपुरुषादिषु स्वस्वकार्यजनन-सामर्थ्यानि अचिन्त्यानि योगिप्रत्यक्षाणि च यथायोग्यं तिष्ठन्ति, अतस्ताः पूर्वोक्ताः सर्गाद्याः ब्रह्मणो भावशक्तयः ब्रह्मोपकरणभूताखिलपदार्थानां सामर्थ्यानि न तु केवल-ब्रह्मण इति ।

ननु ब्रह्माद्वैतवाक्यानामाञ्जस्येनोपपत्त्यर्थं भवतु प्रपञ्चो[2] विवर्तस्याविद्यानिमित्त-ताभ्युपगमेना[3]विद्यया(ऽ)द्वैतहानितादवस्थ्यात् । न चाविद्यापि प्रलये नासीत् किं तु केवलादेव ब्रह्मणो विवर्त इत्येवाभ्युपगन्तव्यमिति वाच्यम्, एवं चेन्मुक्तस्यापि पुनर्वि-वर्तरूपसंसारप्रसङ्गात् चिन्मात्रस्य ब्रह्मणो नित्यत्वात् । अथ बन्धमोक्षादिकमपि कल्पितमेव, परमार्थतस्तदपि नास्तीत्येव श्रुतिमहावाक्यार्थो यथाकथञ्चिद् यदि व्यवस्था-प्यते, तदा बन्धमोक्षादिकं किमपि नास्तीति वेदान्तैरुच्यत इत्यापातज्ञानादेव मोक्षार्थं ब्रह्मसाक्षात्कारायाज्ञानां श्रवणादिकं याज्ञवल्क्यादीनां विद्वत्संन्यासादिकं च न स्यात्, फलनिश्चयाभावात् । बहुवित्तव्ययायाससाध्ये हि कर्मणि फलनिश्चयादेव लोकानां प्रवृ-त्तिरुत्पद्यते । न च भवन्मते महति संन्यासादिकर्मणि मोक्षाख्यफलनिश्चयः संभवति । मोक्षावधारणं मोक्षशास्त्राद् वेदान्तादेव भवति नेतरस्मात् । स च वेदान्तो न मोक्षा-दिपरो भवतोच्यते, मोक्षाद्यभावपरत्वाभ्युपगमादिति ।

ननु प्रलयेऽप्यविद्यां व्यावहारिकीमभ्युपगम्य तया व्यावहारिको बन्धमोक्षादि-रभ्युपेयो, न च तेन पारमार्थिकाद्वैतक्षतिरिति चेत्, प्रधानेऽपीदं तुल्यं, प्रधानेऽर्थक्रिया-कारित्वरूपव्यावहारिकसत्त्वस्यैवास्माकमिष्टत्वात् । ननु नित्यस्य प्रधानस्य कथमपार-मार्थिकत्वं स्यात्, उच्यते, अपारमार्थिकत्वं यद्यनित्यत्वं, यदि वा स्वतः सिद्धत्वाभावः, यदि वा सदभिव्यक्त्यभावो, यदि वा सर्वकालेष्वभावो, यदि वान्यत्, तत्सर्वं प्रधान-तत्कार्ययोर्नित्यानित्ययोः समानं, प्रधानस्य परिणामिनित्यत्वेऽपि घटस्य नित्यत्वा-भावात् । स्वतः सिद्धत्वाभावादीनां च सर्वाचेतनसाधारणत्वात्, प्रधानादीनां रूपा-न्तरेण मध्येऽपि रूपान्तरैरतीतानागतैः सदैवाभावाच्च ।

---

[1] विष्णु पु० अं० १ अ० ३ श्लो० २-३ ।

[2] उ० ह० लि० पु० यथामुद्रितं पाठः ।

[3] 'अभ्युपगमेनाविद्ययाद्वैतहानितादवस्थ्यात्' इत्येकस्मिन् ह० लि० पु० पाठः ।
'अभ्युपगमेन विद्यायाः द्वैतहानितादवस्थ्यात्' इत्यन्यस्मिन् ह० लि० पु० पाठः ।

न चात्यन्तविनाशित्वमेव व्यावहारिकसत्त्वमिति वाच्यम्, अत्यन्तविशेषणवैयर्थ्यात्, पञ्चसूत्र्यां प्रदर्शितवाक्यैः परिणामित्वस्यैव व्यावहारिकसत्तात्वेन लक्षितत्वाच्चेति, व्यावहारिकसत्त्वाभ्युपगमेन शशशृङ्गादिवदत्यन्तासत्त्वं चानित्येष्वपि भवता त्यक्तमिति। यथा च प्रधाननित्यत्वेऽपि ब्रह्मचिन्मात्राद्वैतं तथा व्याख्यातं "तत्तु समन्वया[दि]" त्यत्रेति त्यज्यतां सकलश्रुतिस्मृत्यनुसारिषु प्रधानवादिषु प्रद्वेषेण सूत्राणां कष्टव्याख्यानं, त्यज्यतां च "प्रधानक्षेत्रज्ञपतिर्गुणेशः, क्षरं प्रधानममृताक्षरं हरः, क्षरात्मानावीशते देव एकः, मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमि" त्यादिश्रुतिषु "कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यत" इत्यादिसकलस्मृतिषु च प्रधानप्रकृत्यादिशब्देषु रुच्यर्थं चेहोपलक्षणादिभिः शिष्यव्यामोहनमिति दिक् ॥

श्रुतीनां शरीरवच्छक्तिविधया अजास्रष्टृत्वपरत्वे हेत्वन्तरमाह—

## ज्ञेयत्वावचनाच्च ॥४॥

च शब्दो "दर्शयति चे" त्युक्तहेतुसमुच्चयार्थः। अस्मिन् प्रकरणे प्रधानं ज्ञेयत्वेनोपास्यत्वेन च (न) प्रोक्तम्, न चाकार्याज्ञेयानुपास्यस्य प्रतिपादनं श्रुतिषु स्वपरं भवति "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामि" ति न्यायात्, किन्वन्यशेषमेव तद् "भूतार्थानां क्रियार्थेन समाम्नाय" इति न्यायात्। तथा च ज्ञेयत्वेनोक्तस्य परमात्मनो जगत्कारणत्वेन प्रकृतस्य तदुपपत्तये प्रधानं(न) [1]कारणत्व(त्वं) शरीरवच्छक्तिविधयैवोच्यते न स्वातन्त्र्येणेत्यवधार्यत इत्यर्थः ॥

ननु "एतज्ज्ञेयं नित्यमेवात्मसंस्थं नातः परं वेदितव्यं हि किञ्चित्। भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्" इत्यनेनास्मिन् प्रकरणे प्रधानस्य भोग्यशब्दवाच्यस्य ज्ञेयत्वं श्रुतिर्वदतीत्याशङ्क्य समाधत्ते—

## वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥५॥

यदुक्तं तत्र[2] (तन्न) प्राज्ञ ईश्वर एव ह्यत्र ज्ञेयतयोपदिश्य[3] तं तत्त्वेतच्छब्देन भोक्त्रादित्रयं परामृष्य तस्य ज्ञेयत्वमुच्यते। कुतः ? प्रकरणात् ब्रह्मणः प्रकरणित्वेन तस्यैवैतच्छब्देन परामर्षस्य युक्तत्वादित्यर्थः। भोक्त्रादित्रयं तु मत्वेत्यनेनैवान्वेति। भोक्तेत्यस्य विभक्तिव्यत्यासेन भोक्तारमित्यर्थः। प्रेरिता देवतावर्गः ॥

## त्रयाणामपि चैवमुपन्यासः प्रश्नश्च ॥६॥

किं चैवं सति ब्रह्मवत् त्रयाणां भोक्तृभोग्यप्रेरकदेवानामपि वाक्योपक्रमे प्रश्नः प्रतिवचनाख्य उपन्यासश्च प्रसज्येयातां न त्वेवं दृश्यते "किं कारणं ब्रह्म कुतः स्म जाता"

---

[1] यथामुद्रितमेव उ० ह० लि० पु० अपि पाठः।

[2] तत्रेत्येव पाठ उ० ह० लि० पु० अपि वर्तते। 'तन्न' इति पाठः साधुः।

[3] यथामुद्रितं पाठ एकस्मिन् ह० लि० पु० वर्तते।
'उपदिश्यते न त्वेतच्छब्देन' इति अन्यस्मिन् ह०लि०पु० पाठः। स च युक्तो भाति।

इत्यादिना केवलब्रह्मण एव प्रश्नदर्शनात्, "यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येक" इत्यादिना केवलब्रह्मण एवोपन्यासदर्शनाच्चेत्यर्थः ।

यच्च "ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढामि" ति पूर्वार्द्धश्लोकेनादौ शक्तिदर्शनमुक्तं, तच्छक्तिमतोऽधिष्ठातृत्वदर्शनोपयोगितयेति मन्तव्यम्, स्वतन्त्रज्ञेयत्वे शक्तित्ववचनानुपपत्तेरिति ॥

दृष्टान्ताच्च प्रधानं न स्वतन्त्रं किन्तु शरीररूपकविन्यस्तमेवेत्याह —

**महद्वच्च ॥७॥**

यथा महत्तत्त्वमन्तःकरणविशेषः आत्मनः चेष्टाश्रयलक्षणशरीरमेव सचक्षुरादिभिः संयुज्य स्वकार्यजनने क्षमं भवति न स्वतन्त्रमिति सर्वैरभ्युपगम्यते, तथैव प्रधानमप्यचेतनत्वाविशेषादुचितमित्यर्थः ।

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥
महतः परमव्यक्तमव्यक्तात् पुरुषः परः ।

इत्याद्याः श्रुतयः । स्मृत्यनु [1]मिते(तय)श्च । न चात्र वाक्ये आत्मशब्दश्रवणवन्महच्छब्दो जीवार्थक एवास्त्विति वाच्यम्, अचेतनस्यात्मपरत्वानुपपत्तेः, पुरुषशब्देनैवात्मनोऽग्रे निर्देक्ष्यमाणत्वाच्च । तथा अचेतनवर्गमध्ये पाठेन महतोऽप्यचेतनौचित्यात्, घटस्यात्मा पिण्ड इतिवत् कारणेऽप्यात्मशब्दोपपत्तेः, महच्छब्दस्य स्मृतिषु महत्तत्त्वे रूढत्वाच्च, स्मृतिषु व्यवहारस्यापि श्रुतिमूलकतया तासु स्वतन्त्रसङ्केतकल्पनाया बाधकं विनाऽन्याय्यत्वाच्च । अस्यां च श्रुताववान्तरभेदेन बुद्धिमहतोर्भेद उक्तो महच्छब्दस्य चित्तवाचितयेति न स्वस्य स्वपरत्वानुपपत्तिः । तथा चोक्तं "यदाहुर्वासुदेवाख्यं चित्तं तन्महदात्मकमि" ति । प्रायशश्च स्मृतिषु चित्तबुद्धी एकीकृत्य बुद्धिशब्देन महत्तत्त्वमुच्यते ।

ननु "अस्य महतो भूतस्य निःश्वसितमेतदि" त्यादिबहुश्रुतिषु महच्छब्द आत्मन्यप्युच्यत इति चेत्, सत्यं, महत्तत्त्वोपाधिनैव चात्मन्यपि मानुषादिशब्दवन्महच्छब्दप्रयोगस्यौचित्यात् आत्मनः स्वतो विशुद्धचिन्मात्रत्वेनाविशिष्टतया महत्त्वाल्पत्वविभागायोगादिति ॥

परशेषतया प्रधानकारणताप्रतिपादने श्रौतदृष्टान्तमाह—

**चमसवदविशेषात् ॥८॥**

यथा "अर्वाग्बिलश्चमस ऊर्ध्वबुध्न" इत्यस्मिन्मन्त्रे चमसो यागशरीरत्वेनैव प्रतिपादितो न स्वातन्त्र्येण तथा प्रधानमपि जगत्कारणब्रह्मशरीरत्वेनैवात्र प्रतिपादितं न स्वातन्त्र्येण, कुतः ? अविशेषात् परप्रकरणे स्वातन्त्र्येण प्रतिपादनस्यानर्थकत्वाविशेषादित्यर्थः ।

---

[1] यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते ।

औपनिषदमेव दृष्टान्तान्तरमाह -

## ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॥९॥

तु शब्दः पुनरर्थे । ज्योतिरुपक्रमात् तेज आद्या तेजोऽबन्नरूपा शक्तिः पुनस्तथा चेतनशरीरविधयैव सृष्टौ हेतुः, हि यस्मात् एके कौथुमा अधीयते "तत्तेज ऐक्षत बहु स्यां प्रजायेय तदपोऽसृजते" त्यादि । अत्रेक्षितृचेतनस्य शरीरविधयैव तेज आदीनां स्रष्टृत्वं पठ्यते इत्यर्थः । अतस्तद्दृष्टान्तेनाजास्रष्टृत्वमपि चेतनब्रह्मशरीरविधयैव ग्राह्यमिति । न चाजाख्यप्रधानाभिमानिदेवताशरीरविधयाऽजायाः सकलस्रष्टृत्वं संभवति, देवानां बुद्ध्युपाधिकतया बुद्धिपूर्वकमहत्तत्त्वसृष्टावकारणत्वादिति ।

आधुनिकास्तु आनुमानिकमप्येकेषामित्यारभ्य सर्वाणि सूत्राणि सांख्ययोगसिद्धानां प्रधानमहदादिपदार्थानां स्वरूपप्रतिषेधपरतया यथाकथञ्चिद् व्याचक्षते, तत्तु श्रुतिस्मृतिन्यायादिविरोधादुपेक्षणीयं मुमुक्षुभिः । यत्र तेषामजाशब्दस्य भूतत्रयपरतया व्याख्यानं, तदपि हेयम्,

अशक्यः सोऽन्यथा द्रष्टुं ज्ञायमानः कुमारकाः ।
विकारजननीं मायामष्टरूपामजां ध्रुवाम् ॥

इति चुलिकोपनिषदादौ प्रधान एवाजात्ववचनात् । "मायां तु प्रकृतिं विद्यादि" त्याद्यव्यवहितवाक्यशेषतो 'देवात्मशक्तिं स्वगुणैर्निगूढामि" ति वाक्योपक्रमतश्चाजामेकामित्यादिवाक्येऽप्यजाशब्दस्य मूलकारणवाचित्वावधारणाच्च । तथाऽनादिसृष्ट्युपपादकतया अजाशब्दे यौगिकार्थस्यापि प्रकृते विवक्षितत्वाच्चेति ॥

ननु कथमुच्यतेऽनादिरीश्वरशक्तिरजावाक्ये निर्दिष्टेति, तस्याः लोहितशुक्लकृष्णरूपत्वासंभवात् प्रकृतौ रूपाद्यभावादित्याशङ्कामपाकरोति—

## कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥१०॥

च शब्दः पुनरर्थे । रूपादिवचनाविरोधः पुनरत्र मध्वादिविद्यायामिव कल्पनयोपदेशादित्यर्थः । यथा हि आदित्यस्यामधुनोऽपि मधुत्व वाचश्चाधेनोरपि धेनुत्वं भोग्यप्रदत्वादिगुणलाभार्थं रूपकल्पनयोपदिश्यते श्रुतिभिः "असौ वा आदित्यो देवमधु वाचं धेनुमुपासीते" त्यादिभिः तथैव प्रधानशब्दवाच्यानां सत्त्वादिगुणानां नीरूपाणामपि लोहितादिरूपाणि रागप्रकाशावरणरूपतालाभार्थं रूपकल्पनयोपदिशन्तीति ॥

विरोधान्तरं परिहरति[1]—

## न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥११॥

विरोध इतिच्छेदेनानुवर्तने । अथ वा पूर्वसूत्रे निषेधार्थकपृथक्प[2]दमेव वा

---

[1] 'प्रतिषेधति' इति उभयस्मिन् ह० लि० पु० पाठः ।

[2] यथामुद्रितमेकस्मिन् ह० लि० पु० पाठः ।

'पदमेव ना शब्दाः' इत्यन्यस्मिन् ह० लि० पु० पाठः ।

शब्दः। तथा च अजावाक्ये एकत्वसंख्याग्रहणाद् यो विरोधः प्रसज्यते सोऽपि नेत्यर्थः। अत्र हेतुस्त्वतिविस्तरभयात् पृथक्सूत्रैर्वक्ष्यते। नन्वजामेकामित्येकत्वस्य कुतो विरोधः प्रसक्त इति तत्राह—नानाभावादिति। काण्वादिशाखान्तरे "यस्मिन् पञ्चजना आकाशश्च प्रतिष्ठितः तमेवमन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतमि" त्यादिना ब्रह्मशक्तेर्नानात्वावगमादित्यर्थः। अत्र हि पञ्च पञ्चजना इत्यादिना शक्तिविशेषाणां प्रलयकालीनानामेव ग्रहणं वाच्यं, कार्यशक्तिपरत्वे तासामनन्तत्वेन पञ्च पञ्चे त्याकाश-श्चेति विशेषवचनासामञ्जस्यात्, तत्कथमुच्यते ? "एकामजां ब्रह्वीः प्रजाः सृज-मानामि" ति।

ननु सांख्योक्ति[1] पञ्चविंशतितत्त्वपरतया अत्र वाक्ये मुख्यकार्यमादायावान्तरभेदे-नैकस्या एवाजायाश्चतुर्विंशतिसंख्योपपादनीयेति शङ्कायां दूषणान्तरमाह—अतिरेका-च्चेति। पञ्चविंशत्यतिरिक्तस्याकाशस्य शक्तिमध्ये पाठाच्चेत्यर्थः॥

पूर्वसूत्रेण प्रतिज्ञाते विरोधाभावे हेतुमाह—

## प्राणादयो वाक्यशेषात्॥ १२॥

यद्यप्यत्र सूत्रे हेतुतावाचकः शब्दो नास्ति, तथापि "वासस्ते मलिनं राजकुलं मा गा" इत्यादाविव हेतुता लभ्यते तृतीयसूत्रपर्यालोचनयेति बोध्यम्। तथाचायं सूत्रार्थः—यस्मिन् पञ्च पञ्च जना इत्युदाहृतवाक्ये प्राणादयः पञ्चैव पुरुषभेदेन व्यक्ति-भेदात् पञ्च पञ्चेति वीप्सयोक्ताः, ते च कार्यभूता एव शक्तय इति। तथा च तेषां नानात्वेऽपि न मूलशक्तेरजाया एकत्वं विरुध्यत इति तृतीयसूत्रेण वक्ष्यति। हेतुमाह—वाक्यशेषादिति। "प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुरि" ति अव्यवहितवाक्यशेषात् तत्रोक्ताः षष्ठ्यन्तप्राणादिशब्दार्था एव प्राणादयः पञ्च प्रतिपुरुषव्यक्तिभेदेन वीप्सया पूर्ववाक्यप्रयुक्ता इत्यर्थः। अत्र वाक्ये प्राणस्य प्राणमित्यादिवचनात् पूर्ववाक्येऽपि शक्तिमति ब्रह्मणि प्रतिष्ठितत्वं प्राणादे-र्लभ्यते, शेषस्य प्राणादिशब्दपञ्चकस्य प्रेरकस्य प्रेरकतामात्रार्थकत्वात्। केनेपितो-पनिषदि "केनेषितं पतति प्रेषितं मनः" इत्यादिप्रश्नस्यात्रैव "श्रोत्रस्य श्रोत्रं मनसो मनो यद्" त्यादिप्रत्युत्तरदर्शनात् "प्राणःकम्पनादि" त्यादिगतसूत्रेभ्यश्चेति॥

ननु भवत्येवं [2](त्वेवं) माध्यन्दिनशाखायां, काण्वे तु चतुर्णामेव प्राणचक्षुः-श्रोत्रमनसां च वाक्यशेषे पाठात् पञ्चत्वानुपपत्तिरित्याशङ्क्य काण्वेऽपि पञ्च-त्वमुपपादयति—

## ज्योतिषैकेषामसत्यन्ने॥१३॥

एकेषां काण्वानामन्नेऽसति ज्योतिषा पञ्चसंख्या पूरणीया "तद्देवा ज्योतिषां ज्योतिरि" ति पूर्वमुक्तत्वादित्यर्थः। माध्यन्दिने तु पञ्चसंख्यायाः प्राणादिवाक्येनैव

[1] यथामुद्रितं पाठः उ० ह० लि० पु० वर्तते। 'सांख्योक्त' इति पाठः सम्यक्।

[2] 'भवत्येवम्' इत्येकस्मिन् ह० लि० पु० पाठः।
'भवत्वेवम्' इत्यन्यस्मिन् ह० लि० पु० पाठः।

पूरणादत्र ज्योतिर्वाक्यस्य सत्त्वसाम्येऽपि तदाऽऽकाङ्क्षेति भावः। एतेन "यस्मिन् पञ्च पञ्च जना" इति वाक्यस्य कार्यशक्तिपरतया प्रधानातिरिक्तस्याकाशस्य शक्तिमध्यपाठेऽपि न प्रधानमात्रस्य मूलशक्तेरेकत्वविरोध इत्यप्युक्तप्रायं वेदितव्यम्॥

ननु तथापि एकशब्दस्याद्वितीयार्थकतया प्रधानमात्रशक्तित्व [1](त्वे) विरोध एव, विष्णुपुराणादिषु जीवकालयोरपि शक्तित्वावगमादिति, तत्राह—

## कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः॥१४॥

आकाशादिषु संकल्पकार्येषु कारणत्वेन मूलप्रकृतित्वेनैव हेतुना यथाव्यपदिष्टस्याजामेकामिति वाक्यस्य प्रयोगादित्यर्थः। सृजमानाया उपादानकारणस्यैवाजाया एकत्वमुक्तं, जीवकालौ च नाकाशाद्युपादानमतो नोपादानशक्तेरेकत्वविरोध इति भावः। ननु तथापि अजाख्यप्रकृतेः सत्त्वादिगुणत्रयरूपतयैकत्वसंख्याविरोध इति चेत्, न, एकस्मिन्नीश्वरस्य सत्त्वे अपरेषां गुणानां प्रलयेनैकत्वोपपत्तेः। तदुक्तं मोक्षधर्मे- "तदेका प्रकृतिर्भवेदि" ति। अथवा धर्मभेदेन पुरुषभेदेन च भेदाभाव एवाजाया एकत्वमिह विवक्षितमजाश्रुतिस्वरसात्। "इन्द्रो मायाभिः पुरुरूप ईयत" इति श्रुत्यविरोधाय चेति॥

ब्रह्मणोऽद्वितीया मूलशक्तिरिति प्रसाधितम्। इदानीं यदुक्तं "यस्मिन् पञ्च पञ्च जना" इति वाक्यस्य कार्यपरत्वे पञ्च पञ्चेत्याकाश इति च विशेषवचनप्र (म)[2] युक्तमितरेषामपि ब्रह्मादिरूपकार्याणां ब्रह्मशक्तित्वात् ब्रह्मप्रतिष्ठितत्वाच्चेति, तत् समाधीयते—

## समाकर्षात्॥१५॥

मुख्याभ्यां प्राणादिपञ्चकाकाशाभ्यामितरकार्याणामप्युपलक्षणतया समाकर्षात् ग्रहणादुक्तार्थोपपत्तिरित्यर्थः॥

कथं समाकर्षणं, तत्राह—

## जगद्वाचित्वात्॥१६॥

षष्ठ्यन्तानां वाक्यशेषस्थप्राणादिशब्दानामुपलक्षकतया जगद्वाचित्वात् समस्तकार्यवाचित्वादित्यर्थः। एतेन परमात्मनः कार्यशक्त्योऽपि मीमांसिता इति मन्तव्यम्॥

## जीवमुख्यप्राणलिङ्गान्नेति चेत् तद्व्याख्यातम्॥१७॥

ननु यदुक्तमजावाक्ये ब्रह्मशक्तिविधया प्रधानप्रतिपादनं, यच्चोक्तं "प्राणस्य प्राण" इति वाक्ये ब्रह्मशक्तितया प्राणादिप्रतिपादनं तदुभयमपि न, कुतो? जीवमुख्यप्राणलिङ्गात्। अयमर्थः—भवेदेवं यद्यजाप्राणवाक्ययोर्ब्रह्मप्रकरणस्थत्वं सिध्येत्, तदेव तु न, अजावाक्यवति श्वेताश्वतरे जीवलिङ्गं हि दृश्यते "रुद्र यत्ते दक्षिणं मुखं

[1] यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते। 'त्वे' इति पाठः सम्यक्।

[2] यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते। 'मयुक्तमि' ति पाठः सम्यक्।

तेन मां पाहि नित्यमि" त्यादिवाक्यशेषेषु। नन्वेवंविधवाक्येभ्य एव रुद्रः परमेश्वर एव भवत्विति चेन्न, ईश्वरवादिभिः श्रुत्यन्तरेभ्यः स्मृतिभ्यश्च ब्रह्मादिदेवतात्रयादतिरिक्ततयैवेश्वराभ्युपगमात्। एवं प्राणवाक्यस्याप्यव्यवधानेनादौ प्राणलिङ्गं दृश्यते "तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतमि" त्यादिना। प्राणस्य चायुष्ट्वं श्रुत्यन्तरे दृष्टं "प्राणो हि भूतानामायुस्तस्मात् सर्वायुषमुच्यते" इति।

तस्मादजाख्या प्रकृतिः सर्गाद्युत्पन्नस्य महापुरुषस्यैव शक्तिः न परमेश्वरस्य। तस्याश्च कर्मवशादेवाद्या प्रवृत्तिर्नाधिष्ठातारमपेक्षते। अतः स्वतन्त्रैव प्रकृतिः सृष्ट्यादिकारणम्। एवं प्राणादयोऽपि मुख्यप्राणस्यैव शक्तिरिति। न च प्राणस्य प्राणत्वं कथं मुख्यप्राणे स्यादिति वाच्यम्, [1]प्राणस्येत्यर्थः संभवात् (प्राणस्येत्यस्य घ्राणस्येत्यर्थसंभवात्)। प्राणशब्दस्य घ्राणवाचकतायाः श्रुत्यन्तरे दृष्टत्वादिति। तदित्थं पूर्वपक्षे सिद्धान्तमाह—इति चेत् तद् व्याख्यातमिति। तल्लिङ्गद्वयं ब्रह्मण्यपि व्याख्यातमुपपादितम् प्रथमपादे "उपासात्रैविध्यादाश्रितत्वादिह तद्योगादि" ति सूत्रार्धेनेत्यर्थः।

अयं भावः—श्वेताश्वतरे परमात्मैव महाप्रकरणी "यो ब्रह्माणं विदधाति पूर्वं यो व वेदांश्च प्रहिणोति तस्मै क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एक" इत्यादिवाक्येभ्यो ब्रह्मरुद्राद्यतिरिक्तः। तस्मात्तदन्तर्यामिण एव प्रकरणित्वात्। अतो अजाप्रकरणे यज्जीवलिङ्गमस्ति तत्प्रकरणानुरोधेन शक्तिशक्तिमदभेदेनोपासनार्थं ब्रह्मण्येव बोध्यम्, "अनेन जीवेनानुप्रविश्ये" ति श्रुत्या ब्रह्मणो जीवरूपित्वसिद्धेः। "स एव जीवः सुखदुःखभोक्ते" त्यादिषु स्फुटं तथा वचनाच्च। अन्यथा हि प्रकृतहान्यप्रकृतप्रक्रिये प्रसज्येयातामिति। एवं प्राणवाक्येऽपि यन्मुखप्राणलिङ्गमस्ति, तदपि प्रकरणानुरोधेन प्राणशक्तिद्वारा ब्रह्मण्येव बोध्यम्।

नृप मूर्तान्यमूर्तानि यान्यत्रान्यत्र वा क्वचित्।
सन्ति वै वस्तुजातानि तानि सर्वाणि तद्वपुः॥

इत्यादिवाक्येषु ब्रह्मणः प्राणादिरूपित्वसिद्धेरिति। अस्मिन् सूत्रे पूर्वपक्षनिराकरणमुखेनैव जीवस्यापि ब्रह्मशक्तित्वमुक्तमतो न शक्तिमीमांसान्यूनतेति॥

## अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके॥१८॥

जैमिनिस्त्वाचार्य उपासनार्थं न मन्यते किं तु परमसूक्ष्मत्वेन स्वतो दुष्प्रतिपाद्यतया [2]क्रमेण ब्रह्मस्वरूपप्रतिपादनार्थं शाखाचन्द्रन्यायतो[2] जीवमुख्यप्राणादिशक्तिरूपेणादौ सर्वान्तर्यामि ब्रह्म प्रतिपादयितुं ब्रह्मप्रकरणेषु जीवमुख्यप्राणादिकं प्रतिपाद्यत इति मन्यते, कुतः? प्रश्नप्रतिवचनाभ्यां प्रश्नप्रत्युत्तराभ्यां ब्रह्मप्रकरणित्वादित्यर्थः।

---

[1] यथामुद्रितं पाठ एकस्मिन् ह० लि० पु०।
'प्राणस्येत्यस्य घ्राणस्येत्यर्थसंभवात्' इति पाठः अन्यस्मिन् ह० लि० पु० वर्तते, स च सम्यक्।

[2] अयं पाठ उ० ह० लि० पु० वर्तते। अयं पाठ २ पु० ना० इति मु० ग्रा०।

अपि चेत्यादि। अपि च एके शाखिनः काण्वादयः एवम् अन्यार्थमेवातिस्पष्टं जीवादिकं ब्रह्मप्रकरणे पठन्ति [१]इत्यर्थः। $यथा काण्वे चतुर्थे "सहोवाचाजातशत्रुर्यत्रैष एतत् सुप्तोऽभूद् य एष विज्ञानमयस्तदैषां प्राणानां विज्ञानेन विज्ञानमादाये" त्यादिना जीवतदवस्थादिपठनं तत्स्वापाधारब्रह्मप्रतिपादनार्थमिति$ *"स एष इह प्रविष्ट आनखाग्रेभ्यस्तं न पश्यत्यकृत्स्नो हि स इति, द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च, अथात आदेशो नेति नेतीति* ॥

अपि चैवमेक इत्यत्र हेतुमाह—

## वाक्यान्वयात् ॥१९॥

विधिनिषेधरूपपूर्वापरवाक्यैकवाक्यतया काण्वादिष्वन्यार्थत्वावधारणमित्यर्थः। ‡शब्दाभावाच्च नोपासापरत्वमिति भावः‡।

## प्रतिज्ञासिद्धेर्लिङ्गमित्याश्मरथ्यः ॥२०॥

आश्मरथ्यरूपाचार्यो यथोक्तं लिङ्गद्वयं जीवप्राणयोरिव ब्रह्मणोऽपि साधारण्यमेव मन्यते, कुतः? प्रतिज्ञया ब्रह्मणि लिङ्गद्वयस्य सिद्धत्वात्। अजावाक्यादौ तावत् "य एको वर्णो बहुधा शक्तियोगाद् वर्णाननेकान् निहितार्थो दधाति। विचैति चान्ते विश्वमादौ स देवः स नो बुद्ध्या शुभया संयुनक्तु॥ तदेवाग्निस्तदादित्यस्तदु चन्द्रमाः तदेव शुक्रं तद् ब्रह्म तदापस्तत् प्रजापतिरि" ति प्रतिज्ञया कार्यकारणाभेदेन सर्वे जीवादिधर्माः पञ्चमुखत्वादयोऽपि ब्रह्मणि सिद्धाः। प्राणवाक्यस्य च शेषे "मनसैवानुद्रष्टव्यं नेह नानास्ति किंचन मृत्यो स मृत्युमाप्नोति य इह नानेव पश्यति" इति प्रतिज्ञया सर्वस्यात्मनि कारणे च ब्रह्मणि सर्वे प्राणादिधर्माः परमायुष्ट्वादयोऽपि सिद्धा इत्यर्थः। व्यासमताच्चास्य मतस्यायं विशेषो यद् व्यासाचार्यैः शक्तिशक्तिमदभेदोपासनापरत्वेन लिङ्गद्वयमुपपादितम् ब्रह्मणि, आश्मरथ्याचार्यैः [२]स्तूपासनां विनापि[२] कार्यकारणाभेदेन कार्यधर्म इति लिङ्गद्वयमुपपादितमिति॥

---

[१] 'इत्यर्थः' इत्यपि पाठ उ० ह० लि० पु० वर्तते।

$ अयं पाठ उ० ह० लि० पु० नास्ति।
अयं पाठः २ पु० नास्ति इति मु० शा०।

* अयं पाठ उ० ह० लि पु० वर्तते।
अयं पाठ २ पु० नास्ति इति मु० शा०।

‡ अयं पाठ उ० ह० लि० पु० वर्तते।
अयं पाठ २ पु० नास्ति इति मु० शा०।

[२] अयं पाठ उ० ह० लि० पु० वर्तते।
किन्तु "कार्यकारणाभेदेन कार्यधर्म इति" इत्येतावानंशः उ० ह० लि० पु० नास्ति।
अयं पाठ २ पु० नास्ति इति मु० शा०।

## उत्क्रमिष्यत एवं भावादित्यौडुलोमिः ॥२१॥

औडुलोमिस्त्वाचार्यो मन्यते परमात्मन्यपि जीवप्राणयोर्लिङ्गमुपपद्यते उत्क्रमणारम्भकाले जीवप्राणयोरेवंभावात् परमात्मभावात्, यथा मैथुनकाले स्त्रीपुंसयोरेकीभाव इत्यर्थः। तथा च मरणकाले परमात्माविभागादन्यदापि तदभेदव्यवहारेण जीवप्राणधर्मौ ब्रह्मण्युच्येते, लोके तथा व्यवहारादिति भावः। "अथास्य पुरुषस्य प्रयतो वाङ् मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामि" त्यादिश्रुतयश्च जीवप्राणयोर्ब्रह्मणि सम्पत्त्याख्यमैक्यं बोधयन्ति ॥

## अवस्थितेरिति काशकृत्स्नः ॥२२॥

काशकृत्स्नस्त्वाचार्यो मन्यते, प्रलयकाले जीवादीनां सर्वेषामेव ब्रह्मण्यवस्थितेर्विलयादत्यन्तमेकीभावेनान्यदापि तदभेदस्यैव पारमार्थिकत्वम्, ❀जीवब्रह्मविभागस्य नैमित्तिकत्वेन स्वाभाविकाविभागापेक्षया वाचारम्भणमात्रत्वात्❀। अतो यथोक्तलिङ्गत्रयं ब्रह्मण्युपपद्यत इति। औडुलोमिमताच्चास्यायं विशेषो यदौडुलोमिना स्त्रीपुरुषयोरिव मिथुनीभावरूपं मरणप्रारम्भकालीनमैक्यमादाय लिङ्गद्वयमुपपादितम्। काशकृत्स्नेन च नदीसमुद्रयोरिवैकतरस्यात्यन्तविलयतः प्रलयकालीनमैक्यमादाय लिङ्गद्वयमुपपादितमिति। यथा च सुषुप्तिमरणप्रारम्भयोरीषत् ज्ञानं प्रलयव्यावृत्तं तिष्ठति जीवानामीश्वरे संसृष्टानां तथा वक्ष्यामो जीवावस्थाप्रकरणे। श्रुती चात्र भवतः "त्रिषु धामसु यद्भोग्यमि" ति, "हृदयस्याग्रं प्रद्योतते तेन निष्क्रामती" ति च। तस्माद् युक्त उभयोर्मतभेद इति। एते च मतभेदाः सर्व एवाविरुद्धाः श्रुतिसिद्धाश्च भवन्ति प्रकृतपूर्वपक्षसमाधानाय केवलं मुनिभिः पृथक् पृथगुपन्यस्ता इति बोध्यम्।

इदमिदानीं विचार्यते—यदिदमानुमानिकं प्रधानमीश्वर 'शक्तिविधया[1] विश्वस्रष्टृ प्रोक्तम्, किमेतदेव राज्ञो मन्त्रिवज्जीवस्यान्तःकरणवच्च परमात्मनः संकल्पाद्याधारभूता स्वभावाख्या प्रकृतिरन्तरङ्गशक्तिः? अथवेदं शरीरस्थानीया बहिःशक्तिरेव एतदधिष्ठानार्थं शक्त्यन्तरमस्तीश्वरस्य? किं वा शक्त्यन्तरनैरपेक्ष्येणैव नैयायिकानामिव स्वत एवेश्वरः प्रधानपुरुषादिकमधितिष्ठतीति? तत्राद्यं पक्षं सिद्धान्तयति—

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥२३॥

मायां तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्।
अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥

इति प्रतिज्ञायाः, "तन्तुनाभ इव तन्तुभिः प्रधानजैः स्वभावतः देव एकः समावृणोति स नो दधातु ब्रह्माव्ययमि" ति दृष्टान्तस्य च वाक्यशेषस्थयोरनुपरोधार्थमाञ्जस्येनोपपत्यर्थ-

---

❀ अयं पाठ उ० हृ० लि० पु० वर्तते।

अयं पा० २ पु० नास्ति इति मु० शा०।

[1] अयं पा० २ पु० ना०। तन्त्रेणेति प्र० पु० पा० इति मु० शा०।

अयं पाठ उ० ह० लि० पु० वर्तते।

मित्यर्थः। प्रकृतित ईश्वरोपाधेरत्यन्तभेदे तथेश्वरस्य निरुपाधित्वे च हि तयोः पीडा स्यादिति। विष्णुपुराणादौ त्वपरिणामित्वरूपवैधर्म्येणेश्वरोपाधिः प्रधानादतिरिक्त एवोक्तः। अत्र तु समानतन्त्रपातञ्जलसिद्धान्तत्वात् "आनन्दादयः प्रधानस्ये" त्यागामिसूत्राच्च ईश्वरोपाधेः प्रधाने प्रवेश एव सूत्रकाराभिप्रेतो जडत्वसाधर्म्येणेत्यवगम्यत इति।

यद्यपि "स्वभावस्तु प्रवर्तते, कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यत" इत्यादिप्रयोगान् प्रकृतिशब्दस्य स्वभावकारणोभयवाचित्वं, तथाप्यत्र प्रकृतिः स्वभाव एव बोध्यः। "आनुमानिकमप्येकेषामि" त्यादिना सूत्रेणैव परमात्मशेषतया जगत्कारणत्वस्य प्रधाने सिद्धत्वेन *पुनस्तत्प्रतिपादनवैयर्थ्यात्* तथा "आकाशस्तल्लिङ्गादि" त्यादिसूत्रवदिदं सूत्रं न प्रकृत्याख्यशक्तिरूपेण ब्रह्ममीमांसकमपि भवति "सर्वत्र प्रसिद्धोपदेशादि" ति सामान्यसूत्रेणैव गतार्थत्वात् ॐतथा सति पूर्वपादत्रय एवैतदधिकरणौचित्याच्चेतिॐ।

तथा साक्षाद् ब्रह्मणो जगत्प्रकृतित्वमपि नास्य सूत्रस्यार्थः, अस्मिन् पादे शक्तेरेव प्रकृतत्वात्, "जन्माद्यस्य यतः, तत्तु समन्वयात्, तदधीनत्वादर्थवत्" इत्यादिसूत्रैरेवाधिष्ठानकारणत्वस्य ब्रह्मणि लब्धत्वाच्च। स्वतः प्रकृतित्वस्य तु निर्विकारश्रुतिस्मृतिविरुद्धत्वात्।

ननु विकाराणां विवर्तत्वेनायं दोषः परिहर्तव्य इति चेन्न, $यत "आत्मकृतेः परिणामादि" त्यागामिसूत्रादेवात्रापि दर्शने औपाधिकपरिणाम एव सिद्धान्तः, विवर्तप्रतिज्ञायां सूत्राभावाच्च। किं च$ विकाराभ्युपगमदशायामेव प्रकृतेरेव विकारित्वं नात्मन इति सकलश्रुतिस्मृतिष्ववगम्यत इति। तथा च गीता—

न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः।
न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते॥ इति।

स्वीयो भावः पदार्थ उपाधिरित्यर्थः। [1]उपाध्युपाधिमतोश्चानादिः स्वस्वामिभाव इति। यदि चात्र सूत्रे ब्रह्मणः साक्षात् प्रकृतित्वमेवार्थ इष्यते तर्ह्यत्र प्रकृतित्वमधिष्ठानकारणत्वं, यदि वा मूलविकारित्वमेवात्र प्रकृतित्वं तर्हि आकाशादिरूपं तावद् ब्रह्मणः प्रकृतिरूपत्वमेवात्रार्थोऽस्तु, शक्तिशक्तिमदभेदात्। तदुक्तं विष्णुपुराणादिषु "स एव मूलप्रकृतिर्व्यक्तरूपी जगच्च स" इत्यादिरिति दिक्[1]॥

---

* अयं पाठ उ० ह० लि० पु० वर्तते।
अयं पा० २ पु० ना० इति मु० शा०।

ॐ अयं पाठ उ० ह० लि० पु० वर्तते।
अयं पा० २ पु० ना० इति मु० शा०।

$ अयं पाठ उ० ह० लि० पु० वर्तते।
अयं पा० २ पु० ना० इति मु० शा०।

[1] अयं पाठः उ० ह० लि० पु० वर्तते।
अयं पा० २ पु० ना० इति मु० शा०।

ईश्वरस्य उपाधिरूपा प्रकृतिरस्तीत्यत्र हेत्वन्तरमाह—

**अभिध्योपदेशाच्च ॥२४॥**

अभिध्या संकल्पः, तदुपदेशादपि परमात्मनः स्वभावः सिध्यति। ईश्वरस्य निरुपाधित्वे "बहुस्यामि" त्यादि संकल्पोपदेशानुपपत्तेरित्यर्थः। "आह च तन्मात्रमि" त्यादिसूत्रेषु ब्रह्मणश्चिन्मात्रस्वरूपताया वक्ष्यमाणत्वादिति भावः॥

ननु यदिदमानुमानिकं प्रधानमीश्वरोपाधिरपीत्युच्यते, किमिदं जीवस्येव विकारभावापन्नं शुद्धसत्त्वाख्यं सदीश्वरस्योपाधिर्भवति[1], किं वा साक्षादेवेति संशये निर्णयमाह—

**साक्षाच्चोभयाम्नानात् ॥२५॥**

तदानुमानिकं न केवलं प्रकृतिः, अपि तु साक्षादपि विकारभावानापन्नमेव नित्यशुद्धसत्त्वांशेन ईश्वरस्य प्रकृतिर्भवति, कुतः? उभयाम्नानात्। उत्तरसूत्रेण वक्ष्यमाणयोरुभयोः कारणकार्यभावापन्नयोः कृतिपरिणामयोस्तत्राम्नानादित्यर्थः॥

उभयाम्नानमेवाह—

**आत्मकृतेः परिणामात् ॥२६॥**

"तदात्मानं स्वयमकुरुते" ति श्रुत्या स्वकृतित एवेश्वरस्य सर्वपरिणामावगमादित्यर्थः। तथा चेश्वरस्य कार्योपाधित्वे तत्कृतितः समस्तपरिणामो नोपपद्येत, स्वोपाधेः पूर्वं स्वकृत्यभावेन उपाधिरूपपरिणामस्य स्वकृतिजन्यत्वासंभवात्। अत ईश्वरोपाधिर्नित्य एवेति॥

तस्यैवानुमानिकस्यापरं विशेषमाह—

**योनिश्च हि गीयते ॥२७॥**

तदानुमानिकमीश्वरस्य योनिरपि जीवाख्यगर्भाधानस्थानमपि अंशभेदेन भवति। हि यस्मात् तथा गीयते "यो योनिं योनिमधितिष्ठत्येक" इत्यादिश्रुतिभिः,

मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम्।
संभवः सर्वभूतानां ततो भवति भारत॥

इत्यादिस्मृतिभिश्चेत्यर्थः। *अजाप्रकरणस्थत्वात् योनिं योनिमिति वीप्सा अंशभेदेन बहुत्वमभिप्रेत्येति बोध्यम्, महद्ब्रह्मेति महतो ब्रह्मेत्यर्थस्तत्कारणत्वात्*। तदयं सिद्धान्तः—प्रकृतिर्नित्यशुद्धकेवलसत्त्वांशेन नित्यज्ञानेच्छादिमतीश्वरोपाधिः, सैव च प्रकृति[1]र्मलिनसत्त्वविशेषरूपैरंशान्तरै रजस्तमःसंभिन्नैः पुरुषसंयोगेन महत्तत्त्वरूपतः

---

* अयं पाठः २ पु० नास्तीति मु० शा०।

[1] अयमेव पाठ उ० इ० लि० पु० वर्तते।

'सत्त्वादिगुणावच्छेदेने'ति २ पु० पाठ इति मु० शा०।

परिणता सती जीवो य[1] (जीवीय) उपाधिर्भवति" कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः" इति श्रुतेः। ($ततोऽपि निकृष्टैरंशान्तरैः सर्वमन्यद् विकारजातमुत्पादयतीति$) विभाग इति ॥

## एतेन सर्वे व्याख्याता व्याख्याता ॥२८॥

एतेन प्रधानप्राणादीनां ब्रह्मशक्तित्वप्रतिपादनेनान्येऽप्यानुमानिकाः कालादृष्टादयो ब्रह्मशक्तितया व्याख्याता वेदितव्याः, न तु स्वतन्त्रं किमप्यन्यदस्ति। अतो न तत्कारणताप्रतिपादकश्रुतिरपि, ब्रह्मकारणतावाक्यानां विरोध इत्यर्थः। तत्र कालादिकारणवर्गेश्वरशक्तिताप्रतिपादकश्रुतिर्यथा श्वेताश्वतरे—कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यमि" ति कालादीनि प्रकृत्य "यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येक" इति। कालात्मयुक्तानि कालादीन्यात्मान्तानीत्यर्थः। तेषां चाधिष्ठेयत्ववचनाच्छक्तित्वं सिद्धम्। प्रलये च भूतादीनां परमा सूक्ष्मावस्था सत्त्वादिशब्दवाच्येति मन्तव्यम्।

तथा "तेनेशितं कर्म विवर्तते ह पृथ्व्यप्तेजोऽनिलखानि नित्यम् एतस्यवाणिम्न एतावान् न्यग्रोधस्तिष्ठति, रथान् रथयोगान् पथः सृजत" इत्यादिश्रुतयोऽपि कर्माणुजीवादिकारणतायामुदाहार्य्य शक्तित्वेन समाधेयाः। विवर्तते विकरोतीत्यर्थः।

अथवेदं सूत्रमेवं व्याख्येयम्—एतेन पादचतुष्टयकृतब्रह्मव्याख्यानेनान्येऽपि सर्वे वेदान्ता व्याख्याता वेदितव्याः, एभिरेव तर्कैस्तेषामपि निर्णेतुं शक्यत्वादित्यर्थः। व्याख्याता इत्यस्य द्विः पाठोऽध्यायसमाप्तिसूचनार्थः॥

जगज्जन्मादिहेतुत्वे द्वाराणीश्वरशक्तयः।<br>
आक्षेपोद्धारमुखतः पादेऽत्र प्रतिपादिताः॥

इति श्रीविज्ञानयतिविरचिते विज्ञानामृताख्यऋजुभाष्ये<br>
प्रथमाध्यायस्य चतुर्थः पादः।<br>
। समाप्तश्चाध्यायः।

---

[1] "जीवोयोपाधिर्भवति" इत्येकस्मिन् ह० लि० पु० पाठः।<br>
"जीवोपाधिर्भवति" इत्यन्यस्मिन् ह० लि० पु० पाठः।<br>
"जीवीय उपाधिर्भवति" इति पाठो भाति।

$ अयं पाठ उ० ह० लि० पु० वर्तते।<br>
अयं पा० २ पु० ना० इति मु० शा०।

## अथ द्वितीयाध्यायः

प्रथमाध्यायस्य चतुर्थपादेन ब्रह्मकारणतायां श्रुतिविरोधः परिहृतस्तन्मुखेन सृष्ट्याद्युपयोगिन्यो ब्रह्मशक्तयश्च विचारिताः। इदानीं तत्र स्मृतिविरोधः परिह्रियते—

**स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥१॥**

नन्वीश्वरकारणतायाः श्रुत्यर्थत्वे सति,

"आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥"

इत्यादिमन्वादिस्मृतीनाम् ईश्वरं प्रतिषेधन्त्यास्तर्कसंवलितायाः स्वतन्त्रप्रधानकारणतावादिन्याश्च कपिलस्मृतेरप्रामाण्यं प्रसज्येत। न च श्रुतिविरोधेन स्मृतेरप्रामाण्यमेवास्तु, श्रुतिस्मृतिविरोधे तु श्रुतिरेव बलीयसीति न्यायादिति वाच्यम् *"यन्मनुरवदत्तद् भेषजमि" ति श्रुत्या मनुविरोधस्यान्याय्यत्वात्* ।

सांख्यं योगं पाञ्चरात्रं वेदाः पाशुपतं तथा।
अतिमात्राण्येतानि हेतुभिर्न विरोधयेत् ॥

इत्यादिभ्यो योगियाज्ञवल्क्यादिवाक्येभ्यः सांख्यविरोधस्यापि वेदेष्वन्याय्यत्वाच्च। आधुनिकैरल्पप्रज्ञैः कपिलादिस्मृत्यनुसारेणैवातिगहनवेदानां मीमांस्यत्वौचित्याच्च। तथा चोक्तं भारते—

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।
बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरिष्यति ॥ इति।

तस्मादतिप्रामाणिकमनुसांख्यस्मृतिविरोधेन "ईक्षतेर्नाशब्दमि" त्यादितर्काणामाभासीकृतत्वाद् वेदान्तानामीश्वरकारणतापरत्वं नावधारयितुं शक्यत इति तमिमं पूर्वपक्षं गूढाभिसन्धिः प्रतिबन्दिमुखेन समाधत्ते नान्यस्मृत्यनवकाशदोषप्रसङ्गादिति। यदुक्तं तत्र, कपिलमन्वादिस्मृतेरीश्वरप्रतिषेधपराया अनुरोधे सेश्वरायाः पातञ्जलपाराशरादिस्मृतेर्निरवकाशत्वप्रसङ्गादित्यर्थः। तथा च तुल्यबलस्मृत्यन्तरविरोधेन कुण्ठिततया कपिलस्मृत्या वैयासिकस्तर्कगणो नाभासीकर्तुं शक्यते, प्रत्युत स्मृत्यन्तरानुग्रहेण श्रौतत्वेन व्यासोक्ततर्काणामेव बलवत्त्वम्। अतो यथोक्ततर्कैरीश्वरपरत्वेनावधारिता श्रुतिः स्मृतिं बाधिष्यत इति भावः। "ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैरि" ति भगवद्वाक्यात्तु कपिलस्मृतिवद् यथोक्ततर्कगणोऽप्यतिप्रामाणिक एवेत्यपि मन्तव्यम्।

---

* "तत्सर्वं भेषजम्" इति उ० ह० लि० पु० पाठः।
अयं पा० २ पु० ना० इति मु० ग्रा०।

इतश्चेश्वरप्रतिषेधांशे कपिलस्मृते ❀मूलानामनुपलब्धेः अप्रत्यक्षत्वात्❀ दुर्बलत्वमित्याह—

इतरेषां चानुपलब्धेः ॥२॥

सेश्वरादितरेषां चेश्वरनिषेधकानां शाखिनां कपिलस्मृतिमूलानामनुपलब्धेः अप्रत्यक्षत्वादित्यर्थः। तथा च प्रत्यक्षश्रुत्यनुग्रहेण पराशरादिस्मृतानां ब्रह्ममीमांसातर्काणां च कपिलस्मृतेरंशतो विषयापहारयोग्यतास्तीति भावः।

नन्वेवं कपिलस्मृतेः किमप्रामाण्यमेव तथा चोदाहृतवाक्यविरोधः, न, सावकाशत्वात्। पश्चान्निराकर्तव्यकुमीमांसकानामीश्वरप्रतिषेधस्याभ्युपगमवादेन कपिलस्मृत्युपपत्तेः। ईश्वरप्रतिषेधकुतर्का अपि पारक्या एव तुष्यतु दुर्जनन्यायेन प्रौढ्या सांख्यैरनूद्यन्त इति। किमर्थं पुनः कुमताभ्युपगमवादः सांख्ये कृतः ? उच्यते, यदि कश्चित् कुमीमांसक आपाततो वेदान्तानां कार्यब्रह्मपरत्वदर्शनान्नित्यं ब्रह्म नाभ्युपगच्छति नाभ्युपगच्छति च ब्रह्मविद्यायाः कार्यब्रह्मलोकातिरिक्तं फलं, तदा तस्येश्वरमनभ्युपगच्छतोऽपि कपिलोक्तविवेकख्यातेरेव मोक्षो भवतीति प्रतिपादयितुमिति। मनौ तु "आसीदिदं तमोभूतमप्रज्ञातमि" त्यादिवाक्येनेदंशब्दोक्तस्य जगतः स्वाप्रज्ञातत्वादिकमेवोच्यते न तु ईश्वराख्यस्तद (तद्) ज्ञातापि निषिध्यते। यतो द्वादशाध्याये ब्रह्मविष्णुहरादीन् प्रकृत्य "प्रशासितारं सर्वेषामणीयांसमणोरपि" इत्यादिना नित्येश्वरः प्रोक्त इति।

नन्वेवं सांख्यज्ञानमात्रस्यापि मोक्षे हेतुत्वे "तमेव विदित्वाऽतिमृत्युमेति" इत्यादिश्रुतिविरोधः स्यादिति चेन्न, तथाविधवाक्यानां प्रकृष्टसाधनपरत्वात्। अन्यथा "ईश्वरप्रणिधानाद् वे" त्यादिना पतञ्जल्याद्युक्तविकल्पस्यानुपपत्तेरिति। इदं च पूर्वसूत्रस्थादाद्यप्रसङ्गशब्दाल्लभ्यते। सांख्यस्मृतेर्यथोक्तावकाशाभावे हि पूर्वपक्षे प्रसङ्गशब्दो व्यर्थः स्यात्। यदि चाभ्युपगमवादेन बौद्धादिमतानुवादरता कपिलस्य नोच्यते, तदा—

पञ्चविंशोऽभिमन्येत नान्योऽस्ति परतो मम।
अन्योन्यत्रान्तरात्माऽस्ति यः सर्वमनुपश्यति॥
षड्विंशोऽहमिति प्राज्ञो गृह्यमाणोऽजरामरः।
केवलेन बलेनैव समतां यात्यसंशयम्॥
षड्विंशेन प्रबुद्धेन बध्यमानोऽप्यबुद्धिमान्।
एतन्नानात्वमित्युक्तं सांख्यश्रुतिनिदर्शनात्॥
चेतनेन समेतस्य पञ्चविंशतिकस्य ह।
एकत्वं वै भवत्यस्य यदा बुद्ध्या न बुध्यते॥

इति मोक्षधर्मे[1] सांख्यानां नित्येश्वरोपदेशो नोपपद्यते, नोपपद्यते च तदा—

❀ अयं पाठ उ० ह० लि० पु० नास्ति। तदेव सम्यक्।

[1] अ० ३१८ श्लो० ७३।

एवं षड्विंशकं प्राहुः शरीरमिह मानवाः।
सांख्यं संख्यात्मकत्वाच्च कपिलादिभिरुच्यते ॥

इति मात्स्यादिषु[1] कपिलस्यापि षड्विंशान्तर्गतेश्वराभ्युपगमवचनमिति।

एतेन परमार्थवादाभ्युपगमवादाभ्यां सेश्वरनिरीश्वरविभागप्रसिद्धिः सांख्यानां व्याख्याता। अथवा कापिलैकदेशस्याप्रामाण्यमस्तु। अत एव कौर्मे—

"यं न पश्यन्ति योगीन्द्राः सांख्या अपि महेश्वरम्।
अनादिनिधनं ब्रह्म सततं शरणं व्रज ॥"

इति ब्रह्मणे नारायणेनोपदिष्टमस्ति। नन्वे[2] (न त्वे) तावता विवक्षितेष्वंशान्तरेष्वपि सांख्याप्रामाण्यमिति।

आधुनिकास्तु पूर्वसूत्रेण प्रधानांशेऽपि सांख्यस्याप्रामाण्यं व्यवस्थाप्यानेन सूत्रेण महदादीनामपि श्रुतिष्वनुपलब्ध्या महदाद्यंशेऽपि सांख्याप्रामाण्यं व्याचक्षते, तच्च[3] (तन्न) प्रधानस्य श्रुतिस्मृत्यन्तरन्यायसिद्धतायाः स्थाने स्थाने प्रदर्शितत्वात्। तथा महत्तत्वेऽपि "महद्वच्चे" ति सूत्रे श्रुतेः प्रदर्शितत्वात्। किं च प्रधानादि-चतुर्विंशतितत्त्वान्येव श्रुतिभिर्ब्रह्मसूत्रैश्चोक्तानीति गीतायां स्मर्यते—

ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक्।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥
महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥
इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः।
एतत् क्षेत्रं समासेन सविकारमुदाहृतम् ॥ इति।

अतो ब्रह्मसूत्रे प्रधानादिनिराकरणमपसिद्धान्तत्वादुपेक्षणीयम्। सूत्रपदैः सूत्रात्मकैरधिक[4] इत्यर्थः।

इदानीं चतुर्विंशतितत्त्वेष्वेव यथायोग्यं श्रुतयः प्रदर्श्यन्ते

प्रश्नोपनिषदि च सुषुप्त्यवस्थां प्रकृत्य "एवं ह वै तत्सर्वं परे आत्मनि संप्रतिष्ठते पृथिवी च पृथिवीमात्रा चापश्चापोमात्रा च तेजश्च तेजोमात्रा च वायुश्च वायुमात्रा चाकाशश्चाकाशमात्रा चे" त्यनन्तरं विषयैः सह दशेन्द्रियाण्युक्त्वाह—"मनश्च मन्तव्यञ्च बुद्धिश्च बोद्धव्यं चाहङ्कारश्चाहंकर्तव्यं च चित्तञ्च चेतयितव्यं च प्राणश्च विधारयितव्यं चे" ति। अत्र प्रकृतिं विहाय त्रयोविंशतितत्त्वानि सांख्यसिद्धान्युक्तानि,

---

[1] अ० ४ श्लो० २८।

[2] 'न व तावता' इत्येकस्मिन् ह० लि० पु० पाठः।
'न वै तावता' इत्यन्यस्मिन् ह० लि० पु० पाठः। 'नत्वे' इति पाठो युक्त।

[3] 'तच्च' इत्येव पाठ उ० ह० लि० पु० अपि वर्तते 'तन्न' इत्येव पाठो युक्तः।

[4] 'अधिक' इत्येव पाठ उ० ह० लि० पु० वर्तते।

महत्तत्त्वस्यैव च बुद्धिचित्तरूपेण विभागो बोध्यः। अस्माच्च वाक्यादवान्तरविभागे वेदान्तिनामप्यन्तःकरणचतुष्टयमेव बोद्धव्यम्।

गर्भोपनिषदि च "अष्टौ प्रकृतयः षोडश विकाराः शरीर" इत्यनेन चतुर्विंशतितत्त्वानि शरीरे सन्तीत्युक्तम्। मैत्रेयो (य्यु) पनिषदि च प्रकृतेर्गुणत्रयं तद्वैषम्यात् सृष्टिः पुरुषाणां चिन्मात्रत्वं चोक्तं, यथा—"तमो वा इदमेकमासत तत्परे स्यात् तत्परेणेरितं विषमत्वं प्रयात्येतद् वै रजसो रूपं, तद्रजः खल्वीरितं विषमत्वं प्रयात्येतद्वै सत्त्वस्य रूपं तत्सत्त्वमेवेरितं रसः संप्रास्रवत् तन्सां[1] (तस्यां) शोऽयं यश्चेतामात्रः प्रतिपुरुषं क्षेत्रज्ञः संकल्पाध्यवसायलिङ्गः प्रजापतिस्तस्य प्रोक्ताः अग्र्यास्तनवो ब्रह्म रुद्रो विष्णुरिति। अथ यो ह खलु वास्य राजसो अंशोऽसौ वा व समीपं[2] (सयोऽयं) ब्रह्माऽथ यो ह खलु वास्य तमोंऽशोऽसौ वा व स योऽयं रुद्रः, अथ य यो ह खलु वास्य सात्त्विकोंऽशोऽसौ वा व स योऽयं विष्णुः, स वा एष एकस्त्रिधाभूतो अष्टधा एकादशधा द्वादशधाऽपरिमितधा वोद्भूतः उद्भूतत्वाद् भूतेषु चरति प्रविष्टः स भूतानामधिपतिर्बभूव इत्यसावात्माऽन्तर्बहिश्चान्तर्बहिश्च" ति।

चूलिकोपनिषदि च सांख्योक्तानां तत्त्वानां संख्या वेदान्तोक्ता[3] (ऽ) द्वैताविरोधेनैवोक्ता। यथा—

"विकारजननीं मायामष्टरूपामजां ध्रुवामि" त्यादिना प्रकृतिं परमात्मानं प्रकृत्य—

ध्यायते ऽध्यासिता तेन तन्यते प्रेरिता पुनः।<br>सूयते पुरुषार्थं च तेनैवाधिष्ठिता पुरा॥<br>गौरनादवती सा तु जनित्री भूतभाविनी।<br>असिताऽसितरक्ता च सर्वकामदुघा विभोः॥<br>पिबन्ते नामविषयमसंख्याताः कुमारकाः।<br>एकस्तु पिबते देवः स्वच्छन्देन वशानुगः॥<br>ध्यानक्रियाभ्यां भगवान् भुङ्क्तेऽसौ प्रथमं प्रभुः।<br>सर्वसाधारणी दोग्ध्री सृज्यमाना सुपञ्चभिः॥<br>पश्यन्त्यस्यां महात्मानं यद्वर्णं पिप्पलाशनम्।<br>उदासीनं ध्रुवं हंसं स्नातकाध्वर्यवो हि ये॥

इत्याद्यनन्तरमाह—

तं षड्विंशकमित्येके सप्तविंशं तथा परे।<br>पुरुषं निर्गुणं सांख्यमथर्वाणः शिरो विदुः॥

---

[1] यथामुद्रितमेकस्मिन् ह० लि० पु० पाठः।
'तस्यांशोऽयं' इत्यन्यस्मिन् ह० लि० पु० पाठः।

[2] 'सयोयं ब्रह्मा' इति उ० ह० लि०पु० पाठो युक्तो भाति।

[3] "वेदान्तोक्ताद्वैताविरोधेन" इत्येव उ० ह० लि० पु० पाठः।

चतुर्विंशतिसंख्याकमव्यक्तं व्यक्तदर्शनम् ।
अद्वैतं द्वैतमित्येतत् त्रिधा तं पञ्चधा तथा ॥
ब्रह्माद्यं स्थावरान्तं च पश्यन्तो ज्ञानचक्षुषः ।
तमेकमेव पश्यन्ति परिशुद्धं विभुं द्विजा ॥
यस्मिन् सर्वमिदं प्रोतं ब्रह्म स्थावरजङ्गमम् ।
यस्मिन्नेव लयं याति बुद्बुदाः सागरे यथा ॥ इत्यादि ।

अत्र ईश्वरोपाधेर्जीवोपाधितो भेदविवक्षया वा कालमादाय वा सप्तविंशत्वं बोध्यम् । तदेवं सांख्योक्तार्थानां सर्वश्रुतिषु परिदृश्यमानानामदर्शनमज्ञाननिबन्धनमेवेति प्रतीमः ॥

## एतेन योगः प्रत्युक्तः ॥३॥

एतेनान्यस्मृत्यनवकाशदोषप्रसङ्गेन मूलभूतशाखानुपलब्ध्या च योगः पातञ्जलशास्त्रं $प्रपञ्चस्येश्वराकारणकत्वमात्रांशे श्रुतिविरुद्धे$ प्रकृतिस्वातन्त्र्यमात्रांशे प्रत्युक्तः प्रत्याख्यात इत्यर्थः । "निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत्" इति योगसूत्रेण हि परमेश्वरस्यापि प्रकृतिप्रवृत्तौ प्रतिबन्धनिवर्तकत्वमात्रं प्रोक्तं च श्रुतिविरुद्धम्, 'तम एवेदमग्र आसीत्तत्परेणेरितं विषमत्वं प्रयाती" त्युक्तश्रुत्यादिषु परमेश्वरस्य प्रकृतिप्रेरकत्वसिद्धेः । वैषम्यनैर्घृण्यादिकं त्वग्रे सूत्रकार एव निराकरिष्यतीति । *योगा हीश्वरस्य जगन्निमित्तत्वं प्रकृतित्वेनाभ्युपगच्छन्ति (निमित्तत्वप्रकृतित्वे नाभ्युपगच्छन्ति) ईश्वरोपाधेः सत्त्वविशेषस्य पूर्वसर्गीयतत्संकल्पवशात् सर्गादौ स्वतन्त्रप्रकृतित उत्पत्त्यङ्गीकारात्, प्रकृतेरीश्वरोपाधितायास्तैरप्यनङ्गीकारात् । तदिदं वेदान्तविरुद्धम्, "न तस्य कार्यं करणं च विद्यते स्वाभाविकी ज्ञानबलक्रिया चे" त्यादिश्रुतिभिरीश्वरस्य ज्ञानाद्युत्पत्त्यर्थं करणनिरपेक्षस्य प्राकृतिकनित्यज्ञानाद्यवगमात् । अत एव तदौपाधिकस्य जगदुपादानत्वस्य निषेधोऽपि तथेति ।

अत्राप्यभ्युपगमवादेन योगाप्रामाण्यप्रसङ्गः परिहर्तव्यः । अयं योगानां भावः—यदि कश्चिन्मन्येत कुमीमांसकः, प्रकृतेः परिणामस्वाभाव्येन ज्ञानेच्छादीनां करणजन्यत्वनियमेन च नित्यानि ज्ञानेच्छादीनि न संभवन्ति, "तमसैवेदमावृतमासीदि" त्यादिश्रुतिविरुद्धं च ज्ञानादिनित्यत्वमिति, तदपि भवत्वनित्यज्ञानादिमानेवेश्वरो नित्यः, भवतु च पुरुषार्थप्रयुक्तैव कर्मनिमित्ता सर्गादौ परमेश्वरोपाधिसत्त्वरूपेण प्रकृतेः परिणतिः । ततश्च प्रकृतेरेवोपादानत्वं नेश्वरस्य तथापि अस्मदभिप्रेतेऽविकारख्यातीश्वर प्रणिधाने (विवेकख्यातीश्वरप्रणिधाने) संभवत एव, प्रत्युत विवेकोऽनुकूलमेव (विवेकेऽनुकूलमेव) तन्मतमिति । तन्मतमालम्ब्य वास्माभिर्योगो युक्तः प्रतिपादयितुमिति ।

---

$ अयं पाठ उ० ह० लि० पु० नास्ति ।
अयं पा० २ पु० ना० इति मु० शा० ।

* 'इत आरभ्य'''अन्यथा नित्यज्ञानेच्छाद्यसंभवादि'त्यन्तं यावत् पाठ उ० ह० लि० पु० नास्ति ।
अयं पा० २ पु० नास्तीति मु० शा० ।

इदन्त्ववधेयम्—वेदान्तेऽपि शुद्धचिन्मात्रस्य ब्रह्मणः परिणामित्वाभावाद् ब्रह्मोपाधेरेव जगदुपादानत्वम् । योगे तु ईश्वरोपाधेः कार्यतया न निमित्तत्वं न वोपादानत्वमिति विशेषः ।

सन्निधानाद् यथाकाशकालाद्याः साधनं तरोः ।
तथैवापरिणामेन विश्वस्य भगवान् हरिः ॥

इत्यादिवाक्यानि च केवलचिन्मात्रब्रह्मविषयकाणि स्वतः परिणामप्रतिषेधकान्येवेति बोध्यम् । ईश्वरोपाधेरपि च प्रकृतेरस्माभिः स्वतोऽपरिणामित्वं सत्त्वादिगुणत्रयद्वारा विपरिणामश्चाभ्युपगम्यते, अन्यथा नित्यज्ञानेच्छाद्यसंभवात् ॥

इदानीं सांख्ययोगयोरभ्युपगमवादस्य मूलभूतं कुमीमांसकानामीश्वरे तदुपादानतायां च बाधकं वेदान्तेषु कुतर्कजातमपाकरोति पादसमाप्तिं यावत्—

न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥४॥

ननु न सांख्ययोगयोः प्रत्याख्यानं संभवति, चेतनकारणत्वस्य तर्कविरुद्धत्वात् । कुतः ? विलक्षणत्वादस्य । अस्य जगतोऽचेतनस्य चेतनब्रह्मविलक्षणत्वादित्यर्थः । सजातीयं ह्युपादानं दृष्टं लोके, घटादीनां चेच्छाकृत्यादिरूपाश्चेतनधर्मा बाधिताः । अतो बाधितमर्थं वेदोऽपि न बोधयतीति न्यायेन वेदान्तानां ब्रह्मोपादानतायां तात्पर्यं न संभवतीत्याशयः । विलक्षणत्वे श्रुतिमपि च प्रमाणमाह—तथात्वं च शब्दादिति । "विज्ञानं चाविज्ञानं चे" त्यादिश्रुत्या क्रियतां सृज्यानां चेतनविलक्षणत्वं सिध्यतीत्यर्थः ॥

ननु सर्वेषामेव सृज्यानां चेतनत्वमपि श्रूयते "मृदब्रवीत्, आपोऽब्रुवन्, तत्तेज ऐक्षत, ते ह प्राणाः वाचमूचुस्त्वं न उद्गाये" त्यादिना । तथा च न वैलक्षण्यमित्याशङ्क्याह—

अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥५॥

यथोक्तश्रुतिषु मृदाद्यभिमानिनीनां देवतानामेव चेतनानां वदनादिव्यपदेशा न मृदादीनाम्, कुतः ? विशेषानुगतिभ्याम् । "विज्ञानं चे" त्यादिना विकारेषु चेतनाचेतनरूपविशेषश्रवणात् । तथा "अग्निर्वाग् भूत्वा मुखं प्राविशदि" त्यादिना भूतेन्द्रियादौ देवताचेतनानामनुगतेः प्रवेशस्य श्रवणाच्च । वाग्भूत्वेति भवनं च प्रवेशेनाविभागः "तदनुप्रविश्य सच्च त्यच्चाभवदि" ति श्रुत्यनुसारात् । स च प्रवेशो न भेदं विना संभवतीति भावः ॥

सूत्रद्वयेन पर्यवसिते पूर्वपक्षे सिद्धान्तमाह—

दृश्यते तु ॥६॥

तु शब्दः पूर्वपक्षव्यवच्छेदार्थः । कारणविलक्षणमपि कार्यं दृश्यते, यथा चेतनाज्जीवादचेतनाः श्मश्रुश्वासादयः चेतनाच्चोर्णनाभादेर्जडास्तन्त्वादयः पदार्था इति । न च तत्रापि प्राणोर्णनाभदेहोपाधिकमेवोपादानत्वं चेतनस्येति वाच्यम्, अस्माभिरप्यौपाधिक्या एव ब्रह्मोपादनतायाः प्रसाध्यत्वेन तावताप्यस्मदभीष्टसिद्धेः ॥

नन्वेवं कार्यस्य कारणविलक्षणत्वाभ्युपगमे सत्यसन्नभावोऽपि सतो जगतः कारणं सम्भवतीति कथं "कथमसतः सज्जायेते" त्यादिश्रुत्युक्ता सम्भवानुपपत्तिरित्याशङ्कां समाधत्ते—

असदिति चेन्न प्रतिषेधमात्रत्वात् ॥७॥

असत् कारणं स्यादिति चेन्न, असतः प्रतिषेधमात्रत्वात् अभावमात्रत्वात् । अभावाद् भावोत्पत्तिर्हि न क्वापि दृष्टा, चेतनाच्चाचेतनोत्पत्तिर्दृश्यते इत्युक्तमतो नासतः कारणत्वं कल्पनार्हमिति ॥

पूर्वपक्षी पुनः प्रत्यवतिष्ठते—

अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥८॥

ननु एवं सति सत्कारणमप्यसमञ्जसं, यथा ह्यभावात् भावोत्पत्तिर्न सम्भवति तथा सतः सदुत्पत्तिरपि, कुतः? अपीतौ प्रलयेऽपि तद्वत्प्रसङ्गात्, कारणसत्त्वे कारणवत् कार्याणां वर्तमानत्वप्रसङ्गात्[1], कारणसत्त्वे कार्यविलम्बासंभवादित्यर्थः । दृष्टान्ताभावसाम्याच्चेति भावः ॥

सिद्धान्तमाह—

न तु दृष्टान्तभावात् ॥९॥

यदुक्तं तत्तु न, कुतः? दृष्टान्तभावात् । सतः सदुत्पत्तौ मृद्घटादेर्दृष्टान्तस्य सत्त्वादित्यर्थः ॥

उक्तं च प्रसङ्गप्रतिबन्दिमुखेन समाधत्ते—

स्वपक्षदोषाच्च ॥१०॥

असत्कारणतावादिमतेऽप्यसतः कारणत्वेन कार्यस्याप्ययकाले सत्त्वप्रसङ्गाच्च नोक्तप्रसङ्गोऽस्मासूद्भाव्य इत्यर्थः । तथा च सद् वाऽसद् वा कारणं सहकार्यन्तरमपेक्षत इत्युभाभ्यामभ्युपेयम् । अतो नापीतौ कार्यप्रसङ्ग इति भावः ॥

न चैवमपि क्षित्यादिकमकर्तृकं शरीराजन्यत्वादित्यादीश्वरप्रतिषेधकस्तर्कोऽस्तीत्याशङ्कायामाह—

तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॥११॥

किं च तर्काप्रतिष्ठानादपि केवलतर्केण विलक्षणत्वादिना वेदान्तार्थोऽन्यथयितुं न शक्यते, केवलतर्काणामप्रतिष्ठितत्वात्, निर्मूलत्वेन श्रुत्यपेक्षया दुर्बलत्वात् । ननु तर्कबलेन वेदान्ततात्पर्यमेवान्यथानुमेयमिति चेन्न, एवं सति यथाश्रुतशब्दमर्यादां परित्यज्य स्वतन्त्रतर्कबलेनार्थान्तरकल्पने सत्यनिर्मोक्ष एव स्यादित्यर्थः । तर्काणामानन्त्येनार्थनिर्णयासंभवाच्छ्रुत्यर्थानुष्ठानासंभवेन कस्यापि मुक्तिर्न स्यादिति ॥

---

[1] ईदृश एव पाठ उ० ह० लि० पु० वर्तते ।

'अर्थक्रियाकारित्वस्यैव सत्त्वादित्यर्थ' इत्यधिकं पुस्तकान्तरे इति मु० शा० टिप्पणी ।

*जैमिनिमतं प्रविष्टेष्वा (ष्व) धुनोपलभ्यमानेषु दुर्मीमांसकेषूपन्यस्तं बाधकं नास्तिकेष्वप्यतिदिशति*—

## एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥१२॥

$शिष्टैर्न परिगृह्यन्त इति शिष्टापरिग्रहाः$ ।

एतेन दुर्मीमांसकानां तर्काप्रतिष्ठादोषेण शिष्टापरिग्रहा बौद्धादयोऽपि स्वस्वमतव्यवस्थापनेषु व्याख्याताः प्रत्याख्याता वेदितव्या इत्यर्थः ॥

ननु मा भवतु स्वतन्त्रतर्केण वेदान्तानां ब्रह्मकारणतापरत्वे विरोधो दुर्बलत्वात्, वेदान्तानुसारितर्केण तु विरोधः स्यादेवेति तथाविधतर्कविरोधमपि परिहरति—

## भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् ॥१३॥

‡ननु परमेश्वरस्य जगत्कारणश्रुत्यर्थत्वे "बहुस्यां प्रजायेय, रूपं रूपं प्रतिरूपो बभूव, स एव इह प्रविष्ट आनखाग्रेभ्य" इत्यादिश्रुतिभिर्जगत्कारणस्यैव जीवभावश्रवणेन‡ [1]सुखदुःखभोक्तृजीवरूपतापत्त्या जीवेश्वरयोर्भोगाभोगविभागः • "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीती" त्यादिश्रुत्युक्तो नोपपद्येतेति चेत्, लोकवत् स्यात्। लोकवदयं विभागः स्यादित्यर्थः। यथा लोके पितृप्रकृतिके पुत्रे पित्रात्मकत्वे सत्यपि गर्भवासादिभोगः पुत्रस्यैव न पितुरित्येवं विभाग उपपद्यते, तथैव परमेश्वरजीवयोरपि स्यादिति। एवं समुद्रमत्स्यपृथिव्यौषध्यादयोऽपि दृष्टान्ता बोध्याः। तर्हि किम् अस्मदादिवदेवेश्वरस्य स्रष्टृत्वं ? न, सृष्टाववान्तरविशेषात्। ईश्वरो हि स्वांशस्वशरीरांशतुल्यौ जीवतदुपाधी स्वान्तर्गतौ धर्मादिसहितौ साक्षादेव पश्यन्नपरतन्त्रः स्वलीलया संयोगविशेषं ब्रह्मादीनामपि दुर्विभाव्यं कुर्वन् कुम्भकार इव घटमस्माभिरिव च मुद्राविशेषं जीवान्निर्मिमीते। इतरे तु ब्रह्माद्या अस्वतन्त्रा ईश्वरदत्तकामादिप्रेरिता दारुयन्त्रवत्तानधिष्ठाय तस्मिन्नेव सृजति सति स्वतन्त्राः सृजन्तीति मूढैर्लक्ष्यन्त इति महान् विशेष

---

* अयं पाठ उ० ह० लि० पु० वर्तते।
"प्रविष्टेष्वधुनो" इति पाठ उ० ह० लि० पु० वर्तमानो युक्तः।
अयं पाठः २ पु० नास्तीति इति मु० शा०।

$ अयं पाठ उ० ह० लि० पु० वर्तते।
अयं पा० २ पु० नास्तीति इति मु० शा०।

‡ अयं पाठ उ० ह० लि० पु० वर्तते।
अयं पा० २ पु० नास्तीति इति मु० शा०।

[1] "ननु प्रकृतेः कार्याकारता वेदान्तेष्वप्यनुमता, तथा च ब्रह्मणो जगत्प्रकृतित्वे तस्यैव जीवान् प्रति कारणत्वेन" इति पाठः १ पु० दृश्यते इति मु० शा० टिप्पणी।
ननु प्रकृतेः इत्यादि पाठः उ० ह० लि० पु० ऽपि नास्ति।

इति। §अत्राभिमानपूर्वकसुखादिसाक्षात्काररूपो यो मुख्यभोगः पातञ्जलोक्तः स ईश्वरे प्रसञ्जितः सुखमात्रानुभवस्येश्वरे प्रसाधितत्वादिति। यत्तु—

एभिर्भूतानि भूतात्मा महाभूतैर्महाभुजः।
ससर्जोच्चावचान्याद्यः [1]स्वपा(मा) त्रात्मप्रसिद्धये ॥
एवं सृष्टानि भूतानि प्रविष्टः पञ्चधातुभिः।
एकधा दशधात्मानं विभजन्तु[2] (जंस्तु) स ते गुणान् ॥
गुणैर्गुणाद् संभुञ्जान आत्मप्रद्योतितैर्विभुः।
मन्यमान इदं सृष्टमात्मानमिह सज्जते ॥
कर्माणि कर्मभिः कुर्वन् स निमित्तानि देहभृत्।
तत्तत्कर्मफलं गृह्णन् भ्रमतीह सुखेतरम् ॥

इत्येवंविधवाक्यैर्जगदीश्वरस्यैव दुःखभोगादिकमुक्तं तत् अंशरूपेणैव न साक्षादिति। मात्रा अंश, एकं दश चेन्द्रियाणि, गुणान् विषयान्, गुणैरिन्द्रियैरित्यर्थः§ ॥

ननु न दृष्टान्तसाम्यं, लोके हि पितर्यविभक्ता एव पुत्रजीवाः सन्ति, कर्मादिवशात्तु पितृतोऽभिव्यक्तमात्रा भवन्ति न पुनः पितैव साक्षात् पुत्रो भवति। "आत्मा वै जायते पुत्र" इत्यादिवाक्यानि तु लोकव्यवहारानुसाराण्य[3](रीण्य) भिव्यक्तिमात्रपराणि। ईश्वरसृष्टौ तु नैवं वक्तुं शक्यते प्रलये ब्रह्मातिरिक्ताभावस्य श्रुतिसिद्धत्वादित्याशङ्कां दृष्टान्तसाम्योपपादनेनापाकरोति—

## तदनन्यत्वमारम्भणशब्दादिभ्यः ॥१४॥

तस्य भोक्तुः *सोपकरणस्य* प्रकृतब्रह्मानन्यत्व[4] (त्वं) कारणे ब्रह्मणि नदीनां समुद्र इवाविभाग इति यावत्, स एव मन्तव्यो, न तु भोक्तुरत्यन्तं ब्रह्मत्वं प्रलयादावभावो वा, कुतः एतदवगम्यते ? आरम्भणशब्दादिभ्यः आरम्भणश्रुत्यादिभ्य इत्यर्थः। आरम्भणश्रुतिस्तावत् "तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा" इति। अस्यां श्रुतौ पूर्वसर्गीयविद्याकर्मप्रज्ञानां जीवारम्भकत्वश्रवणात् प्रलयेऽपि ब्रह्माभेदेन जीवस्य सत्त्वं सिध्यति। ब्रह्मणः कर्माद्यसंभवात् प्रलये जीवविनाशे [5]न तं पूर्वप्रज्ञा समन्वारभत

§ अयं पाठ उ० ह० लि० पु० वर्तते।
अयं पाठ २ पु० नास्तीति मु० शा०।
[1] 'स्वपात्रा' इत्येकस्मिन् 'स्वमात्रा' इत्यन्यस्मिन् ह० लि० पु० पाठः।
[2] "विभजंतुधते गुणान्" इत्येकस्मिन् ह० लि० पु० पाठः।
"त्रिभजन्तु यत्ते गुणान्" इत्यन्यस्मिन् ह० लि० पु० पाठः।
[3] 'नुसागुण्यभिव्यक्ति' इत्येवोभयत्र ह० लि० पु० पाठः।
* अयं पाठ उ० ह० लि० पु० वर्तते।
अयं पा० २ पु० नास्ति, परन्त्वत्र 'अनन्यत्वमिति' पा० १ पु० इति मु०शा० टि०।
[4] 'अनन्यत्वं' इति पाठ उ० ह० लि० पु० वर्तते।
[5] 'व तं' इत्युभयत्र ह० लि० पु० पाठो वर्तते किन्तु 'न तं' इत्येव पाठः सम्यक्।

इत्यस्यानुपपत्तिः। तच्च प्रलये जीवावस्थानं ब्रह्माविभागेनैव संभवति। स्वतन्त्रावस्थाने "सदेव सोम्येदमग्र आसीदि" त्याद्यद्वैतश्रुतीनामादिशब्दगृहीतानामनुपपत्तेरिति। अतो न दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमिति भावः। आदिशब्दग्राह्याश्च श्रुत्यादयः। तत्र श्रुतयस्तावत् "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं, सति सम्पद्य न विदुः सति संपद्यामह इति, त इह व्याघ्रो वा सिंहो वा वृको वा यद्यद् भवन्ति तदाभवन्ती" त्याद्याः, शतशः स्मृतयश्च

क्षि[१]ति(ज)लपरमाणवोऽनिलान्ते, पुनरपि यान्ति यथैकतां धरित्र्या।
सुरपशुमनुजादयस्तथान्ते गुणकलुषेण सनातनेन तेन॥

इत्याद्याः। युक्तयश्च कृतहान्यकृताभ्यागमाद्या इति। एतैः प्रमाणैः कारणे ब्रह्मणि जीवानामविभागेनावस्थानं सिध्यति। ततश्च सर्गकाले जीवाः पितुरिव पुत्रा विभक्ता भवन्ति "यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमेवास्मादात्मनः सर्व एवात्मानो व्युच्चरन्ती" त्यादिश्रुतेः "आत्मा वै जायते पुत्रः" इत्यादिश्रुतिवदेवेति साधूक्तं लोकवदिति। यथा च प्रलये सूक्ष्मरूपेण ब्रह्मचिन्मात्रे विलीय जीवादीनामवस्थानेऽपि नाद्वैतहानिस्तथोक्तं समन्वयसूत्रे।

आधुनिकास्तु इदं सूत्रमेवं व्याचक्षते लोकवदिति पूर्वसूत्रे यत् समाधानं कृतं तदापाततः, परमार्थसमाधानं त्वनेन सूत्रेण क्रियते। अस्य सूत्रस्यायमर्थः—ईश्वरस्य भोक्तृत्वं यज्जीवतापत्त्या प्रसञ्जितं तत्र (तन्न) यतस्तदनन्यत्वं ब्रह्मणोऽनन्यत्वं सदैवाद्वितीयत्वम्। द्वितीये सत्येव भोग्यभोगादिकं संभवति न त्वाकाशवदखण्डचिन्मात्रे सजातीयविजातीयस्वगतभेदशून्ये जीवेश्वरादिभावशून्य इति। अनन्यत्वे प्रमाणमाह—आरम्भणशब्दादिभ्य इति। "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं, नेह नानास्ति किञ्चने" त्यादिश्रुतिभ्यो ब्रह्मातिरिक्तानां भोगादीनामभावसिद्धेरिति। तन्न, (*तथाहि प्रपञ्चस्यात्यन्तमभावे यत् प्रमाणमारम्भणशब्दादिकं तत् सन्नवा, आद्ये बाधो अन्त्ये हेत्वसिद्धिः। तस्मात् सदसत्त्वविकल्पपराहतैरारम्भणशब्दादिभिः प्रमाणैः प्रपञ्चस्यात्यन्तमभावो न सूत्रकारेणानुन्मत्तेन साधयितुं युज्यते। यदि प्रपञ्चस्य व्यावहारिकसत्तां स्वीकृत्य ब्रह्मणि समानसत्तया द्वैताभावः सूत्रार्थो वर्ण्यते तदापसिद्धान्तः। अस्माकमपि लयशून्यत्वरूपसत्तायाः प्रलये ब्रह्मण्येव सत्त्वात्। किं तु (तु सूत्रस्यार्थः, सोऽपि न घटते, तदनन्यत्वे हेत्वन्तरतया*) "भावे चोपलब्धेः, सत्त्वाच्चावरस्ये" त्यादिभिरव्यवहितसूत्रैः प्रलये सर्वकार्याणां सूक्ष्मरूपेण सत्त्वस्यैव प्रतिपाद्यत्वात्, वाचारम्भणादिवाक्यैरपि विकारमात्रस्यैव मिथ्यात्वलाभाच्च, न तु सूक्ष्मस्य प्रकृतिपुरुषादेर्ब्रह्मशक्तेरपीति।

---

१ 'तल' इति 'ऽनिलान्ते' इति समानः पाठ उ० ह० लि० पु० वर्तते, स चासम्यक्।

* अयं पाठ उ० ह० लि० पु० वर्तते।

'किं तु सूत्रस्यार्थ' इत्येव पाठ उ० ह० लि० पु० वर्तते, सोऽपि संगत एव।

अयं पाठ २ पु० ना० इति मु० शा०।

किं च भवद्भिरपि प्रलये अविद्याभ्युपगमेन विजातीयभेदोऽभ्युपगत एव, आचार्यैश्च कर्मानादित्वं वक्ष्यते, तत्कथम् $सदेव सोम्येत्यादिवाक्यैर्ब्रह्मातिरिक्तस्य प्रतिषेध इति$। अतो ऽनन्यत्वशब्दस्याविभाग एवार्थो न तु ब्रह्मातिरिक्तस्यात्यन्तमभाव इति। अपि च भोगस्य मिथ्यात्वेऽपि मिथ्याभोगस्यैव जीवे प्रतीयमानस्य व्यवहारदशायामेवेश्वरे द्वा सुपर्णावाक्येन प्रतिषेधः क्रियते। प्रलयरूपपरमार्थपरत्वे जीवस्यापि भोगाभावेन जीवो भुङ्क्ते परमेश्वरो न भुङ्क्ते इति वचनासामञ्जस्यात्। न च मिथ्याजीवस्य मिथ्याभोगो न तु पारमार्थिकस्येति विभागः श्रुत्यर्थः स्यादिति वाच्यम्, जीवस्य मिथ्यात्वे मोक्षाद्यनुपपत्तेः। अतो विकारमिथ्यात्वेनापि भोगाभोगविभागवाक्यं नोपपादयितुं शक्यत इति।

किं च, अस्य सूत्रस्य प्रपञ्चमिथ्यात्वपरत्वे वाचारम्भणशब्दादिभ्य इत्येवाचार्यैः स्पष्टो हेतुरुच्येत न त्वारम्भणशब्दादिभ्य इति। अस्मदुपदर्शितवाक्यस्यैवारम्भणवाक्यत्वावगमात्र हि वाचेत्युपयुक्तांशं विहायानुपयुक्तस्य विपरीतार्थप्रत्यायकस्य केवलस्यारम्भणशब्दस्य प्रयोगो युज्यत इति। हेत्वन्तरपरत्वे चास्य सूत्रस्य समुच्चयबोधकचकारशब्दाद्यभावेन न्यूनतापि स्यादिति। रज्जुसर्पव्यावृत्तमस्माभिरपि विकारभावस्यानृतत्वमिष्यत एव, अतो न वाचारम्भणवाक्यानुपपत्तिः।

तर्हि किं विकारमिथ्यात्वमाचार्यैर्न सूत्रितमेव? कथं न सूत्रितम् "असद्व्यपदेशादिति चेन्न धर्मान्तरेण वाक्यशेषादि" त्यागामिसूत्रेण स्पष्टं वक्ष्यमाणत्वात्। तथापि ब्रह्माद्वैतस्यासूत्रणात् सूत्रकारस्य न्यूनता स्यादिति चेन्न, "तथान्यप्रतिषेधात्, सर्वाभेदादन्यत्रेमे" इत्यादिसूत्रैः सूत्रणीयत्वात् *अनेनापि सूत्रेण प्रलयाद्वैतस्योक्तत्वाच्चेति*।

यच्चोक्तं "नेह नानास्ति किंचन, एकधैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवं नान्यदतोऽस्ति द्रष्टृ" इत्येवंविधवाक्यशतेभ्यः कारणमपि सूक्ष्मं ब्रह्मातिरिक्तं नास्तीति, तत्र ओमिति ब्रूमः, ‡लयशून्यत्वरूपपारमार्थिकसत्ताया ब्रह्मभिन्नेष्वभावात्‡ शक्तिशक्तिमदभेदस्य नित्यत्वाच्च। प्रलये च तथाविधवाक्यैर्विभागाख्यविकारिभावमिथ्यात्वबोधकश्रुतिस्मृत्येकवाक्यतयाऽविभागलक्षणाद्वैतमात्रस्य प्रतिपादनात्।

एकैवाहं जगत्यत्र द्वितीया का ममापरा।
पश्यैता दुष्ट मय्येव विशन्त्यो मद्विभूतयः॥
ततः समस्तास्ता देव्यो ब्रह्माणीप्रमुखा लयम्।
तस्या देव्याः स्तनौ जग्मुरेकैवासीत्तदाम्बिका॥ इति स्मृतिवत्[1]।

---

$ अयं पाठ उ० ह० लि० पु० नास्ति। अयं पा० २ पु० ना० इति मु० शा०।
* अयं पाठ उ० ह० लि० पु० वर्तते।
अयं पा० २ पु० नास्ति इति मु० शा०।
‡ अयं पाठ उ० ह० लि० पु० वर्तते। अयं पा० २ पु० ना० इति मु० शा०।
[1] अयं पाठः उ० ह० लि० पु० वर्तते। अयं पा० २ पु० ना० इति मु० शा०।

तथा च स्पष्टा श्रुतिः "न तु तद्द्वितीयमस्ति ततोऽन्यद् विभक्तमि"ति, सूत्रं च "अविभागो वचनादि" ति। अन्यच्च न्यायादिकं पञ्चसूत्र्यां स्थाने स्थाने प्रदर्शितमस्माभिः[1] द्रष्टृत्वरूपफलोपधानस्य जीवेष्वनित्यतया वाचारम्भणमात्रत्वेन "नान्यदतोऽस्ति द्रष्टि" त्यादिवाक्यं जीवब्रह्मणोः स्वरूपभेदेऽप्युपपन्नमित्याद्यपि प्रागेव प्रपञ्चितं बाहुल्यभयात्तु नेह पुनः प्रपञ्च्यत इति। एतेन,

जगन्मोहात्मकं प्राहुरव्यक्तं व्यक्तदर्शनम्।
एकत्वं दर्शनं चास्य नानात्वं चाप्यदर्शनम्॥
तत्र निस्तत्त्वयोस्त्वेतत् पृथगेव निदर्शनम्।

इत्यादीन्यपि वाक्यानि व्याख्यातानि॥

इतश्च लोकवदेव ब्रह्माविभक्तं सञ्जीवजातं प्रलये तिष्ठति—

## भावे चोपलब्धेः ॥१५॥

भावः सत्ता, उपलब्धिरभिव्यक्तिः। सत एव हि कारणव्यापारादभिव्यक्तिर्भवति यथा पाषाणान्तर्गतप्रतिमायाः, नासतः शशशृङ्गादेरदर्शनात् प्रागसत्त्वाविशेषेण तन्तुभ्योऽपि घटोत्पादप्रसङ्गाच्चेत्यर्थः। अथ कारणगता कार्यविशेषजनिका शक्तिः कल्पनीयेति चेत्तर्हि शक्तिरूपनाममात्रभेदेन सूक्ष्मकार्यं सिद्धमेवेति। अत एव श्रुतिः "कथमसतः सज्जायेत, 'सदेव सोम्येदमग्र आसीदि" ति, स्मृतिश्च—"नासतो विद्यते भावो नाभावो विद्यतेसत" इत्यादिरित्यर्थः॥

न केवलं [2]कर्माद्युपकरणैः[2] सह जीवा एव प्रलये तिष्ठन्ति, अपि तु कार्यजातं सर्वमेवेत्याह—

## सत्त्वाच्चावरस्य ॥१६॥

अवरस्य चेतनाचेतनरूपकार्यजातस्य "सदेव सोम्येदमग्र आसीत्, अत्र वाव किल सत् सोम्य न निभालयसेऽत्रैव किल, तद्धेदं तर्ह्यव्याकृतमासीत् तमसैवेदमावृतमासीदि" त्यादिश्रुतिभिः प्रलये सत्त्वसिद्धेरित्यर्थः। न चेदमासीदित्यस्य एतदधिष्ठानकारणमेतदभिन्नं वासीदित्यर्थ इति वाच्यम्, लक्षणाया अन्याय्यत्वात् कार्यकारणभेदस्याविभागमात्ररूपत्वाच्च, अन्यस्य वक्तुमशक्यत्वात्। यत्तु पूर्वसूत्रे निराकृता आधु-

[1] दृष्टं चैतादृशमद्वैतं "ततः समस्तास्ता देव्यो ब्रह्माणी प्रमुखां लयम्।
तस्या देव्याः स्तनौ जग्मुरेकैवासीत्तदाम्बिके" त्यादौ। अयं पा० १ पु० नास्तीति मु० शा०।
'दृष्टत्वम्' इत्येकस्मिन् तथा 'द्रष्टृत्वम्' इत्यन्यस्मिन् ह० लि० पु० पाठः।
अयं पाठ उ० ह० लि० पु० नास्ति।

[2] अयं पाठ उ० ह० लि० पु० वर्तते।
अयं पा० २ पु० ना० इति मु० शा०।

निका आहुः—एताभ्यां सूत्राभ्यामुच्यमाना प्रलये कार्य(कारण)[1]सत्तामात्ररूपा न तु कारणे सूक्ष्मतयाऽवस्थानमिति, तदसत्, तथा सति एताभ्यां सूत्राभ्यां कारणसत्तामात्रस्य सिद्ध्यापत्त्या तद(न)[2]न्यत्वस्यासिद्ध्यापत्तेः।" तम एवेदमग्र आसीत् तत् तमः परे स्यादि" त्यादिश्रुतिषु,

प्रकृतौ संस्थितं व्यक्तमतोऽन्यत् प्रलये तु यत्।
तस्मात् प्राकृतसंक्षोभमुच्यते प्रेति सञ्चर॥

इत्यादिस्मृतिषु च प्रलयेऽपि कार्यकारणयोराधाराधेयभावेन स्वरूपभेदसिद्धेश्च। तथा च देहलीनसूक्ष्मपटवत् कार्याणामव्यक्तावस्थारूपेणावस्थानं सिद्धमिति।

असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥१७॥

ननु प्रलये कार्याणामसत्त्वम्, कुतः? असद्व्यपदेशात् "असद्वा इदमग्र आसीत्ततो वै सदजायते" ति चेन्न, धर्मान्तरेण व्यक्ता[3]वस्थाया (व्यक्तावस्थया) असद्व्यपदेशात्, न स्वरूपतः। कुतः? वाक्यशेषात्। "तत्सदासीत्तदात्मानं स्वयमकुरुते" त्यादिरूपादित्यर्थः। *तथा च योगभाष्ये व्यासवाक्यम्—तदेतत् त्रैलोक्यं व्यक्तेरपैति अपेतमप्यस्ति विनाशप्रतिषेधादिति* ॥

इतश्च व्यक्ताख्यविकाररूपेणैव कार्याणामसत्त्वम्—

युक्तेः शब्दान्तराच्च ॥१८॥

अवरं कार्यं विकाररूपेणैवासत्, कुतः? "[4]न यत् पुरस्तान्न च तत्परस्तान्मध्ये च तत्र (तन्न) व्यपदेशमात्रम्" इत्यादिशास्त्रस्य साहचर्यादियुक्तेः, शब्दा[5]न्तराच्च "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्, गुणानां परमं रूपं न दृष्टिपथमृच्छति। यत्तु दृष्टिपथं प्राप्तं तन्मायेति सुतुच्छकमि" त्यादिरूपादित्यर्थः। $ विकारजातं हि मध्ये पूर्वपूर्वरूपैरेव प्रतिक्षणमसदिति शास्त्रन्यायाभ्यां सिद्धमतो मध्यसाहचर्येण मध्यदृष्टेः तेन चादावपि व्यक्तत्वाख्यरूपभेदेनैवासदित्यनुमीयते।

---

[1] यथामुद्रितमेव पाठ उ० ह० लि पु० वर्तते।

[2] यथामुद्रितमेव पाठ उ०ह० लि० पु० वर्तते।
अयं पा० २ पु० ना० इति मु० शा०।

[3] 'व्यक्तावस्थया' इत्येव पाठ उ० ह० लि० पु० वर्तते।

* अयं पाठ उ० ह० लि० पु० वर्तते।
अयं पा० २ पु० ना० इति मु० शा०।

[4] 'न यत् पुरस्तान्मध्ये च तन्न' इत्येकस्मिन् ह० लि० पु० पाठः।
'न यत् पुरस्तान्न च यत्परस्तान्मध्ये च तन्न' इत्यन्यस्मिन् ह० लि० पु० पाठः।

[5] 'शब्दान्तराच्चेत्यारभ्य रूपादित्यर्थ' इत्यन्तः पाठ उ० ह० लि० पु० नास्ति।

$ अयं पाठ उ० ह० लि० पु० वर्तते।
अयं पाठः २ पु० नास्तीति मु० शा०।

घटोऽतीतो घटोऽनागतो घटो वर्तमान इत्यवस्थात्रयानुगमप्रत्ययान्यथानुपपत्तियुक्तेश्च। तथा शब्दान्तराच्च 'तद्धेदं तर्ह्यव्याकृतमासीत्" इत्यादिरूपात् व्याकृतरूपेणैव कार्यमसदित्यर्थः§।

इदं च सूत्रं सत्त्वे हेतुतयाऽपि योजनीयं यथा—युक्तेः,

असदकरणादुपादानग्रहणात् सर्वसंभवाभावात्।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम्॥

इति सांख्योक्तयुक्तेः।

"तमो वा इदमेकमास तत्परे स्यात् तत्परेणेरितं विषमत्वं प्रयाति"

आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः॥

इत्यादिश्रुतिस्मृतिरूपशब्दान्तराच्चावरस्य सत्त्वं सिद्धमित्यर्थः॥

ननु कारणावस्थायामपि चेत् कार्यमस्ति तदोपलभ्येत तत्राह—

पटवच्च ॥१९॥

तच्च कार्याणां सत्त्वमसत्त्वं वा पटदृष्टान्तेनापि मन्तव्यम्। यथा सूक्ष्मतरः पटो जले विलीयाव्यक्तरूपेण तिष्ठन्नोपलभ्यतेऽसन्निति च व्यवह्रियते, तथैवानागताद्यवस्थायां सकलकार्याणीत्यर्थः॥

यथा च प्राणादि ॥२०॥

यथा च प्राणेन्द्रियादिः शरीरविगमे लोकान्तरं गच्छन्नपि स्वव्यञ्जकस्थूलशरीराभावान्नोपलभ्यते, तथैव कार्याणीत्यर्थः। नन्वेवं कार्यं चेत् सदा तिष्ठति तदा कारणव्यापारेणाभिव्यक्तिः क्रियत इति कथमुपपद्यताम्, अभिव्यक्तेरपि कार्यतया नित्यत्वादिति चेन्न, [1]कार्याणां सदसत्त्वाभ्युपगमात्। तथा च व्यक्तावस्थाख्याभिव्यक्तिरप्यसन्त्यु[2] (त्यु) त्पद्यते। न चैतावता सत्कार्यवादहानिः सूक्ष्मावस्थाया एव असत्तारूपत्वात्, अभावानभ्युपगमादिति। तदेतदुक्तं पातञ्जलभाष्ये व्यासपादैः "एकान्तानभ्युपगमात्, तदेतत् त्रैलोक्यं व्यक्तेरपैति अपेतमप्यस्ति विनाशप्रतिषेधादिति। कापिलसूत्रे चोक्तं "सदसद्बाधाबाधाभ्यामि"ति। ध्वंसप्रागभावौ च कार्यस्य सूक्ष्मावस्थे एवेति।

अथैवमभिव्यक्तेरप्यभिव्यक्तिकल्पनेऽनवस्थेति चेत्, न, सांख्यसूत्रेण बीजाङ्कुरवदस्या अनवस्थाया अदोषत्ववचनात्। अन्यथा धर्मस्य धर्मस्तस्यापि धर्म इत्याद्यनवस्थाभिर्धर्मधर्मिभावोऽपि न सिध्येत्। अथवा अभिव्यक्तिः प्रागसत्येवोत्पद्यते इत्यभ्युपेयम्। न च तावता सत्कार्यसिद्धान्तक्षतिः, सत एवाभिव्यक्तिरित्येव नियमात्। अभि-

---

१ 'सर्वकार्याणां' इति पाठ उ० ह० लि० पु० वर्तते।

२ 'असंत्युत्पद्यंते' इत्युभयत्र ह० लि० पु० पाठः। 'असत्यु' इति पाठः साधुः।

व्यक्तेश्चाभिव्यक्त्यनभ्युपगमात् अनवस्थापत्तेः । तथा च सांख्यसूत्रान्तरम्—"उत्पत्तिवद् वाऽदोष इति । न चैवं घटादिरेव प्रागसन्नुत्पद्यताम् असदुत्पादस्याभिव्यक्तावावश्यकत्वादिति वाच्यम्, प्रागसत्त्वाविशेषेण शशशृङ्गादेरप्युत्पत्तिप्रसङ्गात् उपादानव्यवस्थाद्यनुपपत्तेश्च । तदनुपपत्तिद्वयपरिहाराय च भावरूपा घटादेरनागतावस्थैव लाघवात् कल्प्यतेऽपूर्वप्रागभावकल्पने गौरवात् । अभावस्य क्वाप्यसिद्धत्व त् । एवं च सति घटादेरनागतावस्थैवाभिव्यक्तेः प्रागभावस्थलाभिषिक्ता तस्या उत्पत्तावतिप्रसङ्गनिरासिका संभवति । अतोऽभिव्यक्तेः प्रागसत्ता न कल्प्येति सर्व (सर्वं) समञ्जसम् । "तद्धेदं तर्ह्यव्याकृतमासीदि" त्यादिश्रुतितोऽप्यनभिव्यक्ततयैव प्रपञ्चसत्ता प्राक्सिद्धेति ॥

एवं भोगाभोगविभागे सम्यगुपपादिते पुनस्तर्कान्तरेण विरोधं शङ्कते—

## इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥२१॥

ननु वेदान्तानां ब्रह्मकारणतापरत्वं न युक्तं यतः स्वहिताकरणं स्वाहितकरणं च दोषो ब्रह्मणि जगत्कारणत्वे प्रसज्यते, कुतः ? इतरव्यपदेशात् । ब्रह्मणा इतरजीवरूपताव्यपदेशात् "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि, त्वं स्त्री त्वं पुमानसि, स एव इह प्रविष्टः, अयमात्मा ब्रह्म" इत्यादिश्रुतिभ्यः । तथा च ब्रह्मणो 'निरवद्यं निरञ्जनमि' त्यादिवेदान्तसिद्धनिर्दोषत्वहानिः स्यादित्यर्थः ।

ननु पूर्वपूर्वेत्व[1] (व्व) धिकरणे प्र (पु) 'भेदव्यपदेशाच्चान्य' इत्यादिसूत्रपरम्पराभिर्जीवब्रह्मणोर्भेदः प्रतिपादितः, तत्कथं पुनरितरव्यपदेश उच्यत इति चेन्न, परप्रसञ्जितदोषानुवादमात्रत्वादस्य सूत्रस्य । परेषां च भेदसिद्धेः प्रागस्याः शङ्कायाः संभवादिति ॥

समाधत्ते—

## अधिकं तु भेदनिर्देशात् ॥२२॥

तुशब्दः परोक्तेतरताव्यवच्छेदार्थः । ब्रह्म नेतरः किन्तु इतरस्माज्जीवादधिकं, कुतः ? तयोरन्योन्यं भेदश्रुतेः "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीती" त्यादिवाक्यशतेष्वित्यर्थः । औपाधिकभेदवादिमते त्वौपाधिकमात्रभेदेनेदं सूत्रं सर्वथैवानुपपन्नम् ,उपाधिभेदेऽप्यात्मन एकत्वात् सर्वज्ञस्य स्वहिताकरणदोषतादवस्थ्यात् । न च वक्तव्यं परमार्थत आत्मनो हिताहितादिकं नास्त्येव स्वस्वदुःखादीनामन्तःकरणधर्मत्वात् विकारत्वेनानृतत्वाच्च, अतो न स्वहिताकरणादिदोष इति, उपाधिनिष्ठयोरेव व्यावहारिकयोः सुखदुःखयोर्भोग्यत्वेन जीवहिताहितयोरीश्वरे प्रसञ्जनसंभवात् । किं चैवं सति स्वहिताद्यभावादित्येव वक्तुं युज्यते किमित्यर्थान्तरमुच्यते अनेन सूत्रेण औपाधिको भेदोऽस्तीति , औपाधिकभेदस्य प्रकृतदोषपरिहारानुपयोगित्वात् ।

---

[1]यथामुद्रितं पाठ एकस्मिन् ह० लि० पु० वर्तते ।
'पूर्वपूर्वेष्वधिकरणे प्रभेदव्यपदेशात्' इत्यन्यस्मिन् ह० लि० पु० वर्तते ।

ॐअपि चास्तु जीवोपाधीनामेव हितादिकं न तु जीवानां तथापि स्वोपा-धेर्हिताकरणमपि दोषः प्रसज्यत एव। अथोपाधिविशिष्ट उपाधिगतप्रतिबिम्बो वा जीवाख्यो हितादिमानुत उभावपि ईश्वराद्भिन्नावेवेति चेन्न, एवमप्युपाधिभेदेन चेतन-बहुत्वस्यैवापत्तेरितिॐ। कि च परमार्थदशायां भवद्भिरीश्वरस्य स्रष्टृत्वमपि नाभ्यु-पगम्यते, तत्कथं परमार्थमवलम्ब्येश्वरस्रष्टृत्वोपपादनपरमिदं सूत्रमुपपाद्यतामित्यास्तां मृतमारणनिर्बन्धोऽस्माकमिति दिक्।

अभेदव्यपदेशवाक्यानि च पञ्चसूत्र्यामस्माभिर्व्याख्यातानि, आचार्यैस्तु "अविभागो वचनात्, अंशो नानाव्यपदेशात्, आत्मेति तूपयन्ति ग्राहयन्ति चे" त्यादिसूत्रैर्व्याख्यास्यन्ते। अनेन जीवेनेति वाक्यं च नाभेदबोधकं "शारीर आत्मा प्राज्ञेनात्मना अन्वारूढ" इत्यादिश्रुत्यैकवाक्यतया अश्वस्येव जीवचेतनस्य ब्रह्मप्रवेश-करणतामात्रप्रतिपादकत्वादिति।

ननु भेदवाक्यमेवाभेदवाक्येन बाधितुं युक्तम्, आत्मैक्ये लाघवादित्या-शङ्क्य ब्रह्मणो जीवत्वेऽनुपपत्तिमप्याह—

**अश्मादिवच्च तदनुपपत्तिः॥२३॥**

यथा हि ब्रह्मणोऽश्मादिरूपत्वं नोपपद्यते जडाजडत्वादिवैधर्म्यात्, एवं जीव-रूपत्वमपि नोपपद्यते सर्वज्ञत्वाज्ञत्वसंसारासंसारादिवैधर्म्यादित्यर्थः। अवच्छेदभेदादि-कल्पनया यथाकथञ्चिद् विरोधभञ्जनाभासस्तु अश्मादिरूपत्वेऽपि समानः। $अथवा अयमर्थः—अर्थप्रकाशनाभावरूपं जडत्वं प्रलयसुषुप्त्यादौ जीवेष्वपि अश्मादिवदस्ति "न बाह्यं किञ्चन वेद नान्तरमि" त्यादिसुषुप्त्यादिप्रकरणस्थश्रुतिस्मृतिभ्यः। ब्रह्म तु सदा सर्वावभासकमतोऽश्मादितुल्ये जडे जीवे तद्विलक्षणब्रह्मत्वानुपपत्तिरिति$। तथा च यथा "ब्रह्मैवेदं विश्वमि" मित्यादिवाक्यसत्त्वेपि ब्रह्मणो विश्वैकदेशाश्मारूपता[1] नेष्यते, तथाविधवाक्यजातं च कार्यकारणाविभागादिरूपेणाभेदेनोपपाद्यते, तथैव एक-पदोपात्तचेतनब्रह्मणो विश्वैकदेशान्तरजीवरूपतापि नेष्टव्या। तथाविधवाक्यजातं च जीवांशेऽपि पितापुत्रादिवत् कार्यकारणाविभागादिरूपेणाभेदेनोपपादनीयमन्यथा अर्ध-जरतीयन्यायप्रसङ्गात्। एवं च सति तदेकवाक्यतया अन्येऽपीतरव्यपदेशा उपपाद-नीया इति भावः।

इदानीं वेदान्तानां ब्रह्मकारणतापरत्वे तर्काप्रतिष्ठानदोषेण निराकृतानपि लौकि-कान् बाधकतर्कान् पुनः स्थूणानिखननन्यायेनापाकरोति पादसमाप्तिं यावत्—

---

ॐअयं पा० २ पु० ना० इति मु० शा०। अयं पा० उ० ह० लि० पु० वर्तते।
$अयं पा० उ० ह० लि० पु० वर्तते।
अयं पा० २ पु० ना० इति मु० शा०।
[1] 'जडरूपता नेष्यते' इति २ पु० पा० इति मु० शा०।
अयं पाठ उ० ह० लि० पु० नास्ति।

## उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥२४॥

ननु ब्रह्मकारणत्वं न संभवति लोके उपसंहारदर्शनात्। कुलालादीनां हि घटादिनिर्माणे स्वबाह्यानेकसाधनानां मृद्दण्डादीनामुपसंहारो ग्रहणं दृश्यते ब्रह्मणस्त्वद्वितीयतया स्वबाह्यकारणान्तरोपसंहारो न सम्भवतीति कथं तस्य कारणत्वं स्यादिति चेन्न, क्षीरवद्धि। हि यस्मात् क्षीरवदेवाद्वितीयं ब्रह्म बाह्यसाधननिरपेक्षमतः साधनोपसंहारेणैव कारणं भवतीत्यर्थः। यथानुगतजलतेजोवाय्वाकाशास्तेषां संयोगविशेषाश्च स्वकार्यार्थंक्षीरेणोपसंह्रियन्ते, यथा वा तैर्न क्षीरस्य द्वैतं, तथा स्वानुगतपुंप्रकृतिगुणादिव[1] (दिका) ब्रह्मणाऽप्युपसंह्रियन्ते तथैव च तैर्ब्रह्मणो न द्वैतं बाह्याभावस्यैवाद्वितीयशब्दार्थत्वादिति ॥

सजातीयं चेतनमपि दृष्टान्तमाह—

## देवादिवदपि लोके ॥२५॥

यथा देवाश्चतुर्मुखादयः अद्वितीया एव स्वाङ्गुष्ठादिभ्यो दक्षादिरूपेण परिणमन्ते तथैव ब्रह्मेत्यर्थः। अपि लोक इति—लोकेऽप्यूर्णनाभादयोऽद्वितीया एव बाह्यनैरपेक्षे (पेक्ष्ये) करणतन्त्वादिरूपेण परिणमन्त इत्यर्थः। अपिशब्दः समुच्चयार्थः सर्वपश्चाद् योजनीयः। देवादिवच्च लोके चेति पर्यवसितोऽर्थः ॥

ननु निरवयवस्य न क्षीरादिवत् परिणामः संभवतीति शङ्कते—

## कृत्स्नप्रसक्तिर्निरवयवशब्दकोपो वा ॥२६॥

ननु ब्रह्म चेत् परिणमेत तदा तत् किमंशभेदानवच्छिन्नमुतांशावच्छिन्नं परिणमते? आद्ये एकस्मिन्नेव कार्ये कृत्स्नतः परिणामप्रसक्त्या समकालीनानन्तकार्यानुपपत्तिः, अन्त्ये त्वंशाङ्गीकारात् "निष्कलं निष्क्रियं शान्तमि" त्यादिश्रुतेर्व्याकोप इत्यर्थः।

समाधत्ते—

## श्रुतेस्तु शब्दमूलत्वात् ॥२७॥

तुशब्दः पूर्वपक्षव्यवच्छेदार्थः। श्रुतिसत्त्वादयं तर्कविरोधो न दोषाय, तर्काप्रतिष्ठानस्योक्तत्वात्, कुतः पुनः श्रुतौ तर्कविरोधो न भवतीति तत्राह—शब्दमूलत्वादिति। वेदानां सर्वप्रमाणमूर्धन्यत्वादित्यर्थः ॥

युक्तिविरोधमपि व्यभिचारेण परिहरति—

## आत्मनि चैवं विचित्राश्च हि ॥२८॥

यस्मान्निरवयवे जीवेऽप्येवं स्वप्नावस्थायां विचित्राः परिणामाः "रथान् रथ-

---

[1] 'गुणादि ब्रह्मणाप्युपसंह्रियते' इत्येकवचनान्तपाठ उ० ह० लि० पु० वर्तते, स च सम्यक्।

योगान् पथः सृजत'' इत्यादिश्रुत्युक्ता अनुभूयन्त इत्यर्थः। तत्र यथा अंशभेदं विनापि न कृत्स्नप्रसक्तिरनेककार्याणामेकदा दर्शनात्तथैव ब्रह्मण्यपि स्यादिति भावः ॥

स्वपक्षदोषाच्च ॥२९॥

किं चायं कृत्स्नप्रसक्त्यादिदोषः प्रधानादिकारणतावादिपक्षेऽपि समानः, प्रधानाभावादीनां निरवयवत्वादित्यर्थः ॥

ननु श्रुत्यर्थत्वेऽप्यस्यार्थस्य युक्तिविरुद्धत्वान्मननानुपपत्तिः स्वप्ने चात्मनि विचित्रवासनापरिच्छिन्नमनोरूपैरवच्छेदभेदैरेव परिणामिनित्यत्रिगुणप्रधानस्याभावादेश्चानन्तव्यक्तिकतया परिणामानन्त्यं घटत इत्यादिशङ्कायां मूलसिद्धान्तमाह—

सर्वोपेता च तद्दर्शनात् ॥३०॥

वस्तुतो निरवयवत्वेऽप्यंशभेदसंभवान्न कृत्स्नप्रसक्तिः, यतः परा देवता सर्वशक्त्युपेता अतस्तैरेव प्रकृतिपुरुषाद्यैः शक्तिभिरवच्छिन्ना भागाः परदेवताया अंशा आकाशपरमाण्वादीनामिव गुहादिगादिभिरिति। श्रुत्या चारम्भकावयवा एव प्रतिषिध्यन्ते न पुनः शक्तिरूपा अप्यंशाः। ब्रह्मणः सर्वशक्तिमत्त्वे प्रमाणमाह— तद्दर्शनादिति। "ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्, प्रधानक्षेत्रज्ञपतिर्गुणेशः, यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येक'' इत्यादिना सर्वशक्तिमत्त्वश्रवणादित्यर्थः। तथा,

विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथा(ऽ)परा।<br>
अविद्याकर्मसंज्ञान्या तृतीया शक्तिरिष्यते ॥<br>
स ईश्वरो व्यष्टिसमष्टिरूपोऽव्यक्तस्वरूपः प्रकटस्वरूपः।<br>
सर्वेश्वरः सर्वविशेषवेत्ता समस्तशक्तिः परमेश्वरात्मा ॥

इत्यादिस्मरणाच्चेत्यपि बोध्यम् ॥

ननु संभवतु ब्रह्मणः सर्वशक्तित्वादंशभेदेन विविधकार्योपादानत्वं तथापि तासां करणत्वाभावाद् ब्रह्मणो जगत्कर्तृत्वं न संभवति। करणत्वमेव कथं न स्यादिति चेत्, "न तस्य कार्यं करणं च विद्यत'' इत्यादिश्रुतिभिः करणप्रतिषेधात् "स्वाभाविकी ज्ञानबलक्रिये''त्यनेन ज्ञानेच्छाकृतीनां नित्यत्वश्रवणाच्चेति गृहाण। न चैवं "मनसैव जगत्सृष्टिं संहारं च करोति य'' इति विष्णुपुराणादिवाक्येषु करणप्रतिपादनानुपपत्तिरिति वाच्यम्, तथाविधवाक्यानां विष्ण्वादिदेवतापरत्वेन ब्रह्मपरत्वाभावात् मनसः करणत्वाविवक्षणाद्वा जीवमनोद्वारेश्वरस्रष्टृत्वादिमात्रपरत्वादिति। एवं च सतीश्वरस्य कथं स्रष्टृत्वं स्यात्, कर्तृत्वस्य लोके करणव्याप्यत्वावधारणादित्याशङ्क्यापाकरोति—

विकरणत्वान्नेति चेत्तदुक्तम् ॥३१॥

करणशून्यत्वान्न ब्रह्म जगत्कर्त्रिति चेत्, तत्र उक्तं "श्रुतेस्तु शब्दमूलत्वादि'' ति। तथा चोक्ता व्याप्तिरप्रयोजिका। कर्तुः करणवत्त्वनियमे जन्यकृतिमत्त्वं चात्रो-

पाधिः, कृत्युत्पत्तावेव करणस्य कारणत्वेनापेक्षणात् न तु नित्यकृतिमत्त्वेऽपि। कृत्यादिनित्यत्वप्रतिपादनायैव ब्रह्मणः कार्यकरणप्रतिषेधादिति भावः॥

पुनः शङ्कते—

**न प्रयोजनवत्त्वात् ॥३२॥**

ब्रह्म न स्रष्टृ लोके स्रष्टुः प्रयोजनवत्त्वदर्शनात्, ब्रह्मणश्च पूर्णकामत्वात् प्रयोजनं नास्तीत्यर्थः॥

समाधत्ते—

**लोकवत्तु लीलाकैवल्यम् ॥३३॥**

यथा लोकानामानन्दविशेषजन्येषु क्रीडाविहारेष्वनपेक्ष्यैव प्रयोजनं केवललीलारूपा चेष्टा भवति। चेष्टावैजात्याच्चेष्टसाधनताज्ञानस्यानन्दविशेषस्य च चेष्टाकारणत्वे व्यभिचाराभावात्। तथैव परमेश्वरव्यापारस्यापि लीलाकैवल्यं लीलामात्रत्वमित्यर्थः। तथा च विष्णुपुराणम्—

व्यक्तं विष्णुस्तथाऽव्यक्तं पुरुषः काल एव च।
क्रीडतो बालकस्येव चेष्टां तस्य निशामय॥[1]

लीला क्रीडा व्यापारविशेष आनन्दविशेषन्यः श्वासप्रश्वासवदायासदुःखाद्यहेतुरिति। यदि च लौकिकक्रीडादावपि सूक्ष्मं किंचित् फलं कल्प्यते, तथापीश्वरस्य व्यापारे न प्रयोजनापेक्षा, चेष्टायां चरमकारणस्य कृतेर्नित्यत्वात्। चेष्टात्वं च कृतिसाक्षाज्जन्यक्रियात्वमतश्चेश्वरस्येन्द्रियाश्रयलक्षणमेव शरीरं नास्ति न तु चेष्टाश्रयरूपमपि,

नृप मूर्तान्यमूर्तानि यान्यत्रान्यत्र या[2](वा) क्वचित्।
सन्ति वै वस्तुजातानि तानि सर्वाणि तद्वपुः॥

इत्यादिवाक्यशतेभ्य इति स्मर्तव्यम्। पातञ्जलभाष्ये च व्यासदेवैर्भूतानुग्रह एवेश्वरस्य प्रयोजनमुक्तं सुखदुःखाभावयोरिव विशुद्धसत्त्वानां भक्तानुग्रहस्यापि स्वतः पुरुषार्थत्वं फलवत्त्वेन कल्पनीयमिति तदाशयः॥

नन्वेवमपीश्वरस्य स्रष्टृत्वे रागद्वेषाद्यापत्तिरित्याशङ्क्य समाधत्ते—

**वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथाहि दर्शयति ॥३४॥**

नापीश्वरस्य सुखदुःखिस्रष्टृत्वेन वैषम्यनैष्कारुण्ये प्रसज्येते, कुतः? सापेक्षत्वाद् धर्माधर्मरूपसहकारिसापेक्षत्वात्। तथा हि दर्शयति श्रुतिः "पुण्यो वै पुण्येन भवति पापः पापेने" ति। ननु "एष ह्येव साधु कर्म कारयती" त्यादिश्रुतेरिष्टानिष्टहेतु-

---

[1] अं० १ अ० अ० २ श्लो० १८।

[2] 'वा' इति पाठ उ० हृ० लि० पु० वर्तते।

कर्मकारयितृत्वेन वैषम्यनैर्घृण्यतादवस्थ्यमिति चेन्न, तत्रापि कर्मान्तरस्य निमित्तत्वात् बीजाङ्कुरवदनाद्यनवस्थायाः प्रकृते प्रामाणिकत्वेनादोषत्वात्। नन्वेवमीश्वरस्य कर्मसापेक्षत्वे स्वातन्त्र्यहानिरिति चेन्न, स्वकार्यतया स्वशक्तितया च कर्मणः स्वातन्त्र्याविघातकत्वात्, स्वतन्त्रस्यापि राज्ञः सेवापराधापेक्षया फलदातृत्वदर्शनाच्च। "स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानव" इत्यादिवाक्येभ्यः कर्मणामीश्वरसेवादिरूपतायाः सिद्धेः। नन्वीश्वरस्य प्रवृत्तिर्नित्येत्युक्तं तत्र कथं कर्मापेक्षेति चेन्न, नित्यया प्रवृत्त्या फले जनयितव्ये सहकारित्वेनैव कर्मापेक्षाया उक्तत्वात् न त्वात्मलाभ इति।

वस्तुतस्तु सापेक्षत्वशब्देनोपासाकर्मसापेक्षता प्रोक्ता, सा च भक्तवशतैव परमकरुणामयीति न वैषम्यादिशङ्केति। तथाहि ईश्वरः साक्षाद्धिरण्यगर्भमेव तत्कामानुरूपं भक्तवशतास्वाभाव्यात् सृजति।

*जगतामुपकाराय न सा कर्मनिमित्तजा।<br>
चेष्टा तस्याप्रमेयस्य व्यापिन्यव्याहतात्मिका॥

इति विष्णुपुराणादिभ्यः* हिरण्यगर्भस्य चास्मदादेरिव दुःखादिकं नास्त्येव। ऐश्वर्यनान्तरीयकदुःखलेशस्तु पूर्वभवे स्वयं स्वीकृतः। अन्यांस्तु दुःखिनो जीवान् हिरण्यगर्भ एव साक्षात् स्वभोगाय सृजति। ईश्वरस्तु भक्तियन्त्रितः संस्तत्रानुग्रहमात्रं करोति।

समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः।<br>
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्॥

इत्यादिस्मृतिभ्यः। अतो वैषम्यनैर्घृण्यादिकं हिरण्यगर्भस्यैव न परमेश्वरस्यापि, भक्तवशतानुगुण एवेश्वरस्य दोष इति सर्वसमञ्जसम्॥

## न कर्माविभागादिति चेन्नानादित्वात् ॥३५॥

नन्वीश्वरस्य कर्मसापेक्षत्वं न संभवति, यतः सर्गादौ कर्मैव नास्ति। कुतः? अविभागात् "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमि" त्यादिना ब्रह्मणि कर्मादीनामविभागस्य प्रलयस्य श्रवणादिति चेन्न, अनादित्वात् अविभागश्रवणादनादित्वस्यैव सिद्धेः नाभावस्येत्यर्थः। यदि[२] (यद्धि) सूक्ष्मरूपेण यत्र तिष्ठति तदेव तत्राविभक्तमेकतापन्नं लीनमित्युच्यते यथा समुद्रे सैन्धवखण्डः, न तु अभावरूपतां प्राप्तः। पाकेन दुग्धप्रक्षिप्तजलक्षये सति दुग्धजलयोरविभागव्यवहारस्य लोकेषु दर्शनात् 'लीङ्श्लेषण' इत्यनुशासनाच्च। तथा चाविभागलयादिशब्दव्युत्पत्त्यैव प्रलयेऽपि सूक्ष्मं कर्मादिकस्तीत्यवधार्यत इति। अनादित्वं चात्र स्वसजातीयानधिकरणकाल-

---

* अयं पाठ उ० ह० लि० पु० वर्तते।<br>
अयं पाठ २ पु० ना० इति मु० शा।

२ 'यदि' इत्येकस्मिन् 'यद्धि' इत्यन्यस्मिन् ह० लि० पु० पाठः।

वृत्तिप्रागभावाप्रतियोगित्वं बोध्यम्। तच्च कर्मप्रकृत्यादिसाधारणं घटादिभ्यश्च व्यावृत्तं घटजातीयानधिकरणे प्रलये घटप्रागभाववृत्तेरिति ॥

किं च—

उपपद्यते चाप्युपलभ्यते च ॥३६॥

कर्मादीनामनादित्वं युक्त्याऽप्युपपद्यते, अन्यथा कृतहान्यकृताभ्यागमादिप्रसङ्गेनानिर्मोक्षाद्यापत्तेः। तथा उपलभ्यते च श्रुतिस्मृतिभ्यः "तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च तमसा गूढमग्र" इत्यादिभ्य इत्यर्थः ॥

सर्वधर्मोपपत्तेश्च ॥ ३७ ॥

यथा वैषम्यनैर्घृण्यनिराकरणार्थमीश्वरापेक्षणीयं कर्म प्रलये उपपादितम्, एवमन्येषामपि विद्याविद्याभोगवासनादीनां जीवधर्माणामीश्वरेणापेक्षणीयानां प्रलये संभवाच्च न वैषम्यनैर्घृण्ये इत्यर्थः ॥

इतिब्रह्ममीमांसायां विज्ञानयतिविरचिते विज्ञानामृताख्यऋजुभाष्ये
द्वितीयाध्यायस्य प्रथमः पादः ।



## द्वितीयाध्याये द्वितीयःपादः

पूर्वपादेन ब्रह्मकारणतायां तर्कविरोधः परिहृतः। इदानीमनीश्वराणां स्वतन्त्र-प्रधानाण्वादिकारणवादिनां बौद्धप्रभेदानां मतानि ब्रह्मकारणतापरिपन्थितया अत्र पादे निराक्रियन्ते। ते च तर्कमात्रेण प्रत्यवतिष्ठमानास्तर्कमात्रेणैव प्रत्याख्येयाः, जगदाहुरनीश्वरमि" त्यादिवाक्यैरनीश्वरवादस्य नास्तिकपक्षतया तत्र श्रुतिविरोधस्य प्रदर्शयितुमशक्यत्वादिति। सांख्यादयस्त्वास्तिकाः नात्र प्रतिवादिनः, तैर्बौद्धगताभ्युपगमवादत एव स्वस्वप्रतिज्ञातानां वेदान्तार्थैकदेशानां प्रतिपादनादिति मन्तव्यम्। तथा पादान्ते केवलतर्कैरीश्वरसाधनं च निरसनीयम् 'अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेदि" त्यादिवाक्यप्रतिषिद्धत्वात्। अशक्यत्वं विपर्यासशङ्का चात्र प्रतिषेधे बीजमिति। तत्रादौ प्रधानस्वातन्त्र्यं स्वभाववादिबौद्धानां दूषयति –

### रचनानुपपत्तेश्च नानुमानम् ॥१॥

चशब्दस्त्वर्थे। पराभिमतप्रधानस्य स्वतन्त्रजगत्कारणस्यानुमानं तु न संभवति, कुतः ?, रचनानुपपत्तेः। प्रतिनियतदेशकालसंस्थानादिव्यवस्थितं विश्वनिर्माणं रचना, तस्याः केवलादचेतनादनुपपत्तेरित्यर्थः। मृतादूर्णनाभदेहात्तन्तूत्पत्तेरदर्शनादिति भावः॥

### प्रवृत्तेश्च ॥२॥

प्रवृत्तेः रचनानुकूलस्य प्रधानव्यापारस्याप्यनुपपत्तेः। लोके चेतनाधिष्ठानादेव प्रयत्नरूपादचेतनशरीरादेः क्रियोत्पत्तिदर्शनादित्यर्थः॥

### पयोऽम्बुवच्चेत्तत्रापि ॥३॥

ननु यथा पयः क्षीरं स्वयमेव प्रतिनियतावस्थं दधि रचयति वत्सविवृद्ध्यर्थं च स्वयमेव स्रवति, यथा च अम्बु प्रतिनियतावस्थं करकादिकं रचयति निम्नदेशं च स्वयमेव गच्छति, एवं प्रधानमपि स्यादिति चेत् —तत्रापीश्वराङ्गीकारं विना रचना-प्रवृत्त्योरनुपपत्तिरेव। तथा च पक्षसमत्वान्न तयोर्दृष्टान्ततेत्यर्थः॥

इदानीं ब्रह्मकारणत्वे परैरुक्तानि दूषणानि उपसंहारदर्शनान्नेत्यादीनि परेषां मते [एव भवन्ति, बलवत्तरश्रुतिप्रामाण्यानभ्युपगमेन लौकिकतर्का (र्क) विरोधादेव स्वतन्त्रस्य तर्कस्य स्वविषयसाधकत्वासंभवादि] त्याह[1] सूत्रैः—

### व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥४॥

---

[1] "परेषां मते समानानीत्याह सूत्रैः" एवं पाठ उ० ह० लि० पु० वर्तते। कोष्ठगतो भागस्तत्र नास्ति।

तवापि प्रधानव्यतिरेकेण कारणान्तरस्यानवस्थितेरनभ्युपगमाच्च। अनेककारणानपेक्षतया प्रधानस्य कारणत्वानुपपत्तिः, लोके बाह्यानेककारणोपसंहारेणैव मृदादीनां घटादिकारणत्वोपलम्भादित्यर्थः। ननु क्षीरवदिति भवदुक्तदृष्टान्तसत्त्वान्नैष दोष इति चेन्न, तर्हि अस्मन्मतदूषणोपन्यासानौचित्यात् क्षीरेणापि बाह्यादृष्टादिसहकार्युपसंहाराच्च ॥

ननु चेतनेष्वेव सहकार्यपेक्षा स्वतोऽविकारित्वात् नत्वचेतनकारणेष्वप्ययं नियमः, गोभिरुपभुक्तानां तृणादीनां स्वयमेव दुग्धादिरूपेण परिणामसंभवात् विकारिस्वाभाव्यात्, एवं क्षीरादीनामपीत्याशङ्कामपाकरोति—

## अन्यत्राभावाच्च न तृणादिवत् ॥५॥

यदुक्तं तृणादिवत् स्यादिति तत्र (तन्न) दृष्टान्तासिद्धेः, कुतः?, अन्यत्राभावात्। धेनूदरादिभ्योऽन्यत्र बलीवर्दाद्युदरे तृणादीनां दुग्धादिकारणत्वाभावादित्यर्थः। तथा च तृणादिष्वपि धेनूदरस्थाऽग्न्यादिरूपबाह्यनाना[1]करणापेक्षेति दृष्टान्तासिद्धिः ॥

नन्वस्माभिः प्रधानस्य बाह्याः सहकारिशक्तिभेदा अनेके[2]ऽभ्युपगन्तव्या इति न व्यतिरेकानवस्थितिस्तत्राह—

## अभ्युपगमेऽप्यर्थाभावात् ॥ ६ ॥

प्रधानव्यतिरिक्तकारणाभ्युपगमेऽपि प्रधानकारणता[3] न संभवति, कुतः? अर्थाभावात् *भवद्भिरस्मासूपन्यस्तात्* प्रयोजनाभावात् अचेतनस्य स्वप्रयोजनासंभवादित्यर्थः ॥

## पुरुषाश्मवच्चेत्तथापि ॥ ७ ॥

पुरुषाणां भोक्तृणामश्मादिवहनादौ यथोष्ट्रादेः परार्थैव प्रवृत्तिर्भवति, तथैव पुरुषार्थे प्रधानस्यापि प्रवृत्तिः स्यादिति चेत्, तथापि प्रकृतेः प्रवृत्तिरनुपपन्ना, दृष्टान्ते परार्थतावत् स्वार्थताया अपि दर्शनात्। अवहननिमित्तकताडनादिजन्यदुःखनिवृत्तेरेवोष्ट्राद्यर्थत्वादित्यर्थः। $यदि च नद्यादीनामिव केवलपरार्थैव प्रवृत्तिरिष्यते तदाऽस्मासु प्रवृत्त्यनुपपत्त्युपन्यासो नोचित इति भावः$ ॥

---

[1] 'बाह्यनानाकरणापेक्षे'त्येव उ० ह० लि० पु० पाठः।
'बाह्यानलाकरणापेक्षा' इति मु० पु० पाठोऽयुक्तः।

[2] 'अनेके' इत्येवोभय ह० लि० पु० पाठः। 'अनेका' इति मु०पु० पाठोऽसम्यक्।

[3] 'कारणता' इत्येवोभय ह०लि०पु०पाठः। 'कारणतया' इति मु०पु०पाठोऽयुक्तो भाति।

* अयं पाठ उ० ह० लि० पु० वर्तते।
अयं पाठ २ पु० ना० इति मु० शा०।

$ अयं पाठ उ० ह० लि० पु० वर्तते।
अयं पाठ २ पु० ना० इति मु० शा०।

किं च—

अङ्गित्वानुपपत्तेश्च ॥८॥

सत्त्वादिगुणत्रयमभ्युपगम्यापि तेषामङ्गाङ्गिभाव एव महदादिरूपविकारे कारणं वक्तव्यम्, तच्चाङ्गाङ्गित्वं यदि स्वत एव भवेत् सर्वदा सर्वकार्यप्रसङ्गः। परतश्चेत् सिद्धस्तर्हि तत्कर्ता परमेश्वर इति। अतोऽङ्गित्वानुपपत्त्यापि स्वतन्त्रप्रधानवादो न संभवतीत्यर्थः॥

ननु परतः पक्षे कालविशेष एव परो वक्तव्य इत्याशङ्क्याह—

अन्यथानुमितौ च ज्ञशक्तिवियोगात्॥९॥

अन्यथानुमितौ कालविशेषादिभ्य एवाङ्गित्वादिकं भवतीत्यनुमितावपि ज्ञशक्तिरूपसहकारिकारणाभावात् प्रधानकारणत्वमसंभवीत्यर्थः। ज्ञशक्तिर्ज्ञानेच्छाकृत्यादिः। एतेषां हि कार्यमात्रे कारणत्वेन क्लृप्तानां वियोगे केवलस्योपादानस्य कार्यकारित्वं तर्कविरुद्धमेवेति भावः॥

विप्रतिषेधाच्चासमञ्जसम्॥१०॥

*"असन्नेव स भवत्यसद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद् वेद सन्तमेनं ततो विदुरि" त्यादिश्रुतिभिर्निरीश्वरवादस्य निन्दितत्वादपि स्वतन्त्रप्रधानवादोऽसमञ्जस इत्यर्थः। यद्वा "स यस्तान् पुरुषान् निरुह्य प्रत्युह्यात्यक्रामत् तं त्वौपनिषदं पुरुषं पृच्छामि तं चेन्मे न विवक्ष्यसि मूर्धा ते विपतिष्यतीति, तदिह न मेने शाकल्यस्तस्य ह मूर्धा विपपाते" ति श्रुत्या परमेश्वरप्रतिषेधाद्धेतोरसमञ्जसमनर्थ उक्त इत्यर्थः। एवमेव* "जगदाहुरनीश्वरमपरस्परसंभूतं किमन्यत् कामहैतुकमि" ति गीतादिवाक्यैश्चासुरत्वादिना निरीश्वरस्वभाववादस्य प्रतिषिद्धत्वात् त्याज्यत्ववचनादपि तन्मतमसमञ्जसमनुत्तममिति।

कार्यकारणयोर्वैलक्षण्यादपीदं मतमसमञ्जसमिति दोषोऽपि समान इति दृष्टान्तेनाह—

महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्॥११॥

वाशब्दोऽत्राप्यर्थे। परिमण्डलः सर्वतो मण्डलाकारः परमाणुः। अयमर्थः—यथा ह्रस्वादल्पपरिमाणाद् द्व्यणुकादेर्महतां त्र्यणुकादीनामुत्पत्तिर्बौद्धप्रभेदानां स्वतन्त्राणुकारणवादिनामसमञ्जसा, यथा वा परिमण्डलात् परमाणोस्तदपेक्षया दीर्घस्य द्व्यणुकस्योत्पत्तिस्तेषामसमञ्जसा कारणगुणविपरीतस्य कार्यगुणस्य तर्कविरुद्धत्वात्, तथैव स्वतन्त्रप्रधानवादिनामपि वादोऽसमञ्जसो व्यक्ताव्यक्तपरिच्छिन्नापरिच्छिन्नत्ववैधर्म्यात् कार्यकारणयोरित्यर्थः।

---

* अयं पाठ उ० ह० लि० पु० वर्तते।

अयं पा० २ पु० ना० इति मु० शा०।

यथा च, कार्यकारणयोर्जडब्रह्मणोर्विरुद्धगुणकतया ब्रह्मपरिणामस्तर्कविरुद्ध इति चेन्नास्माकमपि ब्रह्मोपादानतायां तर्कविरोधो न[1] दूषणमिति "श्रुतेस्तु शब्दमूलत्वादि" त्यत्रोक्तं परेषां तु केवलतर्केण प्रत्यवतिष्ठमानानां तर्कविरोधः स्यादेव दूषणमिति। तथैव श्रुतिप्रामाण्यमभ्युपगच्छतोर्न्यायवैशेषिकयोः सांख्ये च यथोक्तकार्यकारणभाववादिमत्वेऽपि (मतेऽपि) नोक्तदूषणावकाशः "एतस्य वै सोम्यैषोऽणिम्न एतावान् न्यग्रोधस्तिष्ठति" ‡"यस्तन्तुनाभ इव तन्तुभिः प्रधानजैरि" त्यादिश्रुत्यनुसारित्वादिति मन्तव्यम् ‡। अणूनां च सत्त्वादिशब्दैः शास्त्रे प्रसिद्धानां प्रकृतिरूपेणेश्वरशक्तिविधयैव कारणत्वमिति न न्यायवैशेषिकयोर्वेदान्तविरोधाशङ्केति अनेन सूत्रेण दृष्टान्तमुद्रया स्वतन्त्राणुवादेऽपि बौद्धानां वैलक्षण्यदोषः समान इत्युक्तम्॥

दृष्टान्तविधयोत्थापितं स्वतन्त्राणुकारणतावादं तर्कान्तरविरोधेनापि प्रतिषेधति—

**उभयथापि न कर्मातस्तदभावः ॥१२॥**

उभयथापि प्रयत्नादभिघातादेश्च सर्गादौ परमाणूनां कर्म न संभवति, ईश्वरानङ्गीकारेण प्रयत्नाभावात् अनवस्थातश्चाभिघाताद्यसंभवात्, अतस्तदभावः [2]स्वतन्त्रपरिमण्डलाभावः[2] परमाणुस्वातन्त्र्याभाव इत्यर्थः।

आधुनिकास्तु पूर्वसूत्रेण वेदान्तिनां स्वपक्षस्थापनमिदं च सूत्रमारभ्य सूत्रजातैर्न्यायवैशेषिकमतनिराकरणमिति वर्णयन्ति। $सूत्रद्वयं चेत्थं व्याचक्षते—यथा ह्रस्वपरिमण्डलाभ्यां स्वविलक्षणयोर्महद्दीर्घयोरुत्पत्तिः परैरिष्यते, तथैव ब्रह्मचिन्मात्रादपि स्वविलक्षणजगदुत्पत्तिरस्त्वित्यादिसूत्रार्थः। प्रयत्नादभिघाताच्च लोकसिद्धकारणद्वयात् परमाणूनामाद्यं कर्म न संभवति, प्रयत्नहेतुमनःसंयोगाद्यभावात् अनवस्थया चाभिघातसंभवात्। अतस्तदभावो अणुकारणत्वाभाव इति द्वितीयसूत्रार्थ इति। तदसन्, समवायिकारणवैलक्षण्येऽपि कार्याणां तद्वैजात्यासिद्धेः न्यायवैशेषिकयोर्नित्यप्रयत्नाङ्गीकाराच्च$ [3]तद्ध्येयम्, सूत्रकारेणाणुवादिनं प्रत्युच्यमानानां दोषाणां वेदान्तिमतेऽपि तुल्यत्वाच्च। अथ श्रुतिस्मृतिसिद्धत्वाद् ब्रह्मकारणतायां तर्कविरोधो न दूषणमिति चेत्, "एतस्यैवाणिम्न एतावान्न्यग्रोधस्तिष्ठति, कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति, यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः, [अणोर्मात्रा विनाशिन्यो दशार्धानान्तु याः स्मृताः। ताभिः सार्धमिदं सर्वं संभवत्वनुपर्वणं"]

---

[1] 'न' इति पाठोऽयुक्तो भाति।

‡ अयं पाठ उ० ह० लि० पु० वर्तते।

[2] अयं पाठ उ० ह० लि० पु० वर्तते।

अयं पा० १ पु० ना० इति मु० शा०।

$ अयं पाठः उ० ह० लि० पु० वर्तते।

अयं पा० १ पु० ना० इति मु० शा०।

[3] "तद्ध्येयम्" इति पाठः उ० ह० लि० पु० नास्ति।

[ ] कोष्ठान्तर्गतः पाठ उ० ह० लि० पु० नास्ति।

इत्यादि श्रुति[1] स्मृतिभ्यां शक्तिविधया अणुकारणताया अपि सिद्धत्वेन तन्मतेऽपि तर्के (तर्क) विरोधस्य दूषणत्वादिति समानम्। ‡विनाशिन्योऽनाशिन्यः, दशार्धानां यवभूतानां, ताभिर्हेतुभिः सार्धं सहिताभिरिदं सर्वं ब्रह्माण्डादिकं क्रमेण भवतीत्यर्थः‡।

किं च स्वपक्षः पूर्वपाद एव व्यवस्थापितः, अतो "दृश्यते त्वि" ति हेतुना पौनरुक्त्यापत्तिः। तथा वाशब्दार्थानुपपत्तिः परपक्षनिराकरणमध्ये स्वपक्षस्थापनासामञ्जस्यं चेति॥

अत्रैव मते कारणेष्वणुषु कार्यस्य समवायोऽभ्युपगम्यते न वेति विकल्प्य द्वितीयं पक्षं "समुदायहेतुकेऽपि" इत्यादिसूत्रैर्निराकरिष्यति। आद्यपक्षस्त्वादौ निराक्रियते—

**समवायाभ्युपगमाच्च साम्यादनवस्थितेः॥१३॥**

इतश्च तदभावो, यदि कार्याणामणुषु समवायोऽभ्युपगम्यते तदा नैयायिकवैशेषिकेषु भवद्भिरुपन्यस्तया समवायपरम्परयाऽनवस्था, तस्यां भवत्स्वपि साम्यापत्तेरित्यर्थः।

किं च—

**नित्यमेव च भावात्॥१४॥**

अणूनां नित्यमेव सत्त्वाच्च तत्स्वातन्त्र्यासंभवः सर्वदा सृष्टिप्रसङ्गादित्यर्थः॥

ननु स्वमते न (स्वमतेन) समवायोऽस्ति न वेति काकदन्तान्वेषणवत् एतदन्वेषणे प्रयोजनाभावः। अस्तु वा सांख्यानुसारेण स्वरूपसम्बन्ध एवात्र समवायस्थलाभिषिक्तः समवाये तस्यावश्यकत्वादिति अणुनित्यत्वमप्ययुक्तमित्याह—

**रूपादिमत्त्वाच्च विपर्ययो दर्शनात्॥१५॥**

परमाणूनां रूपरसादिमत्त्वेन हेतुना घटादिवन्नित्यत्वविपर्ययो युक्तः, लोके तथा व्याप्तिदर्शनादित्यर्थः। तथा च कारणानित्यत्वे कार्यस्य प्रवाहरूपेणानादित्वं नोचितमिति। अस्माकं श्रुतिबलात् परमाणूनां रूपादिशून्यत्वेन न ह्य(य)थोक्तानुमानं संभवतीति भावः॥

ननु रूपादिमत्त्वमेव परमाणूनां न स्वीकार्यं, तत्राह—

**उभयथा च दोषात्॥१६॥**

रूपादिमत्त्वे यथोक्तदोषान्नीरूपादित्वे च कार्यस्यापि नीरूपादिताप्रसङ्गात् कार्यगतरूपादिनियामकतयैव परैः परमाणुषु रूपाद्यनुमानादित्यर्थः॥

**अपरिग्रहाच्चात्यन्तमनपेक्षा॥१७॥**

---

१ "इस्य.दिश्रुतिभिः" इति उ० ह० लि० पु० पाठः।

‡ एतच्चिह्नान्तर्गतः पाठ उ० ह० लि० पु० नास्ति।

स्वतन्त्रस्वभाववादोऽभ्युपगमवादत्वात् सांख्यैः स्वशास्त्रेषु यथाकथञ्चिदपेक्षणीयः, अणुस्वातन्त्र्यं च कुत्राप्यास्तिकशास्त्रेषु न परिगृह्यत इत्यतस्तत्रात्यन्तमनपेक्षा मन्तव्या मोक्षादावित्यर्थः । अतो यथाकथञ्चित् तर्कविरोधपरिहारेऽपि शिष्टापरिग्रहात् तन्मतमुपेक्षणीयमेवेति ॥

नन्वेवं मास्तु समवायो मास्तु च परमाणुनित्यत्वं, क्षणिकवादस्तु स्यात् पुञ्जोत्पत्त्यैव धारावाहिकरूपेण सृष्टिनित्यत्वसम्भवादिति तत्राह—

समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥१८॥

एवमेके बौद्धा मन्यन्ते—नास्त्यवयवी, नाप्यात्मा स्थिरः, किन्तु पुञ्जात्मके समुदाये बाह्याभ्यन्तरभेदेनानात्मात्मविभागोऽवयवित्वैकत्वादिभ्रमश्च भवति । स च पुञ्जात्मकः समुदायो नेश्वरहेतुकः, किं तु उभयहेतुकः । तत्र चतुर्विधाणुहेतुको बाह्यो घटादिः, रूपविज्ञानवेदनासंज्ञासंस्कारहेतुकश्च पञ्चस्कन्धाख्य आन्तर आत्माख्य इति । रूपं करचरणादिमत् संस्थानं, विज्ञानं ज्ञानमेव, वेदना दुःखं, संज्ञा देवदत्तादि, संस्कारो वासना, एतेषां राशिरेवात्मेति तेषां सिद्धान्तः ।

तत्रेदं दूषणमुच्यते—उभयहेतुकसमुदायमतेऽपि तदप्राप्तिः परस्परमेलनरूपसमुदायस्याप्राप्तिरसिद्धिः, मेलनकर्तृचेतनानङ्गीकारात्, लोके चेतनस्यैव तत्त्वादिमेलकत्वदर्शनादित्यर्थः ॥

इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥१९॥

प्रत्ययः कारणम् । नन्वण्वादीनां संयोगाख्यः समुदायोऽन्योन्यकारणकत्वादन्योन्यसाहाय्यादेव भविष्यतीति चेन्न, उत्पत्तिमात्रनिमित्तत्वात् उपदानतामात्रेऽण्वादीनां प्रयोजकत्वात्, न तु कर्तृत्वेऽपि, तेषामचेतनत्वेन कर्तृत्वासंभवात्, कर्ता च कार्यमात्रे कारणमित्यर्थः ॥

न वाऽण्वादीनां समुदायीभावरूपपुञ्जतायामपि हेतुत्वं सम्भवतीत्याह—

उत्तरोत्पादे च पूर्वनिरोधात् ॥२०॥

कार्ये हभूतमेवोदानकारणं पटादौ दृश्यते, न च क्षणिकवादिनां तत्सम्भवति, उत्तरस्य कार्यस्य समुदायीभावादेरुत्पत्तिकाले पूर्वस्य कारणस्य समुदाय्यादेर्विनाशादित्यर्थः ।

अथैवमसत्युपादाने कार्योत्पत्तिरस्तु नानुपमृद्य प्रादुर्भावादिति तत्राह—

असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥२१॥

असत्येव हेतौ फलोत्पत्त्यङ्गीकारे सति उभयहेतुकत्वप्रतिज्ञाया उपरोधो बाधः, अन्यथा यदि सत्येव कारणे कार्योत्पत्तिरुच्यते तदा क्षणिकवादिनां कारणकार्ययोर्यौगपद्यमेव स्यात् न पौर्वापर्यम् । तथा च कार्यकारणव्यवस्था नोपपद्यते नियामकाभावा-

दित्यर्थः । ननु उपादानस्यापि पूर्वसत्त्वैवाभ्युपगन्तव्येति सहभावाभावेऽपि न क्षतिरिति चेन्न, निमित्तकारणोपादानयोरविशेषापत्तेरिति ॥

असत्कारणपक्षे दूषणान्तरमाह—

प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥२२॥

कारणासत्त्वेऽपि कार्योत्पत्त्यङ्गीकारे भवदभ्युपगतयोः प्रतिसंख्याऽप्रतिसंख्या-निरोधयोरप्राप्तिरसिद्धिः स्यात् , कुतः ?, अविच्छेदात् । असतः कारणात् कार्योपत्त्या सदैव कार्योत्पादेन कार्यपरम्पराया विच्छेदासंभवादित्यर्थः । एवं हि तेषामभ्युपगमः—वक्ष्यमाणत्रयादन्यत् सर्वं बुद्धिबोध्यं क्षणिकं च । त्रयं च प्रतिसंख्यानिरोधो अप्रति-संख्यानिरोध आकाशं चेति । एतत् त्रयमपि वस्त्वभावमात्रं निरूपाख्यम् । तत्र प्रतिसंख्यानिरोधो बुद्धिपूर्वकः आत्यन्तिकः प्रलयः, स च विदुषाम् । तद्विपरीतश्चा-प्रतिसंख्यानिरोधः प्राकृतप्रलयादिः, स चाविदुषाम् । आकाशस्त्वावरणाभावमात्रमिति । तत्र कार्याणामविच्छेदे सति निरोधद्वयं नोपपद्येतेति ॥

नन्वेवं यथोक्तनिरोधावपि नाङ्गीकार्यावस्माभिरिति, तत्राह—

उभयथा च दोषात् ॥२३॥

निरोधद्वयानङ्गीकारे च मरणभयादुद्विग्नान् शिष्यान् प्रति भवतां मोक्षार्थ-कोपदेशस्य वैयर्थ्यदोषापत्तेः, मरणमोक्षरूपयोर्यथोक्तनिरोधयोरनङ्गीकारात् तदङ्गी-कारे चासंभवस्योक्तत्वात् इति ॥ किं च—

आकाशे चाविशेषात् ॥२४॥

न केवलं निरोधयोरेवासिद्धिरपि त्वाकाशेऽप्यसिद्धिः स्यात् , कुतः ?, अविशे-षात् , कार्याविच्छेदरूपस्य हेतोरविशेषादित्यर्थः । आकस्मिककायः सर्वदा सर्वत्राव-रणप्रसङ्गादिति भावः ॥

इतश्च नासद्रूपे कारणे कार्यमुत्पद्यते—

अनुस्मृतेश्च ॥२५॥

कार्यकारणयोरुभयोरपि प्रत्यभिज्ञाबलेन स्थिरतयाऽप्यसति कारणे कार्यस्या-सिद्धिः, अत्यन्तोच्छेदे स एवायमिति प्रत्ययासंभवादित्यर्थः । अस्माभिश्च प्रलय-मोक्षादीनामभावरूपत्वं नाभ्युपगम्यते, "नाशः कारणलयः" इत्यादिसांख्यसूत्रादिभिः कारणरूपेणावस्थानस्यैव नाशशब्दार्थत्ववचनादिति ॥

नासतोऽदृष्टत्वात् ॥२६॥

इतश्च अत्यन्ताभावरूपादसतः कार्योत्पत्तिर्न संभवति, शशशृङ्गादिभ्यः कार्या-दर्शनादित्यर्थः ॥

## उदासीनानामपि चैवं सिद्धिः ॥२७॥

किं च एवं सत्यभावाद् भावोत्पत्तौ कृष्यादिकर्माकुर्वतामपि तत्फलसिद्धिः स्यात्, अभावस्य सर्वत्र सर्वदा सुलभत्वादित्यर्थः ॥

यदपि वौद्धैः सर्वमेवासदुच्यते, तदपि नेत्याह—

## नाभाव उपलब्धेः ॥२८॥

अभावमात्रमत्यन्ततुच्छं जगन्न भवति, उपलब्धेः, भावत्वे ([1]अभावत्वे) शशशृङ्गादिवदनुपलब्धिप्रसङ्गादित्यर्थः । *भ्रमस्थले चास्मन्मते प्रकारतत्सम्बन्धौ मनःपरिणामभूतावनिर्वचनीयतया नाभावरूपौ । ननु भवन्मते कथं घटाभावस्योपलब्धिरिति चेन्न, अस्माभिरधिकरणाद्यतिरिक्तस्याभावस्यैवानङ्गीकारात् । वैशेषिकादिभिस्तु प्रतियोग्यधिकरणरूपसदुपरागेणैवाभावस्य ज्ञानमिष्यते न केवलस्य । वौद्धानां तु प्रतियोग्यादीनामप्यभावरूपत्वात् नाभावोपलब्धिर्घटते, केवलाभावप्रतीतेरदर्शनादिति भावः* । यदि चोपलब्ध्यर्थक्रियाकारित्वादिसत्त्वेऽप्यसत्त्वमुच्यते तदा परिभाषामात्रत्वेन तादृशमसत्त्वं भवतु, शशशृङ्गादिवैलक्षण्यस्यैवास्माभिरिष्टत्वात्, तावतैवश्वर्यधर्माधर्मौवासनाबन्धमोक्षादिव्यवस्थोपपत्तेरिति ॥

अनुस्मृतेश्चेत्यादिना क्षणिकशून्यवादौ निरस्येदानीं विज्ञानवादं निरस्यति ब्रह्मसाधककार्यकारणभावोपपत्तये—

## वैधर्म्याच्च न स्वप्नादिवत् ॥२९॥

सर्वं कार्यं कारणं च स्वप्नवद् विज्ञानमात्रं न भवति, कुतः?, वैधर्म्यात् । अर्थक्रियाकारित्वाबाधितत्वादिलक्षणवैधर्म्यादित्यर्थः । न च स्वप्नेऽप्यर्थक्रियास्तीति वाच्यम्, तस्या जागरे बाधात् । न च प्रपञ्चस्यापि श्रुत्या बाधोऽस्त्विति वाच्यम्, श्रुतौ प्रपञ्चस्यात्यन्ततुच्छत्वाप्रतिपादनस्योक्तत्वात्, "तत्तु समन्वयादि" त्यादिसूत्रेषु कार्यकारणभावादिप्रतिपादकश्रुतिविरोधात्, श्रवणोत्तरं मननादीनां विधेयत्वासंभवाच्च । न हि तुच्छतां प्रतिपाद्य तत्र विधिरुचित इति अधिकं तत्र तत्रोक्तम् । लौकिकप्रमाणेन सहाविरोधसंभवे श्रुत्या तद्बाधतानौचित्याच्चेति ।

एतेन वेदान्तेषु प्रपञ्चस्यात्यन्ततुच्छत्ववादोऽप्रामाणिक इति मन्तव्यम्, आचार्यः स्वप्नतुल्यतायाः प्रतिषेधात् ।

ननु तर्कमात्रावष्टम्भेनोत्तिष्ठतामेव मतं तर्केण निराक्रियते न पुनरत्र शास्त्रार्थोऽवधार्यते, तथा सति प्रधानाण्वादीनामपि पूर्वसूत्रैर्निषेधापत्तेरिति चेन्न, धर्माधर्मेश्वरादिव्यवस्थाविरोधिनां वौद्धमतानां निःशेषोन्मूलनस्याभिप्रेतत्वात् । प्रधानाण्वादीनां च

---

[1] 'अभावत्वे' इत्येव पाठ उ० ह० लि० पु० वर्तते ।

* अयं पाठ उ० ह० लि० पुस्तके वर्तते । "भ्रमस्थले" इति उ० ह० लि० पु० पाठः । 'भूमस्थले' इति मु० पु० पाठोऽयुक्तः ।, अयं पा० २ पु० ना० इति मु० शा० ।

स्वरूपतः सूत्रकारेण वक्तव्यतया शिष्टपरिगृहीततया धर्माधर्मेश्वरादिव्यवस्थोपयोगितया च 'स्वातन्त्र्य'[1]निराससमात्राभिप्रायावधारणात्। $"धाता यथापूर्वमकल्पयत्, कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधात् शाश्वतीभ्यः समाभ्यः" इत्यादिश्रुतिभिः प्रपञ्चस्य स्वप्नव्यावृत्तयाथार्थ्यसिद्धेश्चेति$। यत्र[2] (यच्च) शास्त्रेषु विकाराणां स्वप्नदृष्टान्तप्रदर्शनं तद्वैराग्यार्थक्षणभङ्गुरत्वादिपरं न पुनर्बाह्यविषयाभावपरम्। अन्यथा—

तस्मादसदभिध्यानं यथा स्वप्नमनोरथम्।
हित्वा मयि समाधत्स्व मनो मद्भावभावितः॥

इत्यादिवाक्येषु प्रपञ्चस्य स्वप्नतुल्यत्वज्ञानोत्तरं परमेश्वरे मनःसमाधानस्य विधानानुपपत्तेः, समाधानस्यापि स्वप्नवदवस्तुत्वावगमादिति बोध्यम्॥

यदपि तेषां मतं विनाऽप्यर्थभेदं ज्ञानवैचित्र्यं वासनावैचित्र्यादेव भवतीति तदपि नेत्याह—

## न भावोऽनुपलब्धेः॥३०॥

भावो वासना सापि न संभवति, उपलब्धिं विनेत्यर्थः। न च पूर्वपूर्वोपलब्धा उत्तरोत्तरवासनेति अनादिरेव प्रवाहोऽस्त्विति वाच्यम्, अप्रामाणिकानवस्थाप्रसङ्गात्। कर्माद्यनवस्था तु बीजाङ्कुरवत् श्रुत्यादिप्रमाणसिद्धैवेति भावः॥

## क्षणिकत्वाच्च॥३१॥

किं च, सर्ववस्तूनां क्षणिकत्वाद् वासनानामाश्रयोऽपि भवदुक्तो न संभवति, वासनाश्रयत्वेन कल्पितानामालयविज्ञानानां प्रवृत्तिविज्ञानवदेव क्षणिकत्वेन वासनाकाले तेषामसत्त्वादित्यर्थः॥

न चास्माकं केवलतार्किकाणां नियामकाभावाद् भवद्दूषितातिरिक्तं प्रक्रियान्तरं रचयिष्यामस्तत्राह—

## सर्वथानुपपत्तेश्च॥३२॥

किं च यथा यथा वैनाशिकसमयः परीक्ष्यते तथा तथा सिकताकूपवद् विदीर्यत एव। अतः सर्वथाऽनुपपत्तेर्वैनाशिकमतमसमञ्जसमित्यर्थः। सा च परीक्षापरम्परा न्यायदर्शनादिष्वनुसन्धेया। अत्र तु श्रवणशास्त्रे तर्कबाहुल्यानौचित्येन दिङ्मात्रं प्रदर्शितमिति भावः॥

## नैकस्मिन्नसंभवात्॥३३॥

---

[1] 'स्वातन्त्र्यानिरास' इति मु० पु० पाठोऽसम्यक्।

$ अयं पाठ उ० ह० लि० पु० वर्तते।

अयं पा० २ पु० ना० इति मु० ग्रा०।

[2] "यत्र" इत्येकस्मिन् 'यच्च' इत्यन्यस्मिन् ह० लि० पु० पाठः।

अपरे तु वेदवाह्या दिगम्बरा एकस्मिन्नेव पदार्थे भावाभावौ मन्यन्ते, तन्मतं निराक्रियते वेदान्तोक्तस्य सत्कार्यवादस्य ब्रह्मकारणतोपयोगिनः सिद्ध्यर्थम् । तत्रैवं ते कल्पयन्ति —

सामान्यतः सदसतौ (सन्तौ) द्वावेव पदार्थौ आकाशादयो धर्मिणः एकत्वादयश्च धर्माः अनयोरेव विशेषाः । तत्र सर्वेष्वेव पदार्थेषु सप्तभङ्गीन्यायेन सदसत्त्वमनिर्वचनीयत्वं चास्ति । तद् यथा—सर्वं वस्त्वव्यवस्थितमेव, स्यादस्ति, स्यान्नास्ति, स्यादस्ति वा नास्ति वा, स्यादवक्तव्यः, स्यादस्ति चावक्तव्यः, स्यान्नास्ति चावक्तव्यः, स्यादस्ति च नास्ति चावक्तव्यश्चेति । सर्वत्रैव स्याच्छब्दो भवतीत्यर्थकः । तथा च अस्तीति भवतीत्यादिरर्थ इति । अत्रेदमुच्यते—

न एकस्मिन् वस्तुनि यथोक्तभावाभावादिरूपत्वमपि, कुतः ? असंभवात् । प्रकारभेदं विना विरुद्धयोरेकदा सहावस्थानसंस्थानासंभवात्, प्रकारभेदाभ्युपगमे वास्मन्मतप्रवेशेन सर्वैव व्यवस्थास्ति कथमव्यवस्थितं जगदभ्युपगम्यते भवद्भिरित्यर्थः ॥

## एवं चात्माऽकार्त्स्न्यम् ॥३४॥

यथा चैकत्र सदसत्त्वादिकसम्भवति[2] (भवि), एवमेव दिगम्बराणामात्मकार्त्स्न्यमात्मपरिच्छिन्नत्वमप्यसम्भवीत्यर्थः । ते हि मन्यन्ते संसारदशायां परिच्छिन्न आत्मा मोक्षावस्थायां विभुर्भवतीति, तदेतद् विरोधादसम्भवतीति ॥

ननु विभुत्वाविभुत्वयोः कालभेदादविरोधः स्यादित्याशङ्कामपाकरोति—

## न च पर्यायादप्यविरोधो विकारादिभ्यः ॥३५॥

न च पर्यायात् क्रमात् कालभेदे वाप्यविरोधः संभवी, कुतः ? विकारादिभ्यः आत्मनो विकारित्वसावयवत्वादिभिर्मोक्षस्यानित्यत्वप्रसङ्गादित्यर्थः ॥

## अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥३६॥

यदि चान्त्यस्य मोक्षावस्थपरिमाणस्यावस्थितिरविनाशो भवद्भिः स्वसिद्धान्तमात्राभिनिवेशेनेष्यते, तदा उभयोरेव वादिप्रतिवादिनोरावयोरात्मनित्यत्वविभुत्वसिद्धेरुद्देश्यांशे मताविशेषः, किमर्थं पुनः संसारदशायां परिच्छिन्नत्वमुच्यते ? लाघवान्नित्यस्यैकपरिमाणस्य विभुत्वस्यैव कल्पनार्हत्वा[3] (त्व) सम्भवादिति । तदेवमनीश्वरवादिनस्तार्किका निराकृताः ॥

---

[1] "स्यादस्ति नास्ति च, स्यादस्ति चावक्तव्यः, स्यान्नास्ति चावक्तव्यः, स्यादस्ति च नास्ति चावक्तव्यश्चेति सर्वत्रैव" इत्येकस्मिन् ह० लि० पु० पाठः । अन्यस्मिंस्तु ह० लि० पु० पाठो न साधुः । मुद्रितपुस्तकपाठस्तु पूर्णोऽसमञ्जसः ।

[2] 'असंभवि' इति उ० ह०लि०पु० पाठः ।

[3] "कल्पनार्हत्वात् सहकारिनिमित्ततो ज्ञानस्य परिच्छिन्नदेशत्वसंभवादिति" उ० ह० लि० पु० पाठः ।

इदानीं केवलेनानुमानेनेश्वरसाधनमपाकरोति ब्रह्मण्युक्तस्य शास्त्रयोनित्वस्य सिद्ध्यर्थं तथा तर्कशास्त्रतो ब्रह्ममीमांसाया गतार्थत्वशङ्कामपनेतुं च—

पत्युरसामञ्जस्यात् ॥३७॥

नानुमानमस्तीत्याद्यसूत्रादनुवर्तते। यथा चासामञ्जस्याद् वैषम्यनैर्घृण्यापत्तेर्न पत्युरीश्वरस्यानुमानं संभवतीत्यर्थः। सांख्याद्युक्तेन विरोध्यनुमानेन सत्प्रतिपक्षितत्वादिति भावः॥

सम्बन्धानुपपत्तेश्च ॥३८॥

सम्बन्धो व्याप्तिः। कार्यत्वसकर्तृकत्वयोरनुकूलतर्काभावेन श्रुतिप्रवृत्तेः प्राग् व्याप्तिग्रहानुपपत्तेश्च नानुमानस्वातन्त्र्यमित्यर्थः॥

अधिष्ठानानुपपत्तेश्च ॥३९॥

करणं विना कर्तृत्वासंभवाच्चेत्यर्थः।

ब्रह्म करणवदेवैष्टव्यमित्याशङ्कायामाह—

करणवच्चेन्न भोगादिभ्यः ॥४०॥

ननु परमेश्वरस्यापि पातञ्जले विशुद्धसत्त्वाख्यं करणं स्वीकार्यं वेदान्तेऽपि च ब्रह्मणः करणं श्रूयते "चन्द्रमा मनसो जातश्चक्षोः सूर्योऽजायते" त्यादिभ्यः। अतस्तर्कतोऽपि करणवदेवास्तु इति चेन्न, ब्रह्म करणवन्न भवति, कुतः? भोगादिप्रसङ्गात्। जीववत् सुखदुःखादिभोगस्य रागद्वेषादेश्च प्रसङ्गादित्यर्थः। करणानां त्रिगुणात्मकत्वेन दुःखादिस्वाभाव्यादित्याशयः। अस्माकं तु केवलप्रकृतिसत्त्वस्यैवेश्वरोपाधित्वाङ्गीकारादीश्वरस्य दुःखाद्यभावः। नित्यानन्दस्तु श्रुतिप्रामाण्यादिच्छादिवत्, केवलप्रकृतेर्धर्म इत्युक्तं प्राक्। प्रकृतेश्च कर्तृत्वमेव न करणत्वम् आत्मनोऽकर्तृत्वेन कर्त्रन्तरासंभवात्। जीवकोटाविच्छादिवत् कर्तृत्वमपि बुद्धेरेव करणत्वं तु मनआदीनामिति। ज्ञाने तु बुद्धेः करणत्वं विषयसमर्पकत्वेनेति वक्ष्यामः। "न तस्य कार्यं करणं च विद्यते, कार्योपाधिरयं जीवः कारणोपाधिरीश्वर" इति श्रुतिविरोधस्तु "चन्द्रमा मनसो जात" इत्यादिश्रुतीनां हिरण्यगर्भरूपेण ब्रह्मोपासनायां तात्पर्यम्। पातञ्जले च सत्त्वस्य *चाभ्युपगमवाद [1]उपाधितामात्रवाद[1] इति भावः।

अन्तवत्त्वमसर्वज्ञता वा ॥४१॥

किं च करणाधीनज्ञानादिकत्वे सतीश्वरस्य जीववदेवान्तवत्त्वं विनाशित्वं

---

* "अभ्युपगमवाद" इति पाठ उ० ह० लि० पु० नास्ति।

[1] अयं पाठ उ० ह० लि० पु० वर्तते।

अयं पा० २ पु० ना० इति मु० ग्रा०।

प्राकृतप्रलये विलय इति यावत् तथाऽसर्वज्ञत्वं च स्यात् *करणजन्यतया ज्ञानेच्छाकृतीनामनित्यत्वप्रसङ्गात् , क्रियायाः कारणविशेषो हि करणमिति* । तथा च "नित्यो नित्यानां चेतनश्चेतनानां, नैवाहस्तस्य न निशा नित्यस्य परमात्मनः । उपचारात्तथाप्येतत्तस्येशस्य द्विजोच्यत" इत्यादिश्रुतिस्मृतयः । "यः सर्वज्ञः सर्वविद्" इत्यादिश्रुतयश्च पीड्येरन्नित्यर्थः । वाशब्दोऽत्र समुच्चये ॥

इतश्च ब्रह्मणः करणं नास्ति—

**उत्पत्त्यसंभवात् ॥४२॥**

ब्रह्मणः करणानां कर्त्रभावेनोत्पत्त्यसंभवादित्यर्थः ॥

ननु स्वयमेव परं ब्रह्म स्वरूपकरणनिर्मातृ स्यादित्याशङ्कामपाकरोति—

**न च कर्तुः करणम् ॥४३ ॥**

न हि कर्तुः सकाशात् स्वकरणमुत्पत्तुमर्हतीत्यर्थः । करणोत्पत्तेः प्राक् करणाख्यसहकार्यभावेन कर्तृत्वासंभवादित्यर्थः ॥

**विज्ञानादिभावे वा तदप्रतिषेधः ॥४४॥**

वाशब्दश्चार्थे । यदि च विज्ञानादिर्भाविज्ञानेच्छाकृत्यादिनित्यत्व एव सति सृष्ट्यादावीश्वरस्य करणं मन आदिकमुच्यते तैरेव ब्रह्मणा विश्वनिर्माणात्तदा तादृशकरणस्य प्रतिषेधो न क्रियते, मन आदीनामीशज्ञानादौ करणत्वस्यैवास्माभिरनभ्युपगमादित्यर्थः ॥

**विप्रतिषेधाच्च ॥४५॥**

"न तस्य कार्यं करणं च विद्यते" इत्यादिश्रुतिभिर्ब्रह्मणः करणप्रतिषेधाच्च ब्रह्म न करणवदित्यर्थः ॥

इति ब्रह्ममीमांसायां विज्ञानयतिविरचिते विज्ञानामृताख्य ऋजुभाष्ये
द्वितीयाध्यायस्य द्वितीयः पादः

---

* अयं पाठ उ० इ० लि० पु० वर्तते । किन्तु तत्र 'ज्ञानेच्छाकृतीनाम् नित्यत्वप्रसङ्गात्' इति पाठोऽस्ति ।

अयं पा० २ पु० ना० इति मु० शा० ।

## अथ तृतीयः पादः

यथोक्तब्रह्मणि स्मृतिन्याययोर्विरोधः प्रथमपादेन परिहृतः। द्वितीयपादेन च निरीश्वरा नास्तिकवादा निराकृताः। तथा केवलानुमानिक ईश्वरवादश्चान्ताधिकरणे निराकृतः। इदानीं "जन्माद्यस्य यत" इति यद्ब्रह्मणः आकाशादिसकलप्रपञ्चजन्मादिकारणत्वं लक्षणमुखेनोक्तम् सामान्यतश्च परीक्षितं, तदतिविशेषतः परीक्षणीयम्, तत्प्रसङ्गेनैव जीवस्य गौण्यु[1]त्पत्तिप्रतिपादनाय ब्रह्ममुख्यशक्तेर्जीवस्य नित्यत्वचिन्मात्ररूपत्वादिकं विस्तारतो विचारणीयं यत् तदर्थं तृतीयः पाद आरभ्यते—

### न वियदश्रुतेः ॥१॥

ननु "जन्माद्यस्य यत" इति यत् प्रतिज्ञातं तन्नोपपद्यते, कुतः?, वियदश्रुतेः वियति अश्रुतेः अर्थात् जन्मादीनामित्यर्थः। छान्दोग्ये तेज आदीनामिवाकाशस्य हि जन्मादि न श्रूयत इति भावः॥

अत्र सिद्धान्तमाह—

### अस्ति तु ॥२॥

यद्यपि छान्दोग्ये नास्ति तथापि तैत्तिरीयकादिषु श्रुतिरस्ति वियज्जन्मादिबोधिनी "एतस्मादात्मन आकाशः सम्भूत" इत्यादिरित्यर्थः। तदेकवाक्यतया च छान्दोग्यीयसृष्टावपि वियत्सृष्टिः पूरणीया। *अथवा जगत्कारणतया ब्रह्मप्रतिपादनस्यैव श्रुतिष्वभिप्रेततया सृष्टौ तात्पर्याभावेन तन्न्यूनतायामपि न क्षतिरिति भावः* ॥

पुनः पूर्वपक्षी सूत्रचतुष्टयेन स्वाभिप्रायं प्रकटयति—

### गौण्यसंभवात् ॥३॥

सत्यं श्रुतिरस्ति तथापि सा गौणी, कुतः?, असंभवात्। निरवयवस्य नभसः प्रकृतिपुरुषवदेव समवाय्यसमवायिकारणयोरसंभवात्। अत एव वियतो विनाशश्रुतिरपि गौणीत्यर्थः। प्रकृतिपुरुषयोरिवाकाशेऽप्यभिव्यक्तिरेव कार्यगुण इति बोध्यम्। न[2]तु (नु) युक्तिप्राबल्यादस्यैव सूत्रस्य सिद्धान्तत्वं कथं नेष्यत इति चेन्न, "एतेन मातरिश्वा व्याख्यात" इत्यागाम्यतिदेशसूत्रानुपपत्तेः वायूत्पत्तेरगौणत्वादिति॥

---

१ "गौण्युत्पत्ति" इत्येव पाठ उ० ह० लि० पु० वर्तते।

* अयं पाठ उ० ह० लि० पु० वर्तते। तत्र 'तन्न्यूनतायामपि न क्षतिरिति' पाठः उ० ह० लि० पु० वर्तते। मु० पु० 'न' इति नास्ति।
अयं पा० १ पु० ना० इति मु० शा०।

२ "ननु" इति उ० ह० लि० पु० पाठः।

ननु श्रुतिबलाद् युक्तिर्बाधनीया, तत्राह—.

शब्दाच्च ॥४॥

"वायुश्चान्तरिक्षं चैतदमृतम्, आकाशवत् सर्वगतश्च नित्यः" इत्यादिश्रुतेश्चाकाशजन्मादिश्रुतिर्गौणीत्यर्थः ।

निरंशत्वाद् विभुत्वाच्च [1]तथा(ऽ)नश्वरभावतः ।
ब्रह्मव्योम्नोर्न भेदोऽस्ति चैतन्यं ब्रह्मणोऽधिकम् ॥ इत्यादिस्मृतेश्चेति ॥

नन्वेवम् "एतस्मादात्मन आकाशः सम्भूतः आकाशाद् वायुरि" त्यादि तैत्तिरीयकश्रुतावेकस्यैव संभवशब्दस्य वाय्वादिषु मुख्यत्वे वियति च गौणत्वे युगपद् वृत्तिद्वयविरोधः स्यादित्याशङ्क्य समाधत्ते—

स्याच्चैकस्य ब्रह्मशब्दवत् ॥५॥

यथैकस्मिन्नेव वाक्ये एकस्यैव ब्रह्मशब्दस्य तपोऽन्नहिरण्यगर्भादिषु गौणत्वं परमात्मनि च मुख्यत्वं तथैव संभवादिशब्दस्यापि स्यादित्यर्थः । ननु ब्रह्मशब्दे व्यक्तिभेदान्न युगपद् वृत्तिद्वयविरोध इति चेत्, संभवशब्दस्यापि वाय्वादिष्वनुषङ्गेन व्यक्तिभेदः समान इति भावः ॥

ननु आकाशस्य नित्यत्वे "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमि" त्यादिप्रतिज्ञाया एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाश्च संकोचः स्यादाकाशेन द्वैतप्रसङ्गादित्याशङ्कां समाधत्ते—

प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॥६॥

यथोक्तप्रतिज्ञयोर्हानिर्नास्ति, कुतः ? शब्देभ्योऽव्यतिरेकावगमात् । अव्यतिरेकस्यानतिरेकस्यैवाविभागाख्यस्य श्रुतिभ्योऽवगमात् न तु प्रलये गगनादीमभावस्येत्यर्थः । तथा सतीदंशब्दवैयर्थ्यात् सदसतोः केनापि प्रकारेणाभेदानुपपत्त्यैकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः सुतरामनुपपत्तेश्च ।

इतोऽपि उक्तप्रतिज्ञे भवद्भिरप्यविभागलक्षणाद्वैतपरे एवाभ्युपगन्तव्ये न पुनरखण्डाद्वैतपरे "यथा मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणां रसान् समवहारमेकतां रसं गमयन्ति ते यथा तत्र न विवेकं लभन्ते" इत्यादिदृष्टान्तप्रदर्शनेनाविभागलक्षणाद्वैत एव श्रुतेस्तात्पर्यावधारणात् । तथा "अस्य पुरुषस्य प्रयतो वाङ् मनसि संपद्यत" इत्यादिश्रुतावपि संमिश्रणवाचकात् संपत्तिशब्दात् अविभागस्यैवावगमात् । एवं "न तु तद्द्वितीयमस्ति ततोऽन्यद् विभक्तमि" त्यादिश्रुतयोऽप्यविभागलक्षणाव्यतिरेके प्रमाणानि । अत एव सूत्रकारो वक्ष्यति "अविभागो वचनादि" ति । तथा सांख्यशास्त्रेऽप्यविभागावेव प्रलयसर्गकालयोर्विश्वस्योक्तौ, यथा—"कारणकार्यविभागा-

[1] 'तथाऽनश्वर' इति ड० ह० लि० पु० पाठः ।

दविभागाद् वैश्वरूप्यस्ये" ति। *अन्यथा चाविद्याद्रष्ट्रादीनां प्रलये सत्ताभ्युपगमोऽपि भवतां नोपपद्येत, तैरेवाखण्डताप्रच्यवादिति*। एवं च सत्याकाशस्य नित्यत्वेऽपि प्रकृतिपुरुषयोरिव ब्रह्मण्यविभागेनैवैकत्वप्रतिज्ञा। $तथा दुग्धज्ञानेन दुग्धघटनिक्षिप्तजलबिन्दुज्ञानवत् ब्रह्मज्ञानेन ब्रह्मप्रलीनसर्वपदार्थज्ञानं चोपपद्यत इति$। ‡तथैकविज्ञाने सर्वविज्ञानप्रतिज्ञा चोपपन्ना, कारणे कार्यस्याविभागेन दुग्धज्ञानात् तदनुगतजलज्ञानवत् ब्रह्मज्ञानेन सर्वविज्ञानाद्। विभक्तकार्यावस्था तु न ब्रह्मज्ञानेन ज्ञातुं शक्यत इत्याशयादेकविज्ञानेन सर्वविज्ञानमुपपन्नमिति श्रुत्या विकारस्यासत्यत्वमुक्तं सत्यं वास्तवं नित्यमिति पर्यायः। अविभागलक्षणाभेदस्यैव चानादितया अविनाशितया च वास्तवस्य त्वविभागस्य चाल्पकालस्थायितया मध्ये वाचारम्भणमात्रत्वम्। यदेव हि यदपेक्षया स्थिरं भवति (तत्) तदपे[1]क्षया सत्यं भवति, यथा देहाद्यपेक्षया प्राणाः "प्राणा वै सत्यमि" तिश्रुतेः। तथाऽत्राविभाग एव सत्य इति एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपन्नेति। अनेनैव पूर्वपक्षसूत्रेण सर्वाः प्रलयाद्वैतश्रुतयो व्याख्याता वेदितव्या इति‡॥

इदानीं चतुःसूत्र्युक्ते पूर्वपक्षे सिद्धान्तमाह—

**यावद्विकारं तु विभागो लोकवत् ॥७॥**

यदुक्तमाकाशस्योत्पत्तिरसंभवाद् गौणीति तत्तदा स्याद् यदि प्रकृतिगुणात्मकस्य सूक्ष्माकाशस्योत्पत्तिः श्रुत्योच्येत पार्थिवादिपरमाणोरिव निरवयवत्वेन परमसूक्ष्माकाशस्य कार्यत्वासंभवात्, न त्वेवं, किन्तु यावद्विकारं विकारपर्यन्तमेव वियदादीनां विभागः सृष्टिः श्रुतिषूच्यते न तु ब्रह्मप्रलीनपरमसूक्ष्मपर्यन्तमपि, तेषां ब्रह्मण्यन्तर्भूततया ब्रह्मरूपेणैव कथनात्। लोकवल्लोकव्यवहारानुसारेणेत्यर्थः। यथा लोके दार्वादौ पूर्वस्थितादेव सूक्ष्माग्न्यादेर्निर्मन्थनादिनाऽभिव्यज्यमानानां विकाराणामेवोत्पत्तिर्व्यवह्रियते, तथैव प्रकृत्येकदेशात् सूक्ष्माकाशादभिव्यक्तस्य शब्दादिक्षमस्य कार्याकाशस्यैवोत्पत्तिः श्रुतिषु व्यवह्रियते न तु सूक्ष्माकाशस्य दारुगतसूक्ष्माग्नेरिवेति।

ननु सावयवत्वेनाग्निरुत्पत्तुमर्हति न त्वाकाशं निरवयवत्वेनावयवसंयो-

---

* अयं पाठ उ० ह० लि० पु० वर्तते।
अयं पा० १ पु० ना० इति मु० शा०।

$ अयं पाठ उ० ह० लि० पु० नास्ति।
अयं पाठः १ पु० नास्तीति मु० शा०।

‡ अयं पाठ उ० ह० लि० पु० वर्तते।
'कारणे' इति उ० ह० लि० पु० पाठः।
'करणे' इति मु० पु० पाठोऽयुक्तः।
अयं पाठ २ पु० ना० इति मु० शा०।

१ "तत्तदपेक्षया" इत्येकस्मिन् ह० लि० पु० पाठः। अन्यस्मिंस्तु खण्डितः पाठः।

गाख्यकारणाभावादिति चेन्न, ❀अहङ्कारस्य तदनुगतसूक्ष्माकाशस्य चावयवत्वात् सजातीयस्यैवारम्भकत्वमिति चेन्न❀ नियामकाभावाद् देहादीनां पाञ्चभौतिकत्वाच्च। $केवलविजातीयस्यैवारम्भकत्वानभ्युपगमात्। केवलजलादिभ्यो घटाद्यनुत्पत्तेरिति। एतेनाकाशात्तदनुगतवाय्वंशाच्च वा जलादिभ्यो वटाद्युत्पत्तिरित्येवंक्रमेण पञ्चभूतोत्पत्तिरवगन्तव्येति $।

ननु तथापि पूर्वावस्थितस्यैवाकाशस्य *स्वकार्यजननाय प्रतिबन्धनिवृत्तिः सहकारिसंपत्तिर्वा कल्प्यताम्*। §सहकारिमात्रत्वमेव शब्दाद्युत्पादने कल्प्यतामिति§ आकाशान्तकल्पने गौरवादिति। मैवम्—

शब्दस्पर्शविहीनं च रूपादिभिरसंयुतम्।
त्रिगुणं तद् जगद्योनिरनादिप्रभवाप्ययम्॥

इत्यादिवाक्यैर्न्यायवैशेषिकाद्यभ्युपगतेभ्यः शब्दादिलिङ्गत्वेन व्यक्ताख्येभ्यः आकाशादिभूतेभ्योऽतिरेकेणाप्यव्यक्ताख्यानामणूनामाकाशस्य च सिद्धेः। अपि चैवं सति अवयविमात्रोच्छेदप्रसङ्गः, अवयवानामेव जलाद्याहरणादिकार्यजननाय स्वसंयोगविशेषस्यैव सहकारित्वकल्पनौचित्यात् अवयविकल्पने गौरवात्। अथैकत्वस्थूलत्वादिप्रत्ययानुरोधेनावयवी पृथक् सिध्यतीति चेत्, समानमाकाशेऽपि। [1]घटाकाशगुहाकाशादीनां नानात्वोत्पत्तिप्रलयानां प्रत्यक्षप्रत्ययस्य पितृवैरित्वाभावात् तथा श्रुतिस्मृतिभ्योऽपि[1]। आकाशं प्रतिसर्गमुत्पादविनाशशालितया नानात्वेनावगम्यते तथा प्रकृतिगुणापेक्षया स्थूलत्वेन चेति। प्रामाण्यं च प्रत्यक्षशब्दयोरुभयोरेव समानमास्तिकानाम्, प्रत्यक्षविरोधस्तु कारणव्युपादनेन निराकृत इति। तस्मात् पृथिव्या इवाकाशस्यापि कारणसत्वेन प्रमाणसत्त्वेन वा[2] (चा) वयविरूपेणोत्पत्तिः समानेति।

नन्वेवमात्मनोऽपि यावद्विकारं कार्यत्वं स्यादिति चेन्न, आत्मनो विकारित्व-

---

❀'अहङ्कारस्य' इत्यारभ्य 'आरम्भकत्वमिति' पर्यन्तः पाठ ड० ह० लि० पु० वर्तते। 'चेन्न' इत्यारभ्य 'पाञ्चभौतिकत्वाच्च' इति पर्यन्तः पाठ एकस्मिन् ह०लि० पु० वर्तते अन्यस्मिंस्तु नास्ति स पाठः। किन्तु द्वितीयः "चेन्न" इति पाठोऽयुक्तो भाति। अयं पा० २ पु० ना० इति मु० शा०।

$ 'केवल' इत्यादिः 'अवगन्तव्ये' त्यन्तपाठ एकस्मिन् ह० लि० पुस्तके नास्ति। अयं पा० १ पु० ना० इति मु० शा०।

* अयं पाठ २ पु० ना० इति मु० शा०।

§"सहकारिमात्रत्वमेव शब्दाद्युत्पादने कल्प्यताम्"इति पाठ एकस्मिन् ह०लि०पु०नास्ति। अयं पा० १ पु० ना० इति मु० शा०। अन्यस्मिंस्तु ह० लि० पु० ❀इति चिह्नान्तर्गत 'चेन्न' इत्यारभ्य 'केवलविजातीय' इत्यारभ्य च "तदेवं पृथिव्यादिवदेवाकाशोऽपि" इत्यतः पूर्ववर्ती सर्वोऽपि पाठः पृष्ठान्तरे भ्रमात् लिखितः इह च त्यक्त इति भाति।

[1] अयं पाठ एकस्मिन् ह० लि० पु० वर्तते। अयं पा० २ पु० ना० इति मु० शा०।

[2] 'वा' इत्येव पाठ एकस्मिन् ह० लि० पु० वर्तते।

प्रतिषेधात् आत्मचैतन्यस्य[1] नित्यत्वात्। प्रकृतेः कार्यत्वं तूत्तरसूत्रेण निराकरिष्यति। तदेवं पृथिव्यादिवद्देवाकाशोऽपि नित्यानित्योभयरूप इति सिद्धम्। न्यायवैशेषिकाभ्यां चालिङ्गमव्यक्तं नाभ्युपगम्यते नित्येष्वेवाण्वादिषु गन्धादिलिङ्गाभ्युपगमात्, "व्यक्तानां प्रत्यक्षप्रामायादि" ति न्यायसूत्राच्च। अतस्ताभ्यां नित्य एवाकाशे शब्दमभ्युपगम्याकाशस्यानित्यत्वं पृथिव्यादिवत् नेष्यत इति। असाधारण्येन वाय्वाकाशयोरमृतत्ववचनं च कार्यावस्थामादायैवापेक्षिकं देवादीनाममृतत्ववचनवदिति सर्वं समञ्जसम्॥

## एतेन मातरिश्वा व्याख्यातः॥८॥

एतेन वियदुत्पत्तिव्याख्यानेन वायुरप्युत्पन्नतया व्याख्यातः, छान्दोग्ये वायूत्पत्तेरश्रवणेऽपि तैत्तिरीयके तच्छ्रवणात् "आकाशाद् वायुरि" ति। असंभवाशङ्का तु वायूत्पत्तौ नास्त्येव सावयवत्वे विवादाभावात्। अमृतत्वश्रुतिश्चापेक्षिकीत्युक्तम्। इतराकाशवन्नित्यत्वश्रुतिर्नास्त्येव, तत्सत्त्वे चाकाशवदेव व्यक्ता[2]व्यक्तभेदेनाविरोधो बोध्यः। वायूत्पत्तिश्चाकाशक्रमेणोत्पत्त्यनेनैव सूत्रेण सिद्धमिति॥

ननु नित्यत्वेन श्रुतस्याप्याकाशस्योत्पत्तिस्वीकारे प्रधानस्याप्युत्पत्तिरस्तु "तस्मादव्यक्तमुत्पन्नमि" त्यादिवाक्येभ्य इत्याशङ्क्याह—

## असंभवस्तु सतोऽनुपपत्तेः॥९॥

"सदेव सोम्येदमग्र आसीदि" त्यादिश्रुतिषु तप्तायःपिण्डवदीक्षितृब्रह्माभेदेनोपन्यस्तं सूक्ष्मं जगत् सत्। तस्य सतोऽव्यक्तस्य परमसूक्ष्माकाशादिरूपगुणत्रयात्मकस्य प्रधानस्य तु संभव उत्पत्तिर्नास्ति, कुतः?, अनुपपत्तेः, तस्य कारणाभावेन विकाररूपत्वासंभवात्, कारणकल्पने वाऽनवस्थानादित्यर्थः। अत एव पुरुषस्येव प्रधानस्याप्युत्पत्तिर्गौणीत्युक्तं कौर्मे "संयोगलक्षणोत्पत्तिः कथ्यते कर्मजाऽनयोरि" ति। महदादिविकाररूपेणानित्यत्वं च प्रधानस्यापीष्यत एव "क्षरं प्रधानममृताक्षरं हर" इति श्रुतेः।

आधुनिकास्त्विदं सूत्रं ब्रह्मण उत्पत्तिं प्रतिषेधतीत्याहुः, तन्न, ब्रह्मण उत्पत्तेः श्रुत्यभावेनाप्रसक्तत्वात् आत्मनित्यत्वप्रतिपादनेनैव सुतरां ब्रह्मनित्यत्वस्य सेत्स्यमानत्वाच्च॥

छान्दोग्यानुक्ते वियद्वायुसृष्टी पूरयित्वा छान्दोग्यसृष्टावन्यं विशेषमाह—

## तेजोऽतस्तथा ह्याह॥१०॥

यद्यपि छान्दोग्ये सदाख्याद् ब्रह्मणस्तेजःसृष्टिः साक्षादेव श्रूयते, तथापि अतो वायोस्तेजः संभवतीति ज्ञेयम्, कुतः?, तथाहि तैत्तिरीयश्रुतिराह—"वायोरग्निरि"

१ "स्यानित्यत्वात्" इति पाठ एकस्मिन् ह० लि० पु० मु० पु० च वर्तमानो न सम्यक्।

२ 'व्यक्ताव्यक्तभेदेन' इत्येव पाठ उ० ह० लि० पु० वर्तते। 'व्यक्ताभेदेन' इति मु० पु० पाठोऽसाधुर्भाति।

तीत्यर्थः। छान्दोग्यश्रुतिश्च *न क्रमपरा [ब्रह्मप्रतिपादनमात्रपरत्वादिति भावः* ॥

## आपः ॥११॥

अतस्तथा ह्याहेत्यनुवर्तते। तथा च यद्यपि श्रुत्यन्तरे "आप एवेदमग्र आसुरि" ति जलस्यैव प्रथमं सृष्टिः श्रूयते, तथापि अतस्तेजस एव आपो जायन्त इति बोध्यम्, कुतः? तथा ह्याह तैत्तिरीयश्रुतिरग्नेराप इत्यर्थः। उक्तश्रुतौ च पृथिव्यादिव्यपेक्षयैवाग्रेशब्द उपपादनीय इति भावः। एतेन "अप एव ससर्जादौ तासु बीजमवासृजदि" ति मन्वादिस्मृतिष्वप्यादावित्यादिशब्दः पृथिव्याद्यपेक्षयैव बोध्यः॥

## पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥१२॥

अतस्तथा ह्याहेत्यनुवर्तते। अतो जलात् पृथिवी जायते, तथा ह्याह सैव श्रुतिः "अद्भ्यः पृथिवी" ति। ननु छान्दोग्ये "ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहि, ता अन्नमसृजन्ते" त्यनेन जलाद् व्रीहियवादिरूपस्यान्नस्योत्पत्तिरुक्ता। तदेकवाक्यतया च तैत्तिरीयकेऽपि पृथिवीशब्दोऽन्नपर एवोचितः, सामान्यशब्दस्य विशेषपरत्वे लक्षणाद्यभावादित्याशङ्क्याह—अधिकाररूपशब्दान्तरेभ्य इति। सर्वश्रुतिषु जलात् पृथिव्येव बोध्या, छान्दोग्ये अन्नशब्दस्य पृथिवीलक्षकत्वात्, कुतः? महाभूताधिकारात्। तथा छान्दोग्ये "यत्कृष्णं तदन्नस्ये" ति सामान्यपृथिवीरूपस्य कथनात्। अन्नरूपस्य शुक्लादेरपि दर्शनात्। तथा "तद्यदपां सर आसीत् तत समहन्यन्त सा पृथिव्यभवदि" ति श्रुत्यन्तराच्चेत्यर्थः। एवं तैत्तिरीयकश्रुतिमवलम्ब्य ब्रह्मणः सकाशात् क्रमेण पञ्चभूतोत्पत्तिरवधारिता। तत्रायं संशयः—किं परमेश्वर आकाशमेव स्वयं सृजति वाय्वादींस्तु परत एव पितामह इव पुत्रद्वारा पौत्रम्। किं वा वाय्वादीनपि स्वयं सृजति, यथा कुलालः स्वयं कपालं सृष्ट्वा तेनैव कपालेन स्वयं घटमपि सृजति, आकाशादिदेवानां च करचरणादिवदीश्वराधिष्ठिततया स्रष्टृत्वोपपत्तेः। कर्षणादिकर्मसु गोहलिकाद्युभयकर्तृकत्वदर्शनादिति॥

तत्रोत्तरं पक्षं सिद्धान्तयति—

## तदभिध्यानादेव तु तल्लिङ्गात् सः ॥१३॥

स प्रकृतः परमेश्वरस्तत्तद्रूपेणावस्थितः सर्वं सृजति, कुतः?, तदभिध्यानरूपात्तल्लिङ्गात्। छान्दोग्यादौ "सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इत्यादिरूपं यदीश्वरस्याभिध्यानं तदेव हि परमेश्वरस्य स्वतः सर्वस्रष्टृत्वे लिङ्गम्। यदि ह्याकाशादयो देवाः स्वातन्त्र्येणैव स्वस्वकार्यस्रष्टारः स्युरीश्वरस्तु हेतुकर्तृमात्रस्तर्हि न ब्रह्माण्डादिसृष्टये तत्तद्देवतान्तर्यामी भूत्वा स्वयं स्रक्ष्यामीति परमेश्वरस्य संकल्पः स्यात्, अपि तु सर्जयिष्यामीत्येव स्यात्। अतोऽवगम्यते देवादीनामप्यस्मदादिवदेव पारतन्त्र्याद् वाय्वादिसृष्टावपि परमेश्वरशेषतैव न स्यात् गोर्गमनादिषु गोपालवशतावदिति।

---

* 'आकाशवायुद्वारकत्वेनोपपादनीयेति भाव' इत्यधिकम् १ पु० इति मु० शा०। अयं पाठ उ० ह० लि० पु० नास्ति।

अत्र "तत्तेज ऐक्षते" इत्याद्यभिध्यानं परमेश्वरस्य स्रष्टृत्वे लिङ्गमिति केचित्, तत्र (तन्न) तादृशाभिध्यानानां तेजआद्यभिमानिदेवतास्वपि संभवात्, "अभिमानिव्यपदेशस्तु विशेषानुगतिभ्यामि" ति सूत्रेणैव तादृशवाक्येष्वभिमानिव्यपदेशस्योक्तत्वाच्च। न च प्रकरणात् "तत्तेज ऐक्षते" त्यादिष्वपि परमेश्वर एवाभिध्यातेति वाच्यम्, प्रकरणात् तेजआदिशब्दस्य बलवत्त्वादिति।

वस्तुतस्तु सृजतीति क्रियापदाध्याहारं विनैवेदं सूत्रमित्थं व्याख्येयम्—'जन्माद्यस्य यत' इति प्रतिज्ञातत्वाद् ब्रह्मणो भूतजन्महेतुत्वं प्रतिपाद्यानेन सूत्रेणान्तर्यामित्वादिभिः स्थितिहेतुत्वमाह—तदभिध्यानादित्यादिना। तथा चायमर्थः—तद् यथोक्तमाकाशादिभूतपञ्चकं स एव परमेश्वर एव अन्तर्यामिरूपेण प्रविश्य शक्तिशक्तिमन्न्यायेन देहदेहिवदविभागेन कार्यकारणाविभागेन च स्थितः। कुतः? प्रवेशाभिध्यानरूपादीश्वराभेदलिङ्गादिति। अतः सिद्धं सर्वान्तर्यामः (मी) सर्वाधारश्च सन् एव सर्वं धारयतीति॥

तदेवं भूतपञ्चकसृष्टिस्थितिहेतुत्वं ब्रह्मणः प्रतिपाद्य तत्प्रलयहेतुत्वं प्रतिपादयति—

**विपर्ययेण तु क्रमोऽत उपपद्यते च ॥१४॥**

क्रमणं क्रमो गमनं ब्रह्मण्यप्यय इति यावत्। स च प्रलयो विपर्ययेण जन्मनो वैपरीत्येन भवति, कुतः?, अतःशब्दात्।

जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते।
ज्योतिष्यापः प्रलीयन्ते वायौ ज्योतिः प्रलीयते॥
वायुः प्रलीयते व्योम्नि तच्चाव्यक्ते प्रलीयते।
अव्यक्तं पुरुषे ब्रह्मन् निष्कले संप्रलीयते॥

इत्यादिस्मृत्यनुमितश्रुतेरित्यर्थः। युक्तिमप्याह—उपपद्यते चेति। उपपद्यते चार्थवैपरीत्येन क्रमः, मृद्घटादौ कारणेष्वेव कार्याणां लयदर्शनादित्यर्थः॥

ब्रह्मणि पञ्चभूतजन्मादिहेतुत्वं विचारितम्। इदानीम् अन्तःकरणजन्मादिहेतुत्वं विचारणीयम्। तत्र संशयः—किं सांख्यानामिव भूतसृष्टेः पूर्वमेव बुद्ध्यहङ्कारसृष्टिरुत भूतसृष्टेः पश्चादिति? तत्र सिद्धान्तमाह—

**अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥१५॥**

सदाकाशयोरन्तरा मध्ये विज्ञानमनसी जन्मादिमती भवतः[1]। शङ्कानिराकरणमुखेनैवात्र हेतुं वदयति। विज्ञानं महदाख्या बुद्धिर्निश्चयात्मकवृत्तिमती, मनश्च

[1] जन्मादिप्रतिभवतः इति मु० पु० पाठः।
'जन्मादिप्रती भवत' इत्येकस्मिन् ह० लि० पु० पाठः।
'जन्मादिमती भवत' इत्यन्यस्मिन् ह० लि० पु० पाठः एव सम्यक्।

संकल्पादिवृत्तिमत्। अनयोरेव चित्ताहङ्कारयोर्निवेशः, एकस्यैवान्तःकरणस्य वृत्तिमात्रभेदेन प्राणादिवच्चतुर्धा विभागात्। अन्तःकरणस्यैकत्वं च "पञ्चवृत्ति मनोवद्" ति सूत्राद् वक्ष्यते, तत्रैव चेदं विचारयिष्यामः। सांख्ययोगयोश्च महतोऽहङ्कार अहङ्कारान् मन इति कार्यकारणभावो वृत्त्यभिप्रायेणैकस्मिन्नेवान्तःकरणे प्रोक्तः। धर्मिभेदे हि पातञ्जलभाष्ये व्यासवाक्यं विरुध्येत, यथा—"क्लेशकर्मविपाकाशया मनसि वर्तमानाः पुरुषे व्यपदिश्यन्त" इति। तत्र बुद्धिधर्माणां भोगादीनां मनोधर्मत्वोक्तेरिति।

अत्र शङ्कते—ननु क्रमेणाकाशाद्यनन्तरमेव ते उत्पद्यन्ते, कुतः ?, तल्लिङ्गात् "तत्तेजोऽसृजते" ति तेजःसृष्ट्यनन्तरमेव "तत्तेज ऐक्षत बहु स्यामि" त्येवंरूपस्यान्तःकरणव्यापारस्य श्रवणात्। एवं भूतान्तरेऽपि भूतसृष्ट्यनन्तरमेव तदीक्षणस्य श्रवणादित्यर्थः। समाधत्ते—न अविशेषादिति। अन्तरोत्पत्तावपि लिङ्गानामविशेषात् अविशिष्टत्वात् "एतस्माज्जायते प्राणो मनः कर्मेन्द्रियाणि च। खं वायुर्ज्योतिरापश्च पृथिवी विश्वस्य धारिणी" त्यादिश्रुतौ पाठक्रमस्यान्तरोत्पत्तिलिङ्गस्य सत्त्वादित्यर्थः। मनःशब्देनात्रान्तःकरणसामान्यमेवोक्तं विशेषान्तरावचनेन गोबलीवर्दन्यायानवकाशात्।

नन्वेवं लिङ्गयोरविशेषादन्तरैवान्तःकरणोत्पत्तिरिति कथमवधार्यतामिति चेत्, अन्तरोत्पत्तौ यथोक्तलिङ्गद्वयस्यैवोपपत्तेः पूर्वोत्पन्नस्यान्तःकरणस्य पश्चाद् वृत्तिसंभवात् पश्चादुत्पत्तौ च पाठक्रमानुपपत्तेरिति। अथवा अन्तःकरणस्य पूर्वोत्पन्नत्वेऽपीक्षणोपपत्त्यविशेषाल्लक्षणं (षलक्षणं) लिङ्गमित्यर्थः।[1] किं च बाधकश्रुत्यभावेन स्मृत्या तदनुमितश्रुत्या चान्तरैवान्तः करणस्य जन्मादिकमवधारणीयम्। न चाकाशादिसृष्टिश्रुतिर्बाधिका भवति, श्रुतिषु कुत्रापि समग्रसृष्ट्यकथनात् उपासनादिपरत्वेन श्रुतेः सृष्टौ तत्क्रमे वा तात्पर्याभावाच्च। स्मृतौ तु सर्गप्रलयप्रक्रियायाः स्वपरत्वेन क्रमपरत्वेन च स्मृत्योरेवान्योन्यविरोधः सृष्टावंशतो दृश्यते तत्र कल्पभेदेन विरोधः परिहर्तव्य इति। तस्मात् सिद्धं सदाकाशयोर्मध्येऽन्तःकरणसृष्टिरिति। उत्तरपादे चापरेषां प्राणेन्द्रियसूक्ष्मभूतानामपि सदाकाशयोरन्तराल एवोत्पत्तिं वक्ष्यति। अतः श्रुतिस्मृत्योः सृष्टिप्रक्रियाऽविरुद्धैव मन्तव्या।

ये तु सूत्राणामृज्वर्थं परित्यज्य स्मृतिविरुद्धां सृष्टिप्रक्रियां श्रौतत्वेन परिकल्प्य सर्वां मन्वादिस्मृतिमप्रमाणीकुर्वन्ति, तैरिदं महाभारतवाक्यं न श्रुतम्—

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।
बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरिष्यतीति॥

नन्वेवं सदाकाशयोर्मध्येऽन्तःकरणसृष्ट्यङ्गीकारे "अन्नमयं हि सोम्य मन" इत्यादिश्रुतिविरोधस्तथाविराड्देहाद्धिरण्यगर्भस्य करणोत्पत्तिबोधकमन्वादिविरोधश्च। यथा विराड्देहाधिकारे मनौ —

उद्बबर्हात्मनश्चैव मनः सदसदात्मकम्।
मनसश्चाप्यहङ्कारमभिमन्तारमीश्वरम्॥

---

[1] "अविशेषान्नेक्षणं लिङ्गमि" ति उ० हृ० लि० पु० पाठः।

इत्यादि । तामिमाशङ्कामपाकरोति—

**चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥१६॥**

चराचरं शरीरमाश्रित्यास्यान्तःकरणजन्मादेर्व्यपदेशस्तु भाक्तो गौणः स्यात्, कथं ? तदभावभावित्वात् तेषां चराचरशरीराणां भावैर्धर्मैर्वृद्धिह्रासादिरूपैर्भावित्वाद् वृद्धिह्रासादिमत्त्वादित्यर्थः । तदेतत् श्रुत्या स्वयमेवोक्तं यथा—"एवं सोम्य ते षोडशानां कलानामेका कलाऽतिशिष्टाभूत् सान्नेनोपसमाहिता प्राज्वालीत् तयैतर्हि वेदाननुभवस्यन्नमयं हि सोम्य मन" इत्यादि । अत्र हि मनस एका कलावशिष्टा साह्यन्नेन प्राज्वालीदित्येवोक्तं न तूत्पन्नमिति । अतोऽन्ननिमित्तकवृद्ध्याख्यविकारादन्नमयं मन इत्युक्तम् । एवमेव "आपोमयः प्राणस्तेजोमयी वागि" त्यादिश्रुतेरप्यर्थोऽवधारणीयः । यच्चोक्तं मनुवाक्यं तत्रापि उद्ववर्हेत्यनेन धात्वर्थमर्यादया संवर्धितवानित्येवावगम्यते । यदि च विराड्देहादेव हि हिरण्यगर्भबुद्ध्यादीनामुत्पत्तिर्मन्वभिप्रेता स्यात् तदा—

मनः सृष्टिं विकुरुते चोद्यमानं सिसृक्षया ।
आकाशं जायते तस्मात्तस्य शब्दं गुणं विदुः ॥

इत्यादिक्रमेण पञ्चभूतसृष्ट्यनन्तरम् "इत्येषा सृष्टिरादित" इति वाक्यशेषो विरुध्येत । आदितः सर्गादावित्यर्थः । अतो मनावादिसृष्टिरेव मुख्या विराड्देहे कारणसृष्टिस्तु प्रवृद्ध्याभिव्यक्तिमात्रेण गौणीति विवेक्तव्यम् । एवमन्येष्वपि पुराणेतिहासादिषु द्विधा श्रूयमाणा प्राणकरणसृष्टिर्विवेक्तव्या ।

इदन्त्ववधेयम्—अन्तःकरणपरिमाणस्याचार्येणानुक्तत्वादभ्यर्हितेन योगशास्त्रेणोक्तं व्यासदेवैश्च पातञ्जलभाष्येऽनुमतं विभुपरिमाणमेवास्माभिरप्यभ्युपगन्तव्यम् । "अणवश्चे" त्यागामिसूत्रेण च तन्मात्राणामेवोत्पत्तेर्वक्ष्यमाणत्वात् । एवं च सति नित्यानित्योभयरूपमेव आकाशवन्मनोऽपि भवति । तत्र कारणाकाशवन्नित्यं विभु मनः "घटाकाशं चिदाकाशमाकाशं च तृतीयकम् । द्वाभ्यां शून्यतमं विद्धि चिदाकाशं वरानने ॥ इत्यादिस्मृतेः । ईशोपाधिदृष्टान्तेन सामान्यत आत्मोपाधित्वावच्छेदेनैव लाघवाद् विभुत्वकल्पनौचित्याच्च । तदेव च गुणान्तरसंभेदेन दधिवत् कार्यं मनो ( कार्यमनो ) रूपेणापि परिणमत इति मन्तव्यम् । केवलकार्यत्वे "यावदात्मभावित्वाच्च न दोषः, पुंस्त्वादिवत् त्वस्य सतोऽभिव्यक्तियोगादि" त्यागामिसूत्रद्वयानुपपत्तेः, केवलनित्यत्वे च "एतस्माज्जायते प्राणो मनः" इत्यादिश्रुतिस्मृतिविरोध इति । तच्च कार्यं मनोऽदृष्टादिवशादनियतपरिमाणं भवतीति मनसो विभुमध्यमाणुपरिमाणानि शास्त्रेषु अवगम्यमानान्युपपद्यन्ते ॥

इदानीं जीवस्याप्यन्तराल एवान्तःकरणद्वारकाभिव्यक्तिरूपा गौण्युत्पत्तिः परमेश्वरांशरूपेण विचार्या । तदर्थं पादसमाप्तिपर्यंतं जीवप्रक्रिया । तत्रादौ जीवस्य उत्पत्तिं निराकरोति अंशत्वोपपत्तये वक्ष्यमाणमोक्षोपपत्तये च—

**नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥१७॥**

अत्रात्मशब्दो न परमात्मपरः अंशत्वस्य वक्ष्यमाणत्वात् ❀"नैवं पर" इति वक्ष्यमाणसूत्राच्च । तथा च "अनेन जीवेनात्मना अनुप्रविश्ये" ति श्रूयमाण❀ आत्मा जीवो नोत्पद्यते, कुतः ? अश्रुतेः जीवोत्पत्तेरश्रवणात् । "अनेन जीवेनात्मनाऽनुप्रविश्ये" त्यादिश्रुतिषु जीवानां पूर्वसिद्धताया एवावगमात् ।

ननु छान्दोग्ये जीवस्य सिद्धवन्निर्देशेऽपि "यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमेवैतस्मादात्मनः सर्व एत आत्मानो व्युच्चरन्ति, बह्वीः प्रजाः पुरुषात् संप्रसूता" इत्यादिषु जीवोत्पत्तिः श्रूयत इत्याशङ्क्याह—'नित्यत्वाच्च ताभ्यः' इति । ताभ्यः श्रुतिभ्यो जीवस्य नित्यत्वाच्च "जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत" इत्यादिरूपाभ्य इत्यर्थः । चशब्दात् श्रुत्युक्तबन्धमोक्षाद्यनुपपत्त्यादयो ग्राह्याः । उक्ता चोत्पत्तिरौपाधिकी अभिव्यक्त्या गौणो वेति भावः ॥

## ज्ञोऽत एव ॥१८॥

अत एव नित्यत्वादेव जीवो ज्ञः पूर्वानुभूतस्मर्ता भवति । अनित्यत्वे हि पूर्वाननुभूतं स्तनपानेष्टसाधनत्वादिकं जातमात्रः स्मर्तुं न शक्नोति, जन्मनः पूर्वमसत्त्वात् । ततश्च स्तनपानादिप्रवृत्त्यनुपपत्तिरतोऽज्ञत्वा[1] (ज्ञत्वा) नुपपत्तिरतो ज्ञत्वानुपपत्त्याऽऽप्यात्मा नित्यः सिध्यतीत्यर्थः । यद्यपि संस्कारस्मृत्यादीनां चित्तधर्मत्वमेव तथापि य एव चेतनोऽनुभवाख्यवृत्तिद्वारा यस्य विषयस्य द्रष्टा भवति स एव स्मृतिद्वाराऽपि तस्य द्रष्टा भवति नान्य इति नियमोऽस्त्येवेति भावः ॥

इदानीं पितापुत्रवदंशांशिभावस्योपपादकं ब्रह्मस्वरूपत्वं प्रतिपादयितुं जीवस्य विभुत्वकर्तृत्वादयोऽशेषविशेषाः प्रतिपाद्यन्ते । एवं ब्रह्माभिन्नस्य जीवस्य नित्यत्वेऽपि ब्रह्मांशत्वेन पितापुत्रवद्धेतुहेतुमद्भावसंभवात् "जन्माद्यस्य यत" इति प्रतिज्ञा सेत्स्यति । तथांशांश्यभेदेनाप्यात्मैक्यं सेत्स्यति, सेत्स्यति च ब्रह्मात्मत्वम् "आत्मेति तूपयन्ति चे" त्यनेन वक्ष्यमाणं, सेत्स्यति च साम्येनाप्युपासेति । तत्रादौ जीवस्याणुत्वं निराकर्तव्यं, तत्र च सूत्रत्रयात्मकमहावाक्येन जीवाणुत्वं शङ्कते—

## उत्क्रान्तिगत्यागतीनाम् ॥१९॥

ताभ्य इत्यनुवर्तते । नाणुरिति च साध्यं तृतीयसूत्रे वक्ष्यति, सूत्रदैर्घ्ये दुर्बोधता स्यात् इत्याशयेन पृथक्सूत्रद्वयेनात्रादौ हेतुद्वयनिर्वचनमिति बोध्यम् । तथा चायमर्थः—ना पुरुषो जीव इति यावत् । स अणुः कुतः ? उत्क्रान्तिगत्यागतीनां ताभ्यः उत्क्रान्त्यादिश्रुतिभ्य इत्यर्थः । न हि विभोरुत्क्रमणं गमनमागमनं वा संभवतीति भावः । "स यदा अस्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामती" त्यादिरुत्क्रान्तिश्रुतिः, ये चैके वाऽस्माल्लोकात् प्रयान्ति चन्द्रमसमेव ते सर्वे गच्छन्ती" त्यादिर्गतिश्रुतिः, "तस्माल्लोकात्

---

❀ अयं पाठ उ० ह० लि० पु० वर्तते ।

"नैनं परा" इति उ० ह०लि० पु० पाठः । अयं पाठः २ पु०ना० इति मु०शा० ।

[1] "ज्ञत्वानुप" इत्येव पाठ उ० ह० लि० पु० वर्तते ।

पुनरेत्यस्मै लोकाय कर्मण" इत्यादिरागतिश्रुतिरिति। नित्यत्वव्यवस्थापनात्तु निरवयवत्वेन न मध्यमपरिमाणसंभव इति इत्याशयः॥

हेत्वन्तरमाह—

## स्वात्मना चोत्तरयोः ॥२०॥

ताभ्य इत्यत्राप्यनुवर्तते। इतश्च जीवोऽणुः, स्वात्मनोत्तरयोश्च ताभ्यः श्रुतिभ्य इत्यन्वयः। अयमर्थः—संबद्धयोः उत्तरयोर्गत्यागत्योः प्रतिपादिकाः श्रुतयः "सति संपद्य न विदुः सति संपद्यामह" इत्याद्याः। "सत आगत्य न विदुः सत आगच्छामह" इत्याद्याश्च। नहीदं ब्रह्मणि गमनागमनं विभुत्वे सति जीवस्य संभवति, द्वयोर्विभुनोः संयोगविभागासंभवात्। न चान्तःकरणद्वारा भविष्यति, अन्तःकरणे प्रमाणाभावादन्यद्वारकत्वकल्पने गौरवाच्चेति॥

## नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥२१॥

नाणुरिति साध्यं पूर्वसूत्राभ्यां व्याख्यातम्। शेषार्थश्चायम्—ननु जीवोऽणुर्न भवति अतच्छ्रुतेः अनणुश्रुतेः "अस्थूलमनण्वह्रस्वमिति" आकाशवत् सर्वगतश्च नित्य" इति च श्रुतिरिति चेन्न, इतराधिकारात् तादृशश्रुतीनां परमात्माधिकारस्थत्वादिति॥

इतश्च विभुत्वश्रुतयः परमात्मपराः एव न जीवपरा इत्याह—

## स्वशब्दोन्मानाभ्यां च ॥२२॥

स्वस्य जीवस्याणुत्ववाचकशब्दाद् "एषोऽणुरात्मा चेतसा वेदितव्य" इत्यादिरूपात्। तथा स्वस्य उन्मानात् अणुद्रव्यपरिमितत्वाच्चेत्यर्थः। "बालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः" इत्यादिश्रुतिभिरित्यर्थः॥

ननु जीवस्याणुत्वे सति जलावगाहादौ सर्वदेहावच्छेदेन शैत्योपलब्धिर्न स्यादित्याशङ्कामपाकरोति—

## अविरोधश्चन्दनवत् ॥२३॥

यथा हि चन्दनबिन्दुः शरीरैकदेशसम्बद्धोऽपि शरीरव्यापिनमाह्लादं करोति तथैव देहैकदेशस्थोऽपि जीवः शरीरव्यापिनीमुपलब्धिं करिष्यति, नास्त्यत्र विरोध इत्यर्थः॥

## अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥२४॥

नन्ववस्थितौ जीवचन्दनयोर्वैशेष्यं विशेषो वर्तते, चन्दनं हि प्रत्यक्षत एव ललाटाद्येकदेशे दृश्यत इत्यगत्या तत्र युक्तिविरुद्धमपि कल्प्यते, आत्मा त्वतीन्द्रिय इत्यवस्थाने प्रत्यक्षाप्रत्यक्षत्वविशेषाज्जीवे युक्तिविरोधेन विभुत्वमेवोचितमिति चेन्न, आत्मनोऽपि स्थानविशेषस्य श्रुतित एव भवद्भिरभ्युपगमात्। तत्रैकदेशमात्रेण श्रुतिं पठति "हृदि ही" ति। हृदि ह्येष आत्मा, "स वा एष आत्मा हृदि" इत्यादिर्हि श्रुतिर्वर्तत इत्यर्थः॥

ननु विषमो ह्येष दृष्टान्तः, चन्दनस्य सावयवत्वेनावयवद्वारा सकलदेहसम्बन्धः संभवेत् आत्मा च निरवयय इति शङ्कायां दृष्टान्तान्तरमाह—

गुणाद्वाऽऽलोकवत् ॥२५॥

अविरोध इत्यनुवर्तते। यथा प्रदीपादिरूप आलोको गेहैकदेशस्थोऽपि प्रकाशाख्येन रूपगुणेन गेहं व्याप्नोति तथैव शरीरैकदेशस्थोऽणुर्जीवोऽपि ज्ञानगुणेन देहं व्यापिष्यति (व्याप्स्यति) नास्त्यत्र विरोध इत्यर्थः॥

ननु गुणानामाश्रयगमनं विना देशान्तरव्यापनं क्वापि न दृष्टं स्वतोऽक्रियत्वादिति, तत्राह—

व्यतिरेको गन्धवत् ॥२६॥

यथा गन्धस्य केवलगुणस्यापि चम्पकादिभ्यो व्यतिरेकः दूरदेशगमनार्थं विभाग, एवं दीपाद्यालोकस्य आत्मचैतन्यस्य च स्यादित्यर्थः। अनुभवबलाद् गुणानामपि क्रिया स्यादिति भावः॥

तथा च दर्शयति ॥२७॥

तथा च स्मृतिरपि "अनन्ता रश्मयस्तस्य दीपवद् यः स्थितो हृदी" त्याद्या, "एकदेशस्थितस्येन्दोर्ज्योत्स्ना सर्वत्रगा यथे" ह्या च एकदेशस्थितस्य चैतन्यगुणेन देहव्याप्तिं दर्शयतीत्यर्थः। तस्मादणुर्जीव इति सिद्धम्॥

तदेवमात्माणुत्वे प्राप्ते सिद्धान्तमाह—

पृथगुपदेशात् ॥२८॥

जीवादणुरुपाधिभूतः पृथक्, कुतः? उपदेशात् "स चानन्त्याय कल्पते, स वा एष महानज आत्मा, योऽयं विज्ञानमयः प्राणेष्वि" त्यादिश्रुतिभिर्जीवस्यानणुत्वोपदेशादित्यर्थः। एवं "नित्यः सर्वगतः स्थाणुरचलोऽयं सनातन"[1] इत्यादिस्मृतयोऽध्यात्मसामान्यस्यैव विभुत्वे प्रमाणानि बोध्यानि॥

नन्वेवमुत्क्रान्त्यादयोऽणुत्वोन्मानहृदयप्रवेशादश्च श्रुतिस्मृतिषूच्यमानाः कथमुपपद्येरंस्तत्राह—

तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥२९॥

उपाधिभूतादणुगुणसारत्वात्तु अणुगुणव्यपदेशो जीवे यथा प्राज्ञ इत्यन्वयः। अयमर्थः—जीवोपाधि[1]बुद्धि(र्बुद्धि)रणुः कार्यावस्थया परिच्छिन्नपरिमाणः, तस्य चोपाधेर्ये गुणा उत्क्रान्त्यादयस्तत्सारमात्रगुणक एव जीवो लोकैर्दृश्यते व्यवह्रियते च, स्वतो निर्गुणत्वात्। अतो लोकानुसारेण श्रुतावपि जीवस्योत्क्रान्त्यादिव्यपदेशो न पुनर्जीवस्य स्वत उत्क्रान्त्यादिः श्रुत्या व्यपदिश्यते विभुत्वश्रुतिविरोधात्,

---

[1] 'जीवोपाधिजीव' इत्येव पाठ उ० ह० लि० पु० वर्तते।

पुमान् सर्वगतो व्यापी ह्याकाशवदयं स्थिरः ।
कुतः क्वासि क्व गन्तासीत्येदप्यर्थवत् कथम् ॥

इत्यादिस्मृतिविरोधाच्चेति । अयं च विभागः श्रुत्यैव स्पष्टीकृतः यथा, "कस्मिन्न[1](नु) ह उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजते" ति। तथा "बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्टः, वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्याय कल्पत" इति । अत्राद्यार्धेन बुद्धिसंपर्काज्जीवस्य परिच्छिन्नव्यवहारमुक्त्वा पश्चाद् द्वितीयश्लोकचतुर्थपादेन तस्य स्वत आनन्त्यं प्रोक्तम् । तच्च स्वत आनन्त्यमौपाधिकपरिच्छेदोपगममात्रम् ।

अथवा उपाधिशुद्ध्या तस्य परिच्छिन्नविकारविगमे सत्युपाधिनैव सह विभुत्वाभिव्यक्तिः, न पुनः साधनसाध्यं दिगम्बराणामिव मन्तव्यम्, सावयवत्वादिना विनाशित्वप्रसङ्गादिति । प्राज्ञवदिति—यथा प्राज्ञ ईश्वरे मायापरमाण्वाद्युपाधिगुणसारत्वेन मायादिगुणव्यपदेशः "सोऽकामयत, अणोरणीयान्, तत्सृष्ट्वा तदेवानुप्राविशत्, प्राज्ञेनान्वारूढ उत्सृज्य याती" त्यादिः, तद्वदित्यर्थः । तदेतज्जीवस्य गमनादेरौपाधिकत्वम् ।

घटसंवृतमाकाशं नीयमाने घटे यथा ।
घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः ॥

इति श्रुत्या, "गतिश्रुतिरप्युपाधियोगादाकाशवदि" ति सांख्यसूत्रेण च स्पष्टमुक्तम् । अत्र सूत्रे तद्गुणसारत्ववचनाज्जीवस्य कर्तृत्वादिप्रमुखः संसारोऽप्यौपाधिक इत्यायातम् ॥

नन्वेवं यदि बुद्धिगुणा एव जीवस्य गुणाः न तु स्वतः सुखदुःखधर्माधर्मादिमत्त्वं तदा प्रलयादौ बुद्धेर्विनाशे सत्यात्मनो मोक्षापत्तिस्तथा च प्राकृतप्रलयानन्तरं पुनः सृष्टिर्न स्यात् । मुक्तस्य च पुनरुपाध्युत्पत्त्या संसाराभ्युपगमेऽनिर्मोक्षापत्तिरित्याशङ्कामपाकरोति—

## यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥३०॥

नोक्तदोषः, कुतः ? तस्य पृथक् शब्देनोक्तस्योपाधेर्यावदात्मभावित्वात्, उपाधेरन्तःकरणस्य यावदात्मावस्थितव्यवस्थानात् नित्यत्वादिति यावत् । तद्दर्शनात् यावदात्मभावित्वश्रवणात् "कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति, कतम आत्मा योऽयं विज्ञानमयः प्राणेष्वि" त्यादिष्वित्यर्थः । *विज्ञानमयो बुद्ध्यधीनाखिलव्यवहारः यतो वा यदात्मभावित्वमर्थाच्छ्रुत्योक्तम्, अदृष्टानाश्रयत्वेनानादेरनन्तत्वात्* । विज्ञानमयशब्दश्च बुद्ध्याख्यकरणवाच्यपि भवति "विज्ञानमयो मनो-

[1] "कस्मिन्न्वुत्क्रान्त" इति उ० ह० लि० पु० पाठः ।

* अयं पाठ उ० ह० लि० पु० वर्तते ।
अयं पा० १ पु० ना० इवि मु० शा० ।

मयः प्राणमय" इत्यादौ मन आदिभिः सह पाठात्। उक्तवाक्ययोश्च विज्ञानशब्दो न चैतन्यवाची न वा कादाचित्कत्वसंबन्धेन विज्ञानमयत्वं विवक्षितम् परमात्मव्यावृत्त्यसंभवादिति। मोक्षधर्मादिस्मृत्यनुमितश्रुतिभ्यश्च बुद्धेर्नित्यत्वमवसेयम्, यथा, मोक्षधर्मे बुद्धिपुरुषौ प्रकृत्य—

सृजते च गुणानेक एको न सृजते गुणान्।
पृथग्भूतौ प्रकृत्यैतौ संप्रयुक्तौ च सर्वदा[1]॥ इति।

प्रलयमोक्षादौ च ज्ञानादिहेतुः संयोगविशेष एव नश्यति न तु[2] संयोगसामान्यमतः सर्वदा संप्रयोग उक्तः।

नन्वेवमन्तःकरणस्य नित्यत्वेऽनिर्मोक्षः स्यादिति चेन्न, कर्मादिरूपनिमित्तकारणनाशे दग्धबीजवदवस्थितादन्तःकरणात् संसारासंभवेन मोक्षसंभवात्। अन्तःकरणस्य च सत्त्वादिगुणान्तःपातिन इतरगुणवत् प्रलये विलयान्न न[3] तेन ब्रह्मणोऽद्वैतं (द्वैतं), तथा ह्युक्तम् "प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः" इति सूत्रेणेति बोध्यम्॥

नन्वेवमन्तःकरणस्य नित्यत्वे "अन्तरा विज्ञानमनसी" इत्यादिसूत्रोक्तं बुद्धिजन्मानुपपन्नं, तथा "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इत्यादिश्रुतयः "प्रकृतेर्महान् महतोऽहङ्कारः" इत्यादिस्मृतिर्यथाऽनुपपन्ना इत्याशङ्कामपाकरोति—

## पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्॥३१॥

यावदात्मभाव्येवान्तःकरणं पुंस्त्वादीनामुपस्थेन्द्रियादीनामिवास्यान्तःकरणस्य सतो विद्यमानस्यैवाभिव्यक्तेर्योगात् युक्तत्वादित्यर्थः। पुंस्त्वादिवदित्यनेन घटादिवैलक्षण्यमुक्तम् घटादीनां ह्यतीतानागतावस्थया प्रलये सत्त्वम्, अन्तःकरणस्य तु वर्तमानावस्थयैव सत्त्वम्। यथा चक्षुरादिभिः सह बाल्येऽपि उपस्थेन्द्रियं तिष्ठति किन्त्वनभिव्यक्ततया कार्यकरं न भवति, तदेव तु यौवने अन्नादिना वृद्ध्याख्यविकारं गच्छदभिव्यक्त्याख्यकार्यतां प्राप्नोति, एवमेवान्तःकरणं प्रलये विभुरूपेण विद्यमानमप्यनभिव्यक्तं कार्यक्षमं न भवति। सर्गादौ तु गुणान्तरोपष्टम्भेन आकाशवदंशतः परिणामविशेषं गच्छदभिव्यक्त्याख्यकार्यतां प्राप्नोति, घटादिकं तु नैवम्। अत एव जीवादपि वैलक्षण्यम्। जीवस्य अंशतोऽपि वृद्ध्यादिविकाराभावेनैतादृशाभिव्यक्तिरूपोत्पत्त्यभावात्। अतो जीवोत्पत्तिर्गौणी नान्तःकरणस्येति विभागः।

नन्वेतादृश्युत्पत्तिर्वृद्धिलक्षणा प्रकृतेरपि संभवतीति कथम् "असंभवस्तु सत"

---

[1] महा० मो० अ० २४७ श्लो० २३।
[2] "स्वस्वामिभावोऽपि" इति १ पु० पा० इति मु० शा०।
अयं पाठः उ० ह० लि० पु० नास्ति।
[3] 'न' इति अधिकः पाठः उ० ह० लि० पु० नास्ति।
[4] 'ब्रह्मणोद्वैतम्' इत्येव पाठ उ० ह० लि० पु० वर्तते।

इति सूत्रेण प्रकृत्युत्पत्तिर्निराकृतेति चेन्न, सदाख्यात् सूक्ष्मरूपेणैव प्रकृतितद्गुणानामुत्पत्तेस्तेन निराकृतत्वात्। सूक्ष्मान्तःकरणस्य च प्रकृतिगुणमध्ये प्रवेशाज्जन्म प्रतिषिद्धमेव तेन सूत्रेणेति मन्तव्यम्। "कार्योपाधिरयं जीवः" इत्यादिश्रुतिस्तु जीवोपाधेरन्तःकरणस्य कार्यकारणोभयरूपत्वादुपपद्यते, जीवेषु कार्यावस्थोपाधिधर्माणामेव दर्शनाच्च। *प्रतिबिम्बनन्तु कार्यमात्रोपाधित्वव्यवहारः*। धर्माधर्माद्यवस्थानार्थं त्वव्यवहार्यो बीजवत् कारणोपाधिरिष्यत एव, अन्यथा प्रलये जीवस्य धर्माधर्मवासनानामाश्रयासंभवात्। न च प्रकृतिरेव तदाश्रयोऽस्तु किं नित्यान्तःकरणस्वीकारेणेति वाच्यम्, अन्तःकरणादिसूक्ष्मावस्थारूपसत्त्वादिगुणेभ्योऽतिरिक्तायाः प्रकृतेरनभ्युपगमाच्च। अतो बीजाङ्कुरवज्जीवोपाधिर्नित्यकार्योभयरूप इति ॥

नन्वात्मनोऽन्तःकरणमेव कथं स्वीक्रियते ? तत्राह—

**नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॥३२॥**

अन्यथाऽन्तःकरणानङ्गीकारे स्वत एवात्मनोऽर्थाकाररूपार्थग्रहणाभ्युपगमे नित्योपलब्धिप्रसङ्गः, विभोः सदा सर्वसम्बन्धात्। तदनभ्युपगमे च नित्यानुपलब्धिप्रसङ्गः। अथोच्यते आत्मनो विषयस्य वाऽन्यतरस्य आकारजननशक्तिप्रतिबन्धान्नोपलब्धिनित्यता न वाऽनुपलब्धिनित्यता प्रतिबन्धापगमे ज्ञानोत्पत्तेरिति, एवमपि आत्मविषया[1]न्यतर नियमः कल्प्यः स्यात्। नियमनं नियमः शक्तेः प्रतिबन्ध इत्यर्थः। तथा च प्रतिबन्धककल्पनापेक्षया करणकल्पनैव लघीयसीति भावः। यद्यपि पुरुषस्य ज्ञानं नित्यं तथापि चेतने प्रतिबिम्बरूपेण विषयाकारतारूपे विषयसम्बन्धे बुद्धेः करणत्वम्।

"गृहीतानिन्द्रियैरर्थानात्मने यः प्रयच्छति।
अन्तःकरणरूपाय तस्मै विश्वात्मने नमः॥

इति स्मृतेरिति बोध्यम्। एवं ज्ञानाख्यभोगानित्यत्वार्थं सुखदुःखानि, विविधरूपपरिणामाय च धर्माधर्मादिकमपि जीवस्यापेक्षितम्, तदाधारतयाऽप्यन्तःकरणं कल्पनीयमित्यपि बोध्यम्।

एवन्तावदन्तःकरणे युक्तिरुक्ता, श्रुतिश्चोच्यते—"अन्यत्रमना अभूवम् नाश्रौषमिति मनसा ह्येव पश्यति मनसा शृणोति कामः संकल्पो विचिकित्सा श्रद्धा अश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एवे"ति। तच्चान्तःकरणं स्वसाक्षिणि स्वामिनि केवलचिद्रूपे स्वसंसार (संस्कार) संक्रामकत्वेन स्फटिके जपावदुपाधिरित्युच्यते। तथा च कौर्मे—

---

* अयं पाठ उ० ह० लि० पु० वर्तते।
अयं पा० २ पु० ना० इति मु० शा०।

१ "आत्मविषयान्यतरनियमः" इति उ० ह० लि० पु० पाठः सम्यक् प्रतीयते। 'आत्मविषयात्मत' इति मु० पु० पाठोऽयुक्तः।

यथा संलक्ष्यते रक्तः केवलः स्फाटिको जनैः।
रञ्जकाद्युपधानेन तद्वत् परमपूरुषः॥
यथा स्वप्रभया भाति केवलः स्फाटिकोपलः।
उपाधिहीनो विमलस्तथैवात्मा प्रकाशते[1]॥

इदानीं जीवः कर्ता भवति न वा, कर्तृत्वेऽपि तत्कर्तृत्वं चैतन्यवत् स्वधर्म एव, उतौपाधिकं ब्राह्मणत्वादिवत्। औपाधिककर्तृत्वेऽपि तत् किं स्वातन्त्र्येण पारतन्त्र्येण वेति कर्तृत्वगोचरो विचारः क्रियते। कर्तृत्वं चात्र कार्यजनकशक्त्याश्रयत्वम्।

ननु ब्रह्मविचारः प्रतिज्ञातः किमर्थं जीवस्यातिविशेषः परीक्ष्यत इति चेन्न, वक्ष्यमाणब्रह्मांशत्वोपपादनाय ब्रह्मसारूप्यस्य प्रतिपिपादयिषितत्वात्, सर्वकर्त्रीश्वराभ्युपगमे जीवस्याकर्तृतापत्त्या विधिप्रतिषेधशास्त्रानर्थक्यदोषस्य परिहर्तव्यत्वाच्च। किं च सकलशक्त्यादिविशिष्टब्रह्मविचार एवाभिप्रेतः। प्रतिज्ञासूत्रस्य शक्तिद्वारैव हि ब्रह्मण ऐश्वर्यादिकं चेतनाचेतनशक्तीनामन्योन्यमुत्कर्षापकर्षाभ्यां तारतम्येनोपासनाभेदाश्च विवेचयितुं शक्यन्ते। अतः शक्तीनामप्यशेषविशेषो विचार्य इति।

## कर्ता शास्त्रार्थवत्त्वात् ॥३३॥

अत्रायं संशयः—"अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि, स विश्वकृद् विश्वविदात्मयोनिर्ज्ञः कालकालो वशी सर्वविद् यः" इत्यादिश्रुतिषु परमात्मन एव कर्तृत्वं श्रूयते। जीवेन सह प्रवेशश्च जीवस्य भोगसंपादनार्थम्। तथा "स हि कर्ते" त्यादिश्रुतौ च जीवस्य कर्तृत्वं श्रूयते। तत् किं परमेश्वर एव कर्ता, किं वा जीव एव आहोस्विदुभावेवेति। तत्रायं पूर्वपक्षः—कर्तृत्वं कर्मतत्फलादिषु ब्रह्मण एव [2]जीवकृत्यभावे दैवमात्रादपि कार्यसिद्धेः।

ज्ञानतोऽज्ञानतो वापि यत् किञ्चित् कुरुते नरः।
तत्सर्वं भगवानेव कुरुते योगमायया॥

इत्यादिवाक्यशतेभ्यश्च। *तथा च न्यायस्य पूर्वपक्षसूत्रम्—"ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात्" इति। "स हि कर्ते" त्यादिजीवप्रकरणस्थश्रुतिश्च* कार्याणां पुरुषार्थप्रयुक्ततया रथो गच्छतीत्यादिवद् गौणत्वेनाप्युपपद्यत इति।

तत्र गुणप्रधानरूपेणोभयोरेव कर्तृत्वं सिद्धान्तयितुं जीवस्यापि कर्तृत्वं सिद्धान्तयति—"कर्ता शास्त्रार्थवत्त्वात्"। जीवोऽपि स्वव्यापारे कर्ता भवति, कुतः? शास्त्रार्थवत्त्वात्, विधिप्रतिषेधशास्त्रावैयर्थ्यायेत्यर्थः। जीवकर्म विना ब्रह्मणः कर्तृत्वे विधीनां ह्यननुष्ठानलक्षणाप्रामाण्यं स्यात्, तथा ब्रह्मणो वैषम्याद्यापत्तिश्चेति भावः।

---

[1] कू० पु० उ० अ० २ श्लो० २७।

[2] यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते।

* अयं पाठ उ० ह० लि० पु० वर्तते।
अयं पा० १ पु० ना० इति मु० शा०।

स्वर्गादिकर्तृत्वं वादृष्ट[1] (चादृष्ट) द्वारा जीवस्य बोध्यम्। अत एव ऐहिककर्माभावस्थले प्राक्तनं कर्म कल्प्यम्। पुरुषव्यापारेऽपि फलानिष्पत्तिरीश्वराख्यकर्त्रन्तराननुग्रहात् कर्मवैगुणादिभ्यो वेति मन्तव्यम्। अन्यथा "स हि कर्ते" त्यादिश्रुतौ गौणत्वमन्याय्यं स्यात्। "ज्ञानतोऽज्ञानतो वापी" त्यादिवाक्यानि च प्रकृष्टं स्वातन्त्र्यलक्षणमेव कर्तृत्वं प्रतिषेधन्ति, न तु पारतन्त्र्येण कर्तृत्वमपि, "त्वत्प्रयुक्तः करोम्यहमि" त्यादिस्मृतेः। तथा च न्यायस्य सिद्धान्तसूत्रम्—"न पुरुषकर्माभावे फलानिष्पत्तेः" इति "तत्कारित्वादहेतु" रिति च। अहेतुरिति पुरुषकर्मनैष्फल्यं हेतुर्न भवतीत्यर्थः। ईश्वरस्य सर्वकर्तृत्वं "चात्मकृतेः परिणामादि" त्यनेनोक्तम्। अत उभयोरेव जीवेश्वरयोः कर्तृत्वम्। विशेषस्त्वियान्—जीवोऽदृष्टद्वारैव महदादिषु संयोगमात्रात् कर्ता, ईश्वरस्तु साक्षात् कृत्यैव सर्वकर्तेति॥

इतश्च जीवः कर्ता—

## विहारोपदेशात् ॥३४॥

विहारः क्रीडा स्वेच्छया चेष्टनं, तस्योपदेशात् "स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ती" त्यादिरूपादित्यर्थः। यैस्तु स्वाप्नी रथादिसृष्टिरत्र विहारशब्देन व्याख्यायते तैरपि स्वाप्नी सृष्टिरदृष्टद्वारैव जीवकर्तृका वाच्या, तच्च जाग्रत्सृष्टावपि समानमिति विशेषवचनं न युक्तम्। न च स्वाप्नसृष्टौ जीवमात्रकर्तृकत्वाद् विशेष इति वाच्यम्, अपसिद्धान्तात्, "सर्वकर्मे" त्यादिश्रुतिभिरीश्वरस्य सर्वकर्तृत्वसिद्धेरिति॥

इतश्च जीवः कर्ता—

## उपादानात् ॥३५॥

"तदेषां प्राणानां विज्ञानेन विज्ञानमादाये" ति "प्राणान् गृहीत्वे" ति च श्रुतिभ्यां सिद्धात् जीवस्य सुषुप्तौ स्वेच्छया करणवर्गग्रहणाच्चेत्यर्थः। यद्यपि जीवानां करणगोचरः साक्षात्कारो नास्तीति तद्गाचरा हति[2] (कृति) र्न संभवति, तथापि निद्रानिमित्तकारणचक्षुर्निमीलनादिद्वारैव निद्रायां कर्तृत्वं बोध्यम्॥ किं च—

## व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥३६॥

"मनसा संकल्पयति वाचाऽभिलपति कर्मणा चोपपादयति विज्ञानं यज्ञं तनुतेऽपि चे" त्यादिषु शब्देनैव क्रियायां कर्तृत्वव्यपदेशाच्च। न चेज्जीवः कर्ता किं त्वीश्वरस्य करणमेव सः, तदा "संकल्पत" इत्यादिरूपो निर्देशस्य विपर्यय एव स्यात् युज्येतेत्यर्थः॥

एवं जीवस्यापि कर्तृत्वं मीमांसितम्। इदानीं तस्य कर्तृत्वस्यौपाधिकत्वं प्रतिपादयितुं चैतन्यवन्नित्यं न भवतोत्यवधारयति सूत्रेण --

---

१ 'वादृष्टद्वारा' इत्युभय ह०लि०पु० पाठः। 'नादृष्ट द्वारा' इति मु०पु०पाठस्त्वयुक्तः।

२ यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते।

## उपलब्धिवदनियमः ॥३७॥

तस्य च कर्तृत्वस्योपलब्धिवन्नियमो नित्यता नास्ति। यथा जीवस्याग्न्यौष्ण्यवच्चैतन्यं नियतं यावद्द्रव्यभावि, नैवं कर्तृत्वं भवतीत्यर्थः। ननु ज्ञानमप्यात्मनो न नियतं सुषुप्त्यादावभावादिति चेन्न, तदापि ज्ञानस्य सत्त्वात्। कूटस्थासङ्गस्यात्मनः करणस्वापेन वासनाविरहेण च तद्धारक[1] (तद्द्वारक) विषयाकारत्वाभावादेव तदानीं विषयास्फुरणात्, बुद्धिवृत्त्याख्यस्य तदानीमभावेनैवास्फुरणात्, यथाऽग्नेरौष्ण्यसत्त्वेऽपि तृणादिदाह्यासंम्बन्धाददाह इति। असङ्गत्वं चात्मनः "स यत्तत्र पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष" इत्यादिश्रुतेः। न चात्मनि लेपाख्य एव संयोगः प्रतिषिध्यत इत्युक्तं, सत्यम्, तथापि संयोगमात्रं न ज्ञाननियामकं प्रतिबिम्बस्यैव तन्नियामकत्वस्योक्तत्वात्। तथापि तदानीं चैतन्यमस्तीत्यत्र किं प्रमाणमिति चेत् "न द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्, न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येत्",

यथा दीपः प्रकाशात्मा ह्रस्वो वा यदि वा महान्।
ज्ञानात्मानं तथा विद्यात् पुरुषं सर्वजन्तुषु॥

इत्यादिश्रुतिस्मृतिभ्यः। न तु तद्द्वितीयमस्ति संवद्धमित्यर्थः। तथा लाघवतर्कानुगृहीतमनुमानमपि चैतन्यनित्यत्वे प्रमाणं बोध्यम्। अधिकं तु "आभास एव चे" त्यत्र वक्ष्यामः॥

ननु सुषुप्ते चैतन्यवदकर्तृव्यवहारदशायामप्यनभिव्यक्तं कर्तृत्वं स्यात् "न वक्तुर्वक्तेर्विपरिलोपो विद्यत" इत्यादिश्रुतेर्लाघवतर्कस्य च साम्यादित्याशङ्क्याह—

## शक्तिविपर्ययात् ॥३८॥

आमवातजडीकृतस्य गमनादिशक्तिविपर्ययात् सामर्थ्यस्याप्यभावात्, सामर्थ्यसत्त्वे हि कदाचिदभिव्यक्तिरपि स्यात्, इच्छादीनां साधनान्तराणां विद्यमानत्वात्। अतोऽवगम्यते चिच्छक्तिरिव कर्तृत्वशक्तिर्न नियतेति। *ननु कर्मेन्द्रियाणां कृतिलक्षणा वृत्तिरेवात्मकृतिव्यञ्जिकेति वाच्यम्, अत आमवातस्य करणवृत्त्यनुत्पत्त्या आत्मकृत्यनभिव्यक्तिः स्यादिति, मैवम्, कृतिद्वये कल्पनागौरवात्। ज्ञानज्ञेयभावानुरोधेन तु ज्ञानस्य द्वैविध्यं कल्प्यते, वृत्तीनां स्वज्ञेयत्वे कर्मकर्तृविरोधादिति*। "न वक्तुरि" त्यादिश्रुतिस्तु योग्यतापरेति भावः। $वक्तृत्वादियोग्यता च चिद्रूपतयैव सान्निध्यमात्रेण वागिन्द्रियप्रेरकतादीनामेव चित्ते वक्तृतादिरूपत्वात् $। किं च—

## समाध्यभावाच्च ॥३९॥

आत्मनो नित्यकर्तृत्वे समाधेर्व्यापारोपरमस्याभावप्रसङ्गाच्च न नियम इत्यर्थः।

---

[1] 'तद्द्वारक' इत्येव पाठ उ० ह० लि० पु० वर्तते।

* अयं पाठ उ० ह० लि० पु० वर्तते। अयं पा० २ पु० नास्तीति इति मु० शा०।

$ अयं पाठ उ० ह० लि० पु० वर्तते। अयं पा० २ पु० ना० इति मु० शा०।

ज्ञानोपरमो हि विषयासंबन्धादेवोपपद्यते, कर्तृत्वोपरमस्तु विषयसम्बन्धकालेऽपि दृश्यमानो न कर्तृस्वभावत्वे सत्युपपद्यत इति भावः। अभिव्यञ्जकान्तरकल्पने च तस्यैव स्वतः कर्तृत्वमुचितम्। अहं कर्तेत्यादिप्रत्ययानां चाहं गौर इत्यादिभ्रमान्तःपातितया कर्तृत्वाभावबोधकश्रुतिस्मृतिभ्यां बाधिततया च न स्वविषयव्यवस्थापनक्षमतेति। तस्मान्न जीवः कर्तृस्वभावः॥

यदर्थं जीवस्य कर्तृत्वमनित्यमिति व्यवस्थापितं तदिदानीं व्यवस्थापयति। सिद्धे चैवं जीवस्य कर्तृस्वभावत्वाभावे जीवः स्वतः परतश्चाकर्तृकर्तृरूप एष्टव्य इति।

## यथा च तक्षोभयथा ॥४०॥

यथैकरूप एव तक्षा वास्याद्युत्कर्षादिभिरुत्कर्षादिमानुपाधिवशात्, स्वतस्तु परमार्थतस्तद्रहित इत्युभयथा भवति, एवं जीवो बुद्धिकर्तृत्वादेवोपाधिवशात् कर्ता, स्वतस्तु परमार्थतोऽकर्तेत्युभयथा मन्तव्यम्। अन्यथा "अकर्ता चैतन्यं चिन्मात्रं सत् कामादिकं सन एवे" त्यादिश्रुत्या,

प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः।
यः पश्यति तथात्मानमकर्तारं स पश्यति॥

इत्यादिस्मृत्या च कर्तृत्वप्रतिषेधानुपपत्तेरुपाधिधर्मत्वप्रतिपादनानुपपत्तेश्चेत्यर्थः। एवं च सति "तद्गुणसारत्वात् तद्व्यपदेश" इति सूत्रानुसारेणैव "कर्ता शास्त्रार्थवत्त्वात्" इति सूत्रे जीवस्य कर्तृत्वे व्यपदेशः कृत इति मन्तव्यम्, औपाधिककर्तृत्वेनापि शास्त्रार्थवत्त्वोपपत्तेरिति।

केचित्तु यथा च तक्षणो वास्यादिनिमित्तं कर्तृत्वं तद्वियोगे वाऽकर्तृत्वमिति सूत्रार्थः। यद्यपि दृष्टान्ते वास्यादिनिमित्तेन तक्ष्णः कर्तृत्वं स्वत एव भवति न त्वौपाधिकं, दार्ष्टान्तिके तु बुद्धेरेव कर्तृत्वं जीवे समारोपितमित्येवाभिप्रेतमतो वैषम्यं, तथाप्ययं सर्वांशे न दृष्टान्तः, किन्तु उपाधिसंयोगवियोगाभ्यां कर्तृत्वाकर्तृत्वमात्रांशे दृष्टान्त इत्याहुः।

अत्र कालादिभेदात् कर्त्रकर्त्रुभयरूपत्वं तु न सूत्रार्थः, कर्तृत्वप्रतिषेधकश्रुतिस्मृतिविरोधात् निर्विकारत्वश्रुतिविरोधाच्च। "उपलब्धिवदनियम" इत्येनेनैव गतार्थतया सूत्रस्य मन्दप्रयोजनतापत्तेश्च।

ननु निर्विकारत्वश्रुतिर्जन्मादिविकारप्रतिषेधत्वेनोपपादनीयेति चेन्न, *स समानः सन्नुभौ लोकावनुसंचरति ध्यायतीव लेलायतीवे" त्यादि*, "अविनाशि वा अरेऽयमात्माऽनुच्छित्तिधर्मा" इति श्रुत्याऽऽत्मनः कूटस्थताया अपि वक्ष्यमाणत्वात्। "आभास एव चे" त्यत्र तथा कूटस्थनित्यताबोधकस्मृत्यनुमितश्रुतेरपि कूटस्थता जीवानां सिद्धेति नात्मनः कर्तृत्वं तक्षण इव वक्तुं शक्यत इति मन्तव्यम्॥

---

* अयं पाठ उ० ह० लि० पु० वर्तते।

अयं पा० १ पु० ना० इति मु० शा०।

यदेतदुक्तं जीवस्यौपाधिकं कर्तृत्वाणुत्वादिकं यच्चानौपाधिकं तत्त्वं तत्सर्वमीश्वर-पारतन्त्र्येणैव स्यान्न स्वातन्त्र्येणेत्यपरं विशेषमाह—

**परात्तु तत् श्रुतेः ॥४१॥**

तज्जीवस्य कर्तृत्वाणुत्वादिकं परात् परमेश्वरादेव भवति न स्वातन्त्र्येण अश्वस्य विविधसंचार इवाश्वारोहात्, कुतः ? श्रुतेः' "य आत्मानमन्तरो यमयति अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि, एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष उ एवासाधु कर्म कारयति तं यमधो निनीषत" इत्यादिश्रुतेः, "स आत्मानमभिध्यायन् बह्वीः प्रजा असृजत ता अश्मेवाप्रबुद्धा अप्राणाः स्थाणुरिव तिष्ठमाना अपश्यत्, सोऽमन्यतैतासां प्रतिबोधनायाभ्यन्तरं विशामी" त्यादिश्रुति-भ्यश्च। तथा केनोपनिषद्वाक्याच्चेत्यर्थः। यथा केनेषितोपनिषदि परमेश्वरपरी-क्षार्थमागतमग्निं शिवरूपी परमेश्वर आह—'कोऽसी" ति। तदनन्तरमिदमाम्नायते "जातवेदा वा अहमस्मीति"। तस्मिंस्त्वयि किं वीर्यमित्यपीदं सर्वं दहेयमिति। तस्मिंस्तृणं निदधाविति दहेति। तदुपप्रेयाय सर्वजवेन तं न शशाक दग्धुं स तत एव निववृत" इत्यादि। अत्राग्न्यादीनां ब्रह्मणा सह संवादेऽग्न्यादीनां तत्पारतन्त्र्येणैव दग्धृत्वादि न स्वातन्त्र्येणेत्यवधारितम्। तथा,

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥

न केवलं मद्धृदयं स विष्णुराक्रम्य लोकानखिलानवस्थितः।
स मां त्वदादींश्च पितः समस्तान् समस्तचेष्टासु युनक्ति सर्वगः ॥

इत्यादिस्मृतेरपीत्यपि बोध्यम्।

अनेन सूत्रेण कारयितृत्वमेवोक्तं साक्षात्कर्तृत्वं च व्याकरवाणीत्यादिश्रुतिषु सिद्धम्। एतेन जीवस्याप्यात्मा परमेश्वर इत्युपपादितं भवति। यथा देहेन्द्रियादी-नामात्मा जीवः, एवं जीवस्यापि चेतयितृकारयितृतया तदध्यक्ष ईश्वरस्तस्यात्मेति। तथा च श्रुतिरे"ष त आत्मा अन्तर्याम्यमृतः तत्त्वमसी" त्यादिः। चेतयितृत्वं चेत्थं परमेश्वरस्य मन्तव्यम्। सर्वे जीवाः चिच्छक्तिमन्तोऽपि फलोपधानाभावात् प्रलयेऽ-चेतना एव मृतदेहवत्तिष्ठन्ति, तानीश्वरो देहवत् स्वसंकल्पेन योगीव प्रविश्य बुद्धिसंयो-गेन चेतनीकरोतीति। प्रत्यहं चैतत् सुषुप्तावनुमेयम्। "अतः प्रबोधोऽस्मादि" ति सूत्राच्च। तथा जीवस्ताशेषज्ञत्वादपीश्वरस्तस्यात्मा। तथा च श्रुतिः "नान्योऽतोऽस्ति द्रष्टे" त्यादिः। जीवे द्रष्टृत्वफलोपधानस्य कादाचित्कतया वाचारम्भणमात्रत्वं स्वप्न-वदित्यतो नान्योऽतोऽस्ति द्रष्टेति पारमार्थिकात्माभिप्रायेणोक्तम् ॥

ईश्वरस्य कारयितृत्वैषम्यनैर्घृण्यनिरासाय विशेषमाह—

**कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥४२॥**

कृतप्रयत्नापेक्ष एव जीवात्मा परमेश्वरात् कर्त्रादिरूपो भवति। ईश्वरो जीव-

कृतशुभाशुभसापेक्ष एवान्यन् शुभाशुभं कारयतीति यावत् । कुतः ? विहितप्रतिषिद्धयो-रवैयर्थ्यार्थमित्यर्थः । स्वयं हि यद् विहितमाज्ञप्तं वेदमुखेन कर्म, यद्वा प्रतिषिद्धं, तद-ननुसरणे व्यर्थमेव तदुभयं कर्म स्यादिति । अनादित्वाच्च पूर्वपूर्वकर्मानुसरणं सम्भव-तीति भावः । आदिशब्देन चानिर्मोक्षादिप्रसङ्गादयो ग्राह्याः । "वैषम्यनैर्घृण्ये न सापेक्षत्वादि" ति सूत्रेण सुखदुःखादिभोजयितृतया वैषम्यादिप्रसङ्गो निराकृतः, अनेन च सूत्रेण सुखदुःखादिसाधनकर्मकारयितृतया वैषम्यादिकं निराक्रियत इति न पौन-रुक्त्यम् ।

तदेवं जीवस्य नित्यत्वादयो विशेषाः प्रोक्ताः । तत्र चेदमाशङ्क्यते—ननु यदि जीवो नित्यः स्वीकृतः, कथं तर्हि "एतस्मादात्मनः सर्व एत आत्मानो व्युच्च-रन्ति, बह्वीः प्रजाः पुरुषात् संप्रसूता" इत्यादिश्रुत्युक्तं ब्रह्मकार्यत्वं जीवानामुपपद्येत ? न चाकाशान्तःकरणादिवद् बीजाङ्कुरन्यायेन सतामपि विकारलक्षणोत्पत्तिर्जीवानां वक्त-व्येति वाच्यम्, चेतनानामविकारित्वादिति । किं च कर्तृत्वकारयितृत्ववैधर्म्येण जीवे-शयोर्भेदसिद्धेः स्थले स्थले भेदस्य प्रतिपादितत्वाच्च कथं "स एष इह प्रविष्ट आन-खाग्रेभ्यः, स एव मायापरिमोहिता[1]त्म(त्मे)"त्याद्या जीवेश्वराभेदप्रतिपादिकाः श्रुतय उपपद्यन्त इति ? तामिमामाशङ्कां पितापुत्रवदंशांशिभावेन समाधत्ते ॐसमाधातुमी-श्वरस्यांशो जीव इति प्रतिपादयति । तथा विभुत्वादिवदपरोऽपि विशेषो जीवानां श्रूयते, ब्रह्माभेदः स किमखण्डताख्य आहोस्विदंशतारूप इदं च निर्णीयतेॐ—

## अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥४३॥

नित्यत्वादिना सजातीयत्वस्योपपादिततया जीवो ब्रह्मणो अंशः पितुरिव पुत्रः । तथा च पितापुत्रयोरिवाग्निस्फुलिङ्गयोरिव वा विभागेनाभिव्यक्तिलक्षणः कार्यकारण-भाव उपपद्यते ।

उत्पत्तिस्थित्यभिव्यक्तिविकारप्रत्ययाप्तयः ।
वियोगान्यत्वधृतयः कारणं नवधा स्मृतम् ॥

इति पातञ्जलभाष्ये व्यासदेवैरभिव्यक्तिरूपाया अपि कार्यताया उक्तत्वादिति । अभि-व्यक्तिश्चात्र स्वव्यापारारूढता । अंशत्वे श्रुत्यन्यथानुपपत्तिं प्रमाणयति—नानेत्या-दिना । तत्रादौ अंशत्वं विनाऽत्यन्तमभेदे भेदे वाऽभ्युपगम्यमाने भेदाभेदवाक्ययोरेक-तरव्याघातः स्यादित्याह—नानाव्यपदेशादन्यथा चेति दलद्वयेन । तत्र चेतनानां नाना-व्यपदेशो यथा, "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्, द्वा सुपर्णे" त्यादि । अन्यथा चेति अनानात्वेन च व्यपदेशो यथा—"स ब्रह्मा स शिवो, मनसैवानुद्रष्टव्यं नेह नानास्ति किंचन, एकधैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवं विरजः पर आकाशादज आत्मा महान् ध्रुव" इत्यादि शतशः ।

---

१ 'त्मेत्याद्या' इत्येव पाठ उ० ह० लि० पु० वर्तते ।

ॐ अयं पाठ उ० ह० लि० पु० नास्ति ।

अयं पा० १ पु० नास्तीति इति मु० ग्रा० ।

ननु लाघवतर्कसहकारेण बलव[1]त्यभेदश्रुतिमखण्डताबोधनेन बाध्यतां तत्कथं भेदाभेदौ संभवेतामित्याशङ्क्यांशत्वं विना श्रुत्यन्तरानुपपत्तिमप्याह—अपीत्यादिना। एके शाखिनो दाशकितवादिरूपत्वमपि ब्रह्मणोऽधीयते च "ब्रह्मदाशा ब्रह्मदासा ब्रह्मेमे कितवा, उत त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतो मुख" इत्यादिभिरित्यर्थः। दाशाः कैवर्ताः, दासा भृत्याः, कितवा धूर्ता इति विशिष्य निकृष्टजीवाभेदवाक्यानि सर्वत्र न सन्तीत्याशयेनैक इत्युक्तम्।

एतदुक्तं भवति—भेदाभेदाभ्यामंशत्वमेव शास्त्रार्था नाखण्डत्वं, यत आथर्वणिकानां श्वेताश्वतराणां ब्रह्मस्तवो 'ब्रह्मदाशा' इत्युदाहृतवाक्यद्वये प्रतीयते। स वाऽऽयं[2] (चायं) स्तवः कैवर्तभृत्यधूर्ता आदि[3] (धूर्तादि)भिर्ब्रह्मणोऽखण्डत्वेन नोपपद्यते प्रत्युत निन्दैव स्यात्। अतः स्तुतित्वोपपत्तये कार्यकारणाद्यविभागलक्षणाभेदपरमेव यथोक्तनिकृष्टजीवाभेदवाक्यम्, "आत्मा वै जायते पुत्र" इत्यादिवत्, नाखण्डतापरमित्यभ्युपेयम्। तदेकवाक्यतया च "स ब्रह्मा स शिवः सेन्द्रः, सोऽक्षरः परमः स्वराट्। स एव विष्णुः स प्राणः, स कालोऽग्निः स चन्द्रमाः ।। स एष इह प्रविष्ट" इत्यादीन्यपि वाक्यानि विभूतिभिः सह कार्यकारणाद्यभेदमेव बोधयन्ति नत्वखण्डत्वमिति।

केचित्तु—अन्यथा वापीत्यादिः जीवसामन्याभेदोपपादनायैक एव हेतुरिति, तत्र (तन्न), तदा हि दाशकितवादिविशेषवचनं तदर्थं 'चैक' इति शाखिविशेषोपादानं व्यर्थं स्यात्। सर्वास्वेव शाखासु सकलजीवाभेदस्य ब्रह्मणि स्फुटं गीयमानत्वात्।

ननु विरुद्धौ भेदाभेदौ कथमेकत्र संभवेतामिति चेन्न, अन्योन्याभावलक्षणभेदस्याविभागलक्षणेनाभेदेनाविरोधात्। विभागाविभागरूपयोरपि भेदाभेदयोः कालभेदेन व्यवहारपरमार्थभेदेन चाविरोधाच्च। न चायमभेदो गौण इति वाच्यम्, "लवणं जलमभूत्, दुग्धं जलमभूत्, "यत्र त्वस्य सर्वमात्मैवाभूत्, आप एवेदमग्र आसुः, वायुर्भूत्वा धूमो भवति" इत्यादिलोकवेदयोः प्रयोगबाहुल्येनाविभागस्यापि मुख्याभेदत्वात्, भिदिर् विदारण इत्यनुशासनाच्च।

परमात्मा जगद्रूपी सर्वसाक्षी निरञ्जनः।
भिन्नाभिन्नस्वरूपेण स्थितोऽसौ परमेश्वरः ।।

इत्यादिस्मृतिशतादपि भेदाभेदविरोधो[4](ऽ) प्रामाणिक इति।

ननु भवतु भेदाभेदयोरविरोधः, तथाप्यंशत्वं न संभवति जीवे मुख्यं ब्रह्मणो

---

[1] एवमेव पाठ उ० ह० लि० पु० अपि वर्तते।
'अभेदश्रुति रखण्डताबोधने न' इति पाठो भाति।
[2] 'स वायं' इति उ० ह० लि० पु० पाठः।
[3] 'धूर्त्ता' इति उ० ह० लि० पु० पाठः।
[4] 'प्रामाणिक' इत्येव पाठ उ० ह० लि० पु० वर्तते। किन्तु खण्डाकार उचितः।

निरवयवत्वादिति चेन्न, अंशत्वं हि सजातीयत्वे सति[1] कदाचिदविभक्तत्वमेव वाच्यम्। अन्यथा पुत्रचेतने पितृचेतनांशव्यवहारानुपपत्तेः। विभागश्च लक्षणान्यत्वम् अभिव्यक्तधर्मभेद इति यावत्। ईदृशश्चांशो निरवयवस्यापि संभवति। या च अंशो भागः पाद इति पर्यायप्रसिद्धिस्तस्या[2] अप्ययमेवार्थः। यथोक्तमंशत्वमेव त्ववयवसाधारणमिति। $यदि चावयवत्वमेवांशत्वमिष्यते तथापि सजातीयाविभक्तत्वगुणेनैव जीवे अंशशब्दो गौणो युक्तो न तु घटाकाशादिवत् प्रका[3]रान्तरेण गौणः, भेदग्राहकश्रुत्यादिबलेनाग्निस्फुलिङ्गादिदृष्टान्तानामेवादर्तव्यत्वादिति$।

अस्य च सूत्रस्य पितापुत्राग्निस्फुलिङ्गादिवदेवांशत्वमर्थो न तु गौणं गगनस्य घटाकाश इवांशत्वमिति व्यासशिष्यवैशम्पायनवाक्यादवधारणीयं मुमुक्षुभिः। यथा मोक्षधर्मे—

> बहव पुरुषा राजन्नुताहो एक एव तु।
> को ह्यत्र पुरुषः श्रेष्ठः को वा योनिरिहोच्यते ॥

इति प्रश्नत्रयस्य प्रत्युत्तरे वैशम्पायनवाक्यम्—

> बहवः पुरुषाः राजन् सांख्ययोगविचारिणाम्।
> नैवमिच्छन्ति पुरुषमेकं कुरुकुलोद्वह ॥
> संक्षेपतस्तु यद्व्यासः पुरुषैकत्वमुक्तवान्।
> तत्राहं सम्प्रवक्ष्यामि प्रसादादमितौजसः ॥
> बहूनां पुरुषाणां हि यथैका योनिरिष्यते।
> तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम् ॥

इति। अस्यार्थः—विशेषविचारतः सांख्ययोगयोश्चेतनबहुत्वमेव सिद्धम्। यत्र व्यासो विशेषविचारं विना संक्षेपतः समासतो जीवानां ब्रह्मणि प्रवेशतश्चेतनैकत्वं प्रोक्तवांस्तदनन्यत्वमारम्भणशब्दादिभ्य इत्यादौ तत्तुभ्यं तच्छिष्योऽहं वक्ष्यामि। तदेव व्याख्यायते—यथा बहूनां पुत्रादिचेतनानामंशानामेकः पितृचेतनो अंशी योनिरेकैव भवति, अविभागात्, तथैव तमेकमेव कारणं ब्रह्मपुरुषं पश्चाद् विवेचयिष्यामीति। अत्र बहूनामित्याद्येकश्लोकेनैव प्रश्नत्रयस्योत्तरं दत्तम्। ततश्च प्रकरणशेषे पुरुषबहुत्वमेवोपसंहरता सिद्धान्तितम्—

> एवं बहुविधः प्रोक्तः पुरुषस्ते यथाक्रमम्।
> तत्र यः परमात्मा हि स नित्यं निर्गुणः स्मृतः ॥ इति।

---

[1] अयं पाठ उ० ह० लि० पु० वर्तते।
विभागाविभागयोग्यत्वमिति २ पु० पा० इति मु० शा०।

[2] 'प्रसिद्धिस्तस्ये'ति मु० पु० पाठोऽयुक्तः।

$ अयं पाठ उ० ह० लि० पु० वर्तते।
अयं पा० २ पु० ना० इति मु० शा०।

[3] 'प्रकाशान्तरेणे'ति उ० ह० लि० पु०, मु० पु० च पाठः, सचासम्यक्।

$नन्वेमखण्डैकात्म्यश्रुतिविरोध इति चेन्न, तत्त्वतो जीवानामप्यात्मत्वबोधने-नैवाखण्डस्यैकस्य ब्रह्मण आत्मतया श्रुतिस्मृत्योरुक्तत्वात्$ ।

तथा चैतस्माद् वाक्यात् पितापुत्रवदंशांशिभाव एव व्यासाभिप्रेत इति स्पष्टम् ।

आधुनिकास्तु घटाकाशवदंशत्वं वदन्ति, तत्र (तन्न), अंशशब्दस्य गौणत्वापत्तेः। न च विष्ण्वादिदेवतायाः कृष्णाद्यवतारेष्वंशशब्दप्रयोगबाहुल्यादिदं गौणत्वं न दोषायेति वाच्यम्, तत्र बाधकाभावेनात्माखण्डतायां लाघवेन च तत्सिद्धौ गौणांशताया ग्रहणात्, उपाध्योरंशांशिभावेनौपाधिकांशताया वा विवक्षितत्वात् । ब्रह्मजीवयोस्तु भेदग्राहकश्रुतिविरोधेनाखण्डताया एवासिद्धेरौपाधिकं गौणं चांशत्वमन्याय्यमसंभवि चेति ।

*किं च

एकः शुद्धोऽक्षरो नित्यं सर्वव्यापि तथा पुमान् ।
सोऽप्यंशः सर्वभूतस्य मैत्रेय परमात्मनः ॥

इति विष्णुपुराणे विभोरपि जीवस्याकाशमण्डलकल्पब्रह्मांशत्वलाभात् घटाकाशावच्छिन्नतामात्रेणांशत्वमिति* ।

स्यादेतत्, अविभागलक्षणाभेदा (द) प्रतिपादने प्रयोजनाभावादखण्डताप्रतिपादने च जीवस्यासंसारित्वावगमसम्भवादखण्डतापराण्येवाभेदवाक्यानि भवन्ति, प्रयोजनाभावेन भेदनिन्दाश्रवणेन च दुर्बलतया भेदवाक्यानामनुवादमात्रत्वान्न तद्विरोधः। लाघवतर्कानुग्रहादपि चाभेदवाक्यानामखण्डतापरत्वमेव न्याय्यमिति । ततो न पितापुत्रवद् भेदेनांशांशिभावो वेदान्तार्थ इति ।

अत्रोच्यते—अविभागलक्षणाभेदप्रतिपादनमेव जीवपर्यन्ताभिमाननिवर्तकब्रह्मात्मताज्ञानहेतुतया महाप्रयोजनं न त्वखण्डताप्रतिपादनं घटाकाशवदंशताप्रतिपादनं च । अखण्डताज्ञानेऽप्यवच्छेदभेदेन संसारासंसारयोः सम्भवेनाभिमानानिवर्तकत्वात्, ब्रह्मप्रकरणे जीवासंसारित्वप्रतिपादनपरत्वे वाक्यभेदापत्तेश्च । न चोपासनार्थं तत्प्रतिपादनं स्यादिति वाच्यम्, एवं सति तात्पर्यविषयस्योपासनस्यास्मदुक्तांशांश्यभेदेनैवोपपत्तौ न श्रुतिस्मृतिन्यायविरुद्धाखण्डतापरत्वं सम्भवति । तदेतद् विस्तारितं पञ्चसूत्र्याम् ।

यच्चोक्तं भेदप्रतिपादनं निष्फलत्वादनुवादमात्रमिति, तदपि न, भेदधियो ब्रह्मण्यौपाधिकसंसारित्वदुःखभोक्तृत्वादिदोषनिवृत्त्यवगतिफलकत्वात्, ब्रह्मात्मताज्ञानहेतुत्वाच्च । अत्यन्ताभेदे ह्यात्मात्मीयभावासंभवात् । यो हि यस्माद् भिन्नो भवति स एव तस्यात्मा लोके दृश्यते, यथा बुद्धेः पुरुष इति । कथं वा प्रमाणान्तरानधिगतस्य ब्रह्मणो जीवेन सह भेदो वेदान्तैरनूद्येत ? न च वेदान्ताधिगते सर्वज्ञादिरूपे ब्रह्मणि विरुद्धधर्मासंबन्धाद् भेदोऽनुमातुं शक्यत इति वाच्यम्, अवच्छेदभेदेनाविरोधसम्भ-

$ अयं पा० १ पु० ना० इति मु० शा० ।
अयं पाठ उ० ह० लि० पु० वर्तते ।
* अयं पा० २ पु० ना० इति मु० शा० ।

वात् । प्रत्युत लाघवतर्केणाभेदस्यैवानुमातुं योग्यत्वादिति । भेदनिन्दावाक्यानि च प्रकरणभेदाद् विभागवैधर्म्यादिलक्षणभेदपराण्येव, पूर्वापरालोचनया तथैवावगमात् । अविभागादिलक्षणाभेदस्यैव वेदान्तार्थतया तद्विपरीतस्यैव निन्दार्हत्वाच्च । भिदिर् विदारण इत्यनुशासनेन विभागस्यापि मुख्यभेदत्वात् ।

यच्चोक्तं लाघवादखण्डैकात्म्यमिति, तन्न, 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" इति श्रौतविभागानुपपत्त्या "य एतद् विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ती" त्यादि श्रौतबन्धमोक्षव्यवस्थानुपपत्त्या चात्मभेदगौरवमेव ह्यङ्गीकर्तव्यं बुधानां न तु लाघवमिति दिक् । एतदन्यच्च सर्वं पञ्चसूत्र्यामतिविस्तरेण करामलकवत् प्रतिपादितमस्माभिरिति । "आकाशमेकं हि यथे" त्येवंविधवाक्यजातं च तत्रैव व्याख्यातं ग्रन्थबाहुल्यभयात् नेह पुनः प्रस्तूयते । तस्मात् पितापुत्रवदग्निस्फुलिङ्गसूर्यतत्किरणादिवच्चैव ब्रह्मजीवयोरंशांशिभावो मन्तव्यः । तथा च श्रुतिः "यथा सुदीप्तात् पावकात् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपास्तथाक्षराद् विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ती" त्यादिरिति ।

तथा चांशांशिभावेन ब्रह्मजीवयोर्हेतुहेतुमद्भावो जीवानामात्मा ब्रह्मेति च सिद्धम् । सूर्यांशानां चक्षुरादीनां सूर्यादिकार्यत्वसूर्याद्यात्मकत्वयोः श्रुत्यादिषु दर्शनादिति ॥

न केवलं भेदाभेदान्यथानुपपत्त्यैवांशत्वं कल्प्यते, अपि तु साक्षात् श्रुतेरपीत्याह--

**मन्त्रवर्णात् ॥४४॥**

"एतावानस्य महिमा ततो ज्यायांश्च पुरुषः ।
पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि ॥
मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत ॥"

इत्यादिमन्त्रवर्णेभ्योऽपि जीवो ब्रह्मांश इत्यर्थः । पादो भागोऽवयवो अंश इत्येकपर्यायः । तथा मैत्रेयोपनिषदि अंशशब्द एवास्ति, यथा,—तत् सत्त्वमेवेरितं रसः सम्प्रास्रवत् तत्सांशोऽयं यश्चे[1]ता(तो)मात्रः प्रतिपुरुषं क्षेत्रज्ञः संकल्पाध्यवसायलिङ्गः प्रजापतिः तस्य प्रोक्ता अग्र्यास्तनवो ब्रह्मा रुद्रो विष्णुरि" त्यादिषु । ईश्वरेण प्रेरितं योनिस्थानीयं सत्त्वं लक्षीकृत्य शुक्रस्थानीयो रसो जीवः क्षरितः तत्तस्मात् स रस ईश्वरांश इत्यर्थः । ※सांश इति विसर्जनीयलोपे पुनः सन्धिश्छान्दसः※ ॥

**अपि च स्मर्यते ॥४५॥**

---

[1] चेतामात्र इति पाठः उ० ह० लि० पु० वर्तते ।

※ अयं पाठ उ० ह० लि० पु० वर्तते ।

अयं पाठः २ पु० ना० इति मु० शा० ।

स्मर्यतेऽपि ब्रह्मांशो जीव इति—

एकः शुद्धोऽक्षरो नित्यः सर्वव्यापी तथा पुमान् ।
सोऽप्यंशः सर्वभूतस्य मैत्रेय परमात्मनः ॥
ममैवांशो जीवलोके जीवभूतः सनातनः ।
अव्यक्तरूपो भगवान् शतशोऽथ सहस्रशः ॥
कोटिशश्च करोत्येव प्रत्यगात्मानमात्मना ।
यथा दीपसहस्राणि दीपान्मर्त्याः प्रकुर्वते ॥
प्रकृतिस्तथा विकुरुते पुरुषस्य गुणान् बहून् ॥

इति विष्णुपुराणगीतामोक्षधर्मादिष्वित्यर्थः । एक इति समष्टौ व्यष्टीनामविभागाद् बोध्यम् । गुणानंशानित्यर्थः ।

नन्वेवमंशांशिनोरैकरूप्यस्य लोके दर्शनात् "तस्मादेकाकी बिभेती" त्यादि-श्रुत्या हिरण्यगर्भांशेषु[1] भयेन हिरण्यगर्भस्य भयानुमापनाच्च परमात्मापि स्वांशजीववत् संसारी स्यादित्याशङ्कामपाकरोति—

## प्रकाशादिवन्नैवं परः ॥४६॥

अंशित्वेऽपि परः कारणं ब्रह्म एवं जीववन्न भवति प्रकाशादिवत् । यथा प्रकाश-श्चालोकः आकाशवाय्वादयश्चांशिनश्चक्षुःश्रोत्रत्वगादीनां स्वांशानामुपघातादिदोषवत्त्वे-ऽपि नोपहताः कदापि भवन्ति तथैवेत्यर्थः । तदुक्तं श्रुत्या—"सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः । एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः ॥" इति । पितापुत्रहिरण्यगर्भतदंशयोश्च द्वयोरेवोपाधिदोषसाम्यादौपाधिक-दोषादीनां साम्यं दृश्यते, ईश्वरोपाधेस्तु निर्दोषत्वात् कथं दोषसाम्यं स्यात् ? यथा गोलकेषु तिमिरादिदोषेऽपि सूर्यादिरूपाणां प्रकाशानां मण्डलेषु नित्यनिर्दोषत्वाच्चक्षु-रादिभिर्नोपघातसाम्यमिति भावः ।

ये त्वखण्डैकात्म्येन घटाकाशवदंशत्वं मन्यन्ते तेषामेवायं दोषः स्यात् । उपाधि-भेदेऽपि कायव्यूहवत् सर्वोपाधिभिरेकत्रैवात्मनि विविधानामौपाधिकव्यावहारिकसंसा-राणां ब्रह्मणापि दुष्परिहरत्वादिति । ‡न च पृथगुपाधिविशिष्टयोर्जीवेश्वरत्वे शक्येते वक्तुम्, अशांशिभावानुपपत्तेर्लक्षणापत्तेर्वा‡ ।

स्मरन्ति च परमात्मा नैवंरूप इति—

## स्मरन्ति च ॥४७॥

---

[1] हिरण्यगर्भवद् भयादिश्रवणाच्चेति १ पु० पा० इति मु० शा० ।
अयं पाठ उ० ह० लि० पु० नास्ति ।
‡ अयं पाठ उ० ह० लि० पु० वर्तते ।
अयं पा० २ पु० ना० इति मु० शा० ।

व्यासादयो भारतादिषु—

अशरीरः शरीरेषु सर्वेषु निवसत्यसौ ।
वसन्नपि शरीरेषु न स लिप्यति कर्मभिः ॥
कर्मात्मा पुरुषो योऽसौ बन्धमोक्षैः स युज्यते ।
स सप्तदशकेनापि राशिना युज्यते पुनः ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥

इत्यादिना । $चकारेण "न तस्य कार्यं करणं च विद्यते" इत्यादिश्रुतयः समुच्चीयन्ते$ ॥

नन्वेवमंशांशिभावतो मा भवत्वीश्वरे संसाराद्याशङ्का जीवस्य तु संसारो नोपपद्यते । न हि महाराजपुत्रस्य दैन्यादिकं सूर्यांशकिरणस्य वा शैत्यादिकं दृष्टम्, अंशिस्वरूपताया एवांशस्यौचित्यादित्याशङ्कां समाधत्ते—

## अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॥४८॥

सत्यमंशिसरूपा एवांशा भवन्ति, जीवेऽपि कर्तृत्वादिप्रमुखसंसारस्य "आभास एवे" त्यादिसूत्रैर्निराकरिष्यमाणत्वात् । यौ पुनर्जीवेष्वेवंरूपत्वस्य संसारस्यानुज्ञा अनुमतिरनुवाद इति यावत्, ब्रह्मणि च तत्परिहारः श्रुतिषु वर्तेते—"न लिप्यते लोकदुःखेन बाह्य" इत्यादिषु, तावंशिनो ब्रह्मणो अंशतो देहसम्बन्धादुपाधिसंबन्धादेव ज्योतिरादिवत् । यथा ज्योतिःसामान्यस्यांशतश्चन्द्रसण्डलसंबन्धाच्छैत्यानुज्ञा महाभूताख्येव(च)[1] कारणतेजसि तत्परिहारो, यथा वा जलादीनामंशतः पृथिव्यादिसंबन्धात् कटुत्वाद्यनुज्ञा महाजलादौ च कारणे तत्परिहार एव इत्यर्थः ।

§नन्वेवमप्यंशिगतैश्वर्याभावेन न साहृप्यमिति चेन्न, "त इमे सत्याः कामा अनृतापिधाना" इत्यादिश्रुतिभिर्जीवेऽप्यविद्यावृत्तैश्वर्यवचनात्, अन्यथा असदनुत्पत्त्या हिरण्यगर्भभावेऽप्यैश्वर्य(र्या) सम्भवात्, वस्तुतस्तु§ *नन्वेवमप्युपाधिविगमे मोक्षदशायां जीवानामंशिभावादंशिगतैश्वर्य्यमेवाभिव्यज्येतेति नात्यन्तिकलयः सम्भवतीति

$ अयं पाठ उ० ह० लि० पु० वर्तते ।
अयं पा० २ पु० ना० इति मु० शा० ।

१ 'खथेव' इत्येकस्मिन् ह० लि० पु० पाठः ।
खये च इत्यन्यस्मिन् ह० लि० पु० पाठः ।

§ अयं पाठ उ० ह० लि० पु० वर्तते । किन्तु एकस्मिन् 'ऐश्वर्यसम्भवात्' इति पाठः, अन्यस्मिंस्तु 'ऐश्वर्यासंभवादि'ति पाठो युक्तः ।
अयं पा० १ पु० ना० इति मु० शा० ।

* अयं पाठः उ० ह० लि० पु० नास्ति । एतत्स्थाने "वस्तुतस्तु ऐश्वर्याभाव एव सारूप्यं स्यात्" इति उ० ह० लि० पु० पाठः ।
अयं पा० १ पु० ना० इति मु० शा ।

चेन्न* ऐश्वर्यस्यौपाधिकतया अंशिकुक्षावप्रवेशात्। चिन्मात्ररूपस्य हि जीवस्य ब्रह्मचिन्मात्रमेवांशी भवति "चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिरि" ति वक्ष्यमाणसूत्रात्। तथा वां (चां) शिसारूप्यमैश्वर्यसत्त्व एव जीवानां भवतीति नोक्तदोषावकाशः। तथा च सांख्यसूत्रम् "समाधिसुषुप्तिमोक्षेषु ब्रह्मरूपते" ति। तन्मात्रेण तदात्मकत्वादिब्रह्मरूपता च सांख्यमते पूर्णता औपाधिकपरिच्छेदविगम इति यावत्। अस्माकं तु ब्रह्मसारूप्यं केवलचिन्मात्रस्यैवैश्वर्योपलक्षितस्य ब्रह्मशब्दार्थतेति जन्मादिसूत्रे प्रतिपादितत्वात्।

इदानीमंशत्वबाधकस्य स्वाभाविकस्य ब्रह्मवैरूप्यस्य निराकरणाय जीवस्यापि ब्रह्मवदसङ्ग[1]त्व(त्वं) चिन्मात्रत्वं च क्रमेण सूत्रद्वयेनाह—

## असन्ततेश्चाव्यतिकरः ॥४९॥

स च जीवोऽव्यतिकरः नास्ति व्यतिकरो व्यतिसङ्गः सम्बन्धविशेषो लेपाख्यो यत्रेत्यव्यतिकरोऽसङ्ग इत्यर्थः, "अथ व्यतिकरः पुंसि व्यसनव्यतिषङ्गयोरि" ति कोषात्। असङ्गत्वे हेतुमाह—असन्ततेरिति। सन्ततिः कार्यं विकार इति। अविकारित्वादित्यर्थः। सङ्गे हि विकारित्वं स्यादिति भावः। अविकारित्वं च ‡स समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव‡ "अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा" इत्यादिश्रुतेः। नास्त्युच्छित्तिर्यस्य सोऽनुच्छित्तिस्तादृशो धर्मो यस्य स, अविनाशिधर्मेत्यर्थः। अन्यथा अविनाशीत्यनेन पौनरुक्त्यापत्तेः।

❀यद्यपि संयोगादयो धर्मा जीवेऽप्यनित्याः सामान्यगुणातिरिक्ताश्च धर्मा न सन्ति, तथापि राहोःशिर इतिवत् चैतन्यस्यात्मधर्मत्वविवक्षयेदमुक्तम्❀।

असङ्गत्वे त्वियं श्रुतिः "स यत्तत्र पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष" इति। अयं भावः-आत्मा चैतन्यस्वरूप इत्युत्तरसूत्रेण वक्ष्यामः। तथा च यद्यात्मनि पदार्थसङ्गः स्यात् तदा सर्वपदार्थानामात्मनि विभौ नित्यं सङ्गः सदा सर्वं भासेत। अतः सङ्गानुपपत्तिः। पदार्थभानन्तूपाधिद्वारा प्रतिबिम्बादित्युक्तं शास्त्रयोनित्वादित्यत्र।

नन्वेवमात्मनोऽसङ्गत्वे कथं प्रकृतिपुरुषसंयोगात् स्मर्यमाणा सृष्टिरुपपद्येतेति चेन्न, ज्ञानादिहेतोरेव सम्बन्धविशेषस्यात्मनि सङ्गशब्देन प्रतिषेधात्, न तु गगनवाय्वादिवत् संयोगस्य विकाराजनकस्येति विशेषादिति ॥

*ननु विभुनित्यादिरूपो जीवोऽपि चेदात्मा तर्हि "नान्योऽतोऽस्ति द्रष्टा, एक एव

---

१ "त्व" इत्येव पाठ उ० ह० लि० पु० वर्तते।

‡ अयं पाठ उ० ह० लि० पु० वर्तते।

अयं पा० २ पु० ना० इति मु० शा०।

❀ अयं पाठ उ० ह० लि० पु० वर्तते।

अयं पा० १ पु० ना० इति मु० शा०।

हि भूतात्मा भूते भूते व्यवस्थितः एकधा बहुधा चैव दृश्यते जलचन्द्रवत्, तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथे" त्यादिश्रुत्युक्तस्य परमात्मत्वस्य विरोध इत्याशङ्कां परिहरति—

## आभास एव च ॥५०॥

आत्मेत्युपक्रान्तत्वात् आत्माभास एव च प्रकृतः। आत्मा जीवः हेत्वाभास इवेत्यर्थः। जीवानां च पारमार्थिकात्मत्वाभावो "जन्माद्यस्य यत" इति सूत्रे व्याख्यातः। अथवा जीवस्य किं स्वरूपमित्याकाङ्क्षायामाह*—आभास एव च।

स च जीवो ब्रह्मवदाभासमानः प्रकाशमात्रश्चिन्मात्र इत्यर्थः। आभासशब्दश्च रूढिभ्यां[1] (योगरूढिभ्यां) प्रकाशशब्दतुल्यार्थः। "सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम्" इति गीतादौ "न तत्स्वाभासमि" ति योगसूत्रादौ च प्रकाशवाचित्वदर्शनादिति। तथा च जीवो निर्विकारत्वादसङ्गत्वाच्चिन्मात्रत्वाच्च निर्विकारासङ्गचिन्मात्रब्रह्मणो अंशः सूर्यादीनामिव किरणादाविति (दिरिति) भावः। तत्र चिन्मात्रत्वे श्रुतयः "स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन, एवं चेतामात्रः प्रतिपुरुषं क्षेत्रज्ञः संकल्पाध्यवसायलिङ्गः प्रत्यगस्थूलोऽचक्षुरप्राणोऽमनाऽकर्ता चैतन्यं चिन्मात्रं सदित्यादयः। स्मृतयश्च—

यथा दीपः प्रकाशात्मा ह्रस्वो वा यदि वा महान्।
ज्ञानात्मानं तथा विद्यात् पुरुषं सर्वजन्तुषु॥
ज्ञानमेव परं ब्रह्म ज्ञानं बन्धाय चे(वे)ष्यते[2]।
ज्ञानात्मकमिदं विश्वं न ज्ञानाद् विद्यते परम्॥

$इत्यादयः। ज्ञानं बन्धाय वेष्यत इति ज्ञानमेव जीव इत्यर्थः। सूत्राणि च वेदान्तसांख्ययोगेषु "चिति तन्मात्रेण तदात्मकत्वात्, जडप्रकाशयोगात् प्रकाशः, द्रष्टा दृशिमात्र" इति। $तथा "कामादिकं मन एव सर्वेषां संकल्पानां मन एकायनम्, अन्तःकरणजं दुःखं पारक्यं मम तत् कथमि" ति श्रुतिस्मृतिभिः कामाद्यखिलविकाराणामुपाधिधर्मत्वकथनेनाप्यात्मनो ज्ञानमात्रत्वं सिध्यति $। तथा लाघवतर्कादपि ज्ञानस्वरूप एवात्मा, अग्न्यौष्ण्यवद् व्यभिचारादर्शनादिति मन्तव्यम्।

ननु जीवानां ज्ञानस्य सुषुप्त्यादौ व्यभिचार इति। न च "यद्वै तन्न पश्यति

---

* अयं पाठ उ० ह० लि० पु० वर्तते।
अयं पा० २ पु० ना० इति मु० शा०।

१ 'योगरूढिभ्याम्' इति उ० ह० लि० पु० पाठः।

२ 'वेध्यते' इत्येकस्मिन् ह० लि० पु० पाठः।
'चेध्यते' इत्यन्यस्मिन् ह० लि० पु० पाठः।

$ अयं पाठ उ० ह० लि० पु० वर्तते।
अयं पा० २ पु० ना० इति मु० शा०।

पश्यन् वै तन्न पश्यति, न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत" इत्यादिश्रुतेः सुषुप्तेऽपि स्वरूपज्ञानं सेत्स्यतीति वाच्यम्, तद्वाक्यस्य शक्तिसत्तामात्रपरत्वात्। अन्यथा "यद्वै तन्न वदति वदन् वै तन्न वदति, न हि वक्तुर्वक्तेर्विपरिलोपो विद्यत" इत्यादिवाक्यैस्तत्सहपठितैर्वदनादीनामप्यात्मस्वरूपतापत्तेः। सुषुप्त्यादौ वचनादिसत्तायाः केनाप्यनभ्युपगमादिति। मैवम्—एवमपि "अविनाशी वाऽरेऽयमात्माऽनुच्छित्तिधर्मे" त्यादिश्रुतिभिर्धर्मोच्छेदप्रतिषेधेन ज्ञाननित्यत्वसिद्धेः। किं च बुद्धिवृत्त्यभावे[1] चेतने सुषुप्त्यादौ विषयसम्बन्धाभावादेव विषयाज्ञानोपपत्त्या तदानीं ज्ञानाभावे प्रमाणाभावात् चैतन्यनित्यत्वमेव लाघवादनुमीयते। व्यभिचारसंशयस्य च नित्यत्वात्माभेदग्राहकलाघवतर्कसत्त्वेनानवकाशात्। न च विषयवासनावत्त्वाद् विषयसम्बन्धस्तदानीमप्यस्तीति वाच्यम्, "स यत्र किंचित् पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष" इत्यादिश्रुत्याऽऽत्मनो वासनालेपादिपर्यायस्य सङ्गस्य प्रतिषेधात्। अन्तःकरणस्य च वासनाधारस्य तदानीं विलयात्।

अथैवं ज्ञानस्य नित्यत्वे घटज्ञानं नष्टं, पटज्ञानं जातं, कुड्यज्ञानं भविष्यतीत्यादिषूह्यमानो[2] प्रपद्येरन्निति चेन्न, गुहाकूर्पशिख्यादीनां विनाशादप्रत्ययवद् विशेषणनाशेनापपत्तेः। विशेषणं च विषयतासम्बन्धेन घटादिः, घटादौ च विषयता आत्मप्रतिबिम्बितबुद्धिवृत्तिव्याप्यत्वमिति। अथ तथापि जानामीत्याधाराधेयप्रत्ययानुपपत्तिर्ज्ञानात्मनोर्भेदाभावादिति चेन्न, केवलज्ञानस्य लौकिकप्रत्यक्षागोचरत्वात्। आकाशे श्रोत्रमित्यादिप्रत्ययवदात्मनि घटज्ञानमित्याधाराधेयताप्रत्ययोपपत्तेः, अन्यथा श्रोत्राकाशस्यापि महाकाशादतिरिक्ततापत्तेः।

नन्वेवं कामसंकल्पादिकं मन एवेति श्रवणादन्तःकरणमपि कामादिस्वरूपमेव लाघवादस्तु न तु कामादिधर्मकमिति चेन्न, कामक्रोधादिवृत्तीनां कालभेदर्शनादेकात्मतानुपपत्त्या तेषामन्योन्यं भिन्नानामेकान्तःकरणरूपतानुपपत्तेरिति। तस्मादखण्डं प्रतिपुरुषमेकैकमेव नित्यं 'वस्तु गगनस्य गुहा राहोः शिरः' इत्यादिवद् धर्मधर्मिभावेन कल्प्यमानं ज्ञानमिति ज्ञातेति चोच्यते, नास्त्यत्र गुणगुणिभावः,

> ज्ञान नैवात्मनो धर्मो न गुणो वा कथञ्चन।
> ज्ञानस्वरूप एवात्मा नित्यः सर्वगतः शिवः॥

इत्यादित्यपुराणात् निर्गुणत्वाच्च। "न चिद्धर्मे" ति सांख्यसूत्रात् लाघवाच्च। अन्यो-

---

[1] मुद्रितसमानः पाठः उ० ह० लि० पु० वर्तते।
'बुद्धितमःप्रतिबिम्बेनावृतं' इति १ पु० पा० इति मु० शा०।

[2] यथामुद्रितं पाठ एकस्मिन् ह० लि० पु० वर्तते।
अन्यस्मिंस्तु किञ्चिद् विलक्षणः "इत्यादि प्रत्यया नोपपद्येरन्निति" इति पाठ इव प्रतीयते, स च साधुः।
'भविष्यतीति प्रत्यया नोपपद्येरन्' इति १ पु० पा० इति मु० शा०।

ष्ण्यदृष्टान्ता[1]भावादेवोच्यते। न पुनः सोऽप्यत्र सर्वांशे दृष्टान्तः, चक्षुषा औष्ण्य[2] (ष्ण्या) ग्रहणेऽप्यग्निग्रहणेन तत्र भेदाभेदयोः सत्त्वात्, ज्ञानात्मनोस्त्वखण्डत्वादिति। नैयायिकवैशेषिकौ तु यथोक्तवस्तुनि विषयाकारवद्बुद्धिवृत्तिप्रतिबिम्बमेवास्मदभिप्रेतं ज्ञानशब्देन परिभाष्य तस्यात्मधर्मत्वमनित्यत्वं बहुत्वादिकं चाहतुरिति[3] विवेक्तव्यम्। प्रकृतिपुरुषयोर्भेदानङ्गीकाराच्च कामादिविकाराणामप्यात्मधर्मत्वमभ्युपगच्छत इति मन्तव्यम्।

ननु ज्ञाननित्यत्ववादिना जन्या बुद्धिवृत्तयः कल्पनीया इति कथं लाघवमिति? उच्यते, ज्ञाने जन्यत्वाभ्युपगमेऽपि तदतिरिक्ता बुद्धिवृत्तिरवश्यं कल्प्या, स्वप्नमनोरथादौ बाह्यघटवदन्तर्घटादीनां वासनानिर्मितानां दर्शनात्। त एव वान्तर्घटादयो बुद्धिपरिणामविशेषा विषयाकारबुद्धिवृत्तय इत्युच्यन्ते। न च ता एवात्मधर्मत्वेन परिकल्प्य ज्ञानमिति वक्तुं शक्यन्ते, तासां बाह्यघटादिवदेव दृश्यत्वेनात्मधर्मत्वाभावस्या[4]नुमानात्। $किं चान्तरुपलभ्यमानानामखिलवृत्तीनामज्ञातसत्त्वाभावेन लाघवात्तासामेकमेव ज्ञानं कल्प्यते, तदेव चात्मेति गीयते। तथा च योगसिद्धान्तो "बुद्धिबोधात्मा पुरुष" इति। वृत्तीनां च ज्ञेयत्वं ज्ञानेच्छादीननुभवामीत्यनुभवात्$ रूपादिवदप्रकाशरूपत्वाच्च ज्ञानज्ञेयविभागव्यवहारस्यान्तरसंभवापत्तेश्च।

अपि च "कामादिकं सर्वं मन एवे"ति श्रवणात् "सृजते च गुणानेक एको न सृजते गुणान्, कूटस्थोऽक्षर उच्यते" इत्यादिस्मरणाच्च आत्मनो विषयाकारपरिणामकल्पनानौचित्यादिति। श्रुतिस्मृतिविरोधेनाहमिच्छामीत्यादिप्रत्ययानां त्वहं गौर इत्यादिप्रत्ययवदप्रामाण्यमवसेयम्। आत्मनश्चानन्दरूपत्वं परमप्रियत्वमेव, सुखरूपत्वं तु जन्मादिसूत्रे निराकृतम्[5]। सत्तावत् ध्वंसप्रागभावाप्रतियोगित्वमबाधितत्वं वा उभय-

---

१ "दृष्टान्तराभावादेवोच्यते" इत्येकस्मिन् ह० लि० लि० पु० पाठः।
"दृष्टान्तश्च दृष्टान्तश्च तांतराभावोच्यते" इत्यन्यस्मिन् ह० लि० पु० पाठः।
उभयदृष्ट्या "दृष्टान्तश्च दृष्टान्तराभावादेवोच्यते" इति पाठः सम्यक् प्रतिभाति।

२ 'औष्ण्यग्रहणे' इत्येकस्मिन् ह० लि० पु० पाठः।
'औष्ण्याग्रहणे' इत्यन्यस्मिन् ह० लि० पु० पाठः।

३ चाहतुरिति उ० ह० लि० पु० पाठः।
'च हेतुरिति' मु० पु० पाठोऽयुक्त इव भाति।

४ 'रूपादिदृष्टान्तेने'त्यधिकः १ पु० पाठ इति मु० शा०।
अयं पाठ उ० ह० लि० पु० नास्ति।

$ अयं पा० २ पु० ना० इति मु० शा०।
अयं पाठ उ० ह० लि० पु० वर्तते।

५ "असंभवाच्च, यदि विषयात्माकारवृत्त्यादयश्चेतनधर्माः स्युस्तदा चेतनधर्म्युपरागे सादृश्याः (चेतनधर्म्युपरागसदृशाः) न स्युः धर्मिभाने कर्मकर्तृविरोधात्। तथात्मज्ञानमपि नोपपद्येत कर्मकर्तृविरोधात्। वृत्तीनामात्माद्याकाराणां बुद्धिनिष्ठत्वे तु यथा

थैवाभावरूपतया अधिकरणस्वरूपमेवेति न तथाऽऽत्मनश्चिन्मात्रत्वक्षतिरिति। अतः सिद्धमाभासस्वरूप एवात्मा न तत्रान्यरससंभेदोऽस्तीति। तथा चोक्तं पराशरेण—

निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः।
दुःखाज्ञानमया धर्माः प्रकृतेस्ते तु नात्मनः॥ इति।

तदेतज्जीवतत्त्वं संक्षेपतो ब्रह्ममीमांसायामुक्तम्। अतिविशेषतस्तु सांख्ययोगयोर्जीवप्रधानयोरवगन्तव्यमिति दिक्॥

ननु आत्मैक्यश्रुत्यनुरोधेन सर्वात्मनामखण्डत्वमेवास्तु किमिति जीवानामात्माभासत्वमिष्यते? तत्राह—[1]

## अदृष्टानियमात् ॥५१॥

सर्वात्मनामखण्डत्वे अदृष्टव्यवस्थानुपपत्तेरित्यर्थः॥
न केवलमदृष्टाख्यधर्माधर्मयोरेवाव्यवस्था अपि तु संकल्पादीनामपीत्याह—

## अभिसन्ध्यादिष्वप्येवम् ॥५२॥

स्पष्टम्। तदुक्तं सांख्यसूत्रेण "जन्मादिव्यवस्थातः पुरुषबहुत्वमि"ति॥

## प्रदेशादिति चेन्नान्तर्भावात् ॥५३॥

ननु प्रदेशादवच्छेदभेदादौपाधिकधर्माणां भागापवर्गयोश्च व्यवस्था स्यादिति चेन्न, अन्तर्भावात्। नारकादिरूपेष्वप्यात्मप्रदेशेषु परमेश्वरादिरूपाणामात्मप्रदेशानामन्तर्भावाद् भेदाभावादव्यवस्था स्यादित्यर्थः। अन्यथा परमेश्वरादीनां जीवान्तर्यामित्वाद्यनुपपत्तिरिति भावः। एतच्च जन्मादिसूत्रेऽस्माभिः प्रपञ्चितम्।

"आभास एव चे" ति सूत्रस्य द्वितीयव्याख्याने चेयं त्रिसूत्रीत्थं व्याख्येया—प्रतिज्ञातं जीवस्य चिन्मात्रत्वं सूत्रत्रयेणोपपादयति—अदृष्टानियमात्। अदृष्टानां धर्माधर्मविषयवासनादीनामतीन्द्रियाणां धर्माणामनियततयाऽनित्यतया कूटस्थात्मधर्मत्वासंभवाच्चिन्मात्ररूप एवात्मेत्यर्थः।

अभिसन्ध्यादिष्वप्येवम्—न केवलमतीन्द्रियेष्वेवानियतत्वान्नात्मधर्मत्वम् अपि तु प्रत्यक्षेष्वभिसन्ध्यादिधर्मेष्वप्यनियतत्वादनित्यत्वान्नात्मधर्मत्वमतो जीवश्चिन्मात्र एवेत्यर्थः। अभिसन्धिश्च इदमाप्नुयाम् इदं परिहराणीत्यादिरूपः संकल्पः।

---

न कर्मकर्तृविरोधस्तथा विवेचितं ज्ञानोत्पत्तेः प्रक्रियायां शास्त्रयोनित्वादित्यत्र। तथा वृत्तिद्वारा आत्मज्ञानेऽपि तस्य स्वप्रकाशत्वमनन्यौपाधिकप्रकाशत्वं स्वज्ञेयत्वं चाक्षतमिति तत्रैव विवेचितम्" इति अधिकं १ पु० इति मु० शा० टिप्पणी। किन्त्वयमधिकः पाठः उ० ह० लि० पु० नास्ति।

[1] 'प्रतिज्ञातं जीवस्याभासमात्रत्वं सूत्रत्रयेणोपपादयति' इति १ पु०पाठ इति मु०शा०। अयं पाठः उ० ह० लि० पु० नास्ति।

प्रदेशादिति चेन्नान्तर्भावात्—नन्वाभासरूपत्वमपि जीवस्य न संभवति शरीर-प्रदेशमात्रे जीवस्य चैतन्यरूपप्रकाशात् । अत आभासस्याप्यात्मनि बहिरवच्छेदेना-भावान्नात्मस्वरूपत्वमिति चेन्न, अन्तर्भावात् । बहिरपि जीवे चैतन्यप्रकाशस्यान्तः सत्त्वा-दनभिव्यक्तगूढभविनः ( भावेन ) सत्त्वादित्यर्थः । उपाधिगमनदशायां सर्वदेशेष्वेव चैतन्यप्रकाशदर्शनात् नानाचैतन्यकल्पने च गौरवादितिभावः । तथा च श्रुतिः—

घटसंवृतमाकाशं नीयमाने घटे यथा ।
घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः ॥ इति ।

आधुनिकास्तु—'आभास एव चे' ति सूत्रस्य जीवः परमात्मप्रतिविम्ब इत्यर्थः । तथा च बिम्बप्रतिविम्बरूपेण ब्रह्माभिन्नजीवस्य जलसूर्यवत् परिच्छिन्नतया च तत्कर्मा-दिभिः फलादिभिश्चेश्वरस्य न संकर इति । तत्र परिच्छिन्नप्रतिविम्बरूपतोपपादनाय जीवस्य विभुत्वं निराकरोति परसूत्रत्रयेण । तेषामर्थश्च—जीवानां विभुत्वे सति सर्वा-त्मनां सर्वदेहेन्द्रियमनआदिभिः सन्निकर्षाविशेषात् सर्वेष्वात्मस्वविशेषतो धर्माधर्मा-भिसन्ध्याद्युत्पत्त्या संकरः स्यात् । पूर्वपूर्वधर्मादीनां नियामकत्वे चानवस्था स्यात् । अन्यथोपपत्त्या च तादृशानवस्थायां न बीजाङ्कुरवत् प्रामाणिकत्वम् । अथ शरीरादि-प्रदेशरूपावच्छेदभेदेन धर्माद्यसांकर्यं स्यादिति चेन्न, सर्वात्मनां सर्वशरीरान्तर्भावात् कस्य किमवच्छेदकमिति नियामकाभावादित्याहुः ।

तत्तु कुतर्केण सूत्रप्रहारमात्रम्, प्रतिविम्बेंऽशत्वव्यवहाराभावेनांशसूत्रविरोधाप-त्त्याऽस्य सूत्रस्य प्रतिविम्बार्थतानौचित्यात् । तेषामप्यंशसूत्रस्थया घटाकाशवदंशत्व-व्याख्यया अत्रत्यप्रतिविम्बरूपत्वव्याख्यानस्य विरुद्धत्वाच्च । यदपि जीवः परिच्छिन्नो अविद्याकृतश्चेत्युक्तम्, तदतीव हेयम्, सूत्रकारेणैव "नाणुरतच्छ्रुते"रित्यादिना जीव-विभुत्वस्य प्रतिपादितत्वात् । परैरपि विभुत्वपरतयैव तत्सूत्रस्य व्याख्यातत्वात्, अनि-र्वचनीयस्य जीवस्य ब्रह्माभेदायोगाच्च । यदपि जीवानां विभुत्वे सर्वेषां सर्वशरीर-संबन्धात्तु धर्माद्युत्पत्तौ सांकर्य्यमुक्तम्, तदपि बाल्यमात्रम् । एवं भवदीयकु-तर्केण ईश्वरे व्यापके सर्वजीवादृष्टादिसङ्करप्रसङ्गात् । "यावदात्मभावित्वाच्च न दोष" इति सूत्रेण प्रतिनियतनित्योपाधीनां प्रतिपुरुषं व्यवस्थापिततया धर्माद्युत्पत्तिव्य-वस्थायाः सम्भवाच्च । आत्मनामुपाधीनां च नित्यात्ममनादिस्वस्वामिभावस्यैव भोग्य-भोक्तृभावनियामकतया सांख्ये योगे चोक्तत्वात् ।

यच्चोक्तमनवस्था अप्रामाणिकीति, तदपि तुच्छम्, "तद्वज्जीवो नभोपम" इत्यादिश्रुतिसिद्धजीवविभुत्वान्यथानुपपत्त्या यथोक्तानवस्थाया बीजाङ्कुरवत् प्रामाणिक-त्वात् । यच्चोक्तम्, जीवः परमात्मप्रतिबिम्बमिति तत्र (तन्न) प्रमाणाभावात् । अंशानां प्रतिबिम्बैरेव बुद्धिषु परमात्मप्रतिविम्बश्रुतिस्मृत्युपपत्तेः । सूत्रकारश्च मायाद्युपाधिष्वं-शांश्यविशेषेण ब्रह्मणः प्रतिबिम्बमेव वक्ष्यति "अत एव चोपमा सूर्यकादिवत्, वृद्धि-ह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवमि" ति सूत्राभ्यां, न तु परमात्मनः प्रतिबिम्बं

१ 'कारस्यापि मननादिकम्' इति उ० ह० लि० पु० पाठः ।

जीव इति, जीवप्रकरणात् प्रतिविम्बस्य तुच्छतया बन्धमोक्षभागित्वानौचित्याच्च। बन्धमोक्षावपि तुच्छावेवेति चेन्न, एवं सति वेदान्ततः सामान्यतस्तुच्छत्वश्रवणमात्रेणाकृतसाक्षात्कार[1]स्यापि (न) मननादिकं तस्मात् पुरुषार्थनिश्चयासंभवात्।

किं च श्रुतिषु प्रतिविम्बावच्छेदांशत्वादिषु दृष्टान्ता बहवः सन्ति, तदनुसारेण विरुद्धतत्तद्रूपत्वं ब्रह्मणाप्युपपादयितुं न शक्यते। अतो "ममैवांशो जीवलोके जीवभूतः सनातनः" इत्यादिवाक्येषु दृष्टान्तभावं विना साक्षादेवांशताश्रवणात् युक्तिसिद्धत्वाच्चांशश्रुतिरेव मुख्या प्रतिपत्तव्या। "आकाशमेकं हि यथा घटादिषु पृथग्भवेत् तथात्मैको ह्यनेकश्च जलाधारेष्विवांशुमान्" इत्यादिवाक्येषु च प्रतिविम्बावच्छेदादीनां दृष्टान्तद्वारावगमेन दुर्बलतया युक्तिविरुद्धतया च तत् श्रुतयः किंचित् किंचिदंशमात्रेणांशत्वाद्युपपादिका एवेति निर्णयम्। अन्यथा अंशसूत्रव्याकोपात् युक्तिविरुद्धच्छायातपदृष्टान्तस्याप्यादरापत्तेश्च। तत्र जीवप्रकरणेष्वाकाशमेकं हीत्यादिवाक्यैरेकरूपयोर्जीवेश्वरयोरंशांशिनोरौपाधिकपृथग्रूपत्वमात्रे दृष्टान्तप्रदर्शनम्। अन्यथा "शुनि चैव श्वपाके च पण्डिताःसमदर्शिन" इति भेदघटितसाम्यवाक्यानुपपत्तेः। सर्वात्मना साम्यलक्षणैकरूपताज्ञानादेव संसारनिवृत्तिसंभवाच्च। अखण्डताज्ञानेऽप्यवच्छेदभेदेन संसारासंसारयोःसम्भवेनाखण्डताज्ञानस्याभिमाननिवृत्त्यादिफलासंभवात्। परमेश्वरप्रकरणे त्वाकाशमेकं हीत्यादिवाक्यैर्विभागमिथ्यात्वमात्रे दृष्टान्तप्रदर्शनम् ईश्वरमात्रस्यात्मत्वप्रदर्शनायेत्यादिकं विस्तरेण प्रोक्तम् तत्र तत्रेति।

अत एकताप्रतिपादकवाक्यानि नाखण्डतापराणि किं तु सामान्यात्मप्रकरणेष्वेकरूपतापराणि ब्रह्मप्रकरणेषु त्वविभागलक्षणाभेदपराणीति। तस्माद् ब्रह्मणोंऽश एव जीवो न प्रतिविम्बमिति। जीवस्य ब्रह्मप्रतिविम्बताबोधकवाक्यसत्त्वे तु तद्वाक्यं प्रतिबिम्बसमाक्रान्तेतिवाक्यवद् बोध्यम्, जीवस्य ब्रह्मानुसारित्वात्। "छायातपौ ब्रह्मविदो वदन्ति" इत्यादिवच्छायादृष्टान्तेन ब्रह्मानुकारित्वस्य सिद्धेरिति[2] दिक्॥

इति ब्रह्ममीमांसायां विज्ञानयतिविरचिते विज्ञानामृताख्य ऋजुभाष्ये द्वितीयाध्यायस्य तृतीयः पादः॥



---

[1] 'कारस्यापि मननादिकम्' इति उ० ह० लि० पु० अपि पाठः।

[2] "यदि च ब्रह्मण एव मुख्यात्मत्वाज्जीव आत्माभासो ब्राह्मणःभासत्वदिति सूत्रार्थ उच्यते, तदा संभवत्यपि तस्मिन्नर्थे "अदृष्टानियमादि" त्याद्युत्तरसूत्राणां कष्टार्थकता स्यादि"ति १ पु० पा० इति मु० ग्रा०।
अयं पाठ उ० ह० लि० पु० नास्ति।

## द्वितीयाध्याये चतुर्थः पादः

पूर्वपादे पञ्चभूतोत्पत्तिप्रलयौ विचारितौ। ततश्च परमात्मवियतोरन्तरालेऽन्तः-करणस्यापि तौ विचारितौ। ततश्चान्तराल एव जीवोत्पत्तिरंशरूपेण गौणीति विचारिते (तं) तेनैव च परमेश्वरात् प्रकृत्युत्पत्तिरपि शास्त्रोक्ता गौणीत्युक्तप्रायम्। अतः पर-मन्तराल एवापरा सृष्टिर्विचारणीया—

### तथा प्राणाः ॥ १ ॥

यथा विज्ञानमनसी सदाकाशयोरन्तराले जन्मादिमती, तथैव प्राणाः दशेन्द्रि-याण्यपि परमेश्वरात् तयोरन्तराल एव जायन्ते सृष्टिव्युत्क्रमेण प्रलीयन्ते परमेश्वराधि-ष्ठिताश्च तिष्ठन्ति। कुतः ? अविशेषादित्युक्तहेतोरेवेत्यर्थः। "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापश्च पृथिवी विश्वस्य धारिणी" त्यादिश्रुतौ अन्तराले जन्मादिलिङ्गस्य पाठक्रमस्याविशेष इति भावः। "श्रेष्ठश्चे" त्यागामिसूत्रेण पञ्चवृत्ति-प्राणस्योत्पत्त्यादिविचारणादस्य सूत्रस्येन्द्रियपरत्वमवधार्यम्, प्राणशब्दस्येन्द्रियमुख्य-प्राणोभयवाचित्वात्। प्राणशब्दश्चेन्द्रियेषु प्रयुक्तः "ते ह प्राणाः प्रजापतिमेत्योचुरि" त्यादौ "प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती" त्यादौ च। तेषां च प्राणत्वं "त एतस्यैव सर्वरूपमभवत् तस्मादेत एतेनाख्यायन्ते" इति श्रुतेः।

अन्ये तु अनेनाधिकरणेनेन्द्रियाणामुत्पत्तिरस्ति न वेति विचारः क्रियत इत्याहुः। तन्न, इन्द्रियोत्पत्तौ वादिविप्रतिपत्त्यभावेनाञ्जस्यतः संशयासंभवात्, उत्पत्तिकाले च इन्द्रियभौतिकत्ववादिनैयायिकविप्रतिपत्तिसत्त्वात्। उभयथा व्याख्यानसंभवेऽपि भूत-सृष्टेः प्रागिन्द्रियोत्पत्तिबोधकस्मृत्यनुसारेण तन्निर्णयपरताया एवौचित्याच्च॥

ननु "तेजोमयी वागि" ति श्रवणाद् भूतानन्तरमेवेन्द्रियोत्पत्तिर्युक्तेति तत्राह—

### गौण्यसंभवात् ॥ २ ॥

असंभवात्तु श्रुतिर्गौण्यपि भवतीत्यर्थः। तथा च "तेजोमयी वागि" त्यादिश्रुति-र्गौणी, कुतः ? असंभवादिति भावः। अत्र हि वाक्ये "आपोमयः प्राणः" इत्यनन्तरम् "अपां सोम्य पीयमानानां योऽणिमा स ऊर्ध्वः समुदीयति स प्राणो भवती" ति मुख्यप्राणस्याप्युत्पत्तिः श्रूयते, सा च मुख्या न संभवति, प्राणसम्बन्धात् प्राक् पानाद्य-संभवात् केवलस्याग्नेः सविशेषाजनकत्वाच्च, बाह्याग्नौ तथा दर्शनाभावात्। तथा च सांख्यसूत्रम् "भोक्तुरधिष्ठानाद् भोगायतननिर्माणमन्यथा पूतिभावप्रसङ्गात्" इति। भोक्तुरधिष्ठानाद् भोक्तुः शक्तेः प्रवेशात्। अत्र भोक्ता करणप्राणादिविशिष्ट एव प्रयोगफलोपधानाभिप्रायेणोक्तः "आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण" इत्यादि-श्रुतिस्मृतिभ्य इति। अतः शरीरे प्राणोत्पत्तिर्वृत्तिलाभमात्रेण गौणीति सिद्धम्। तत्साह-

चर्याच्च "तेजोमयी वागि" त्यादिश्रुतिरपि वृत्तिलाभेन गौणी । अन्नाद्यनुगतैर्हि करणादिसूक्ष्मांशैः करणादीन्युपचीयन्ते ॥

इतश्चेन्द्रियाणां शरीरादुत्पत्तिर्गौणीत्याह—

तत्प्राक्श्रुतेश्च ॥३॥

तेभ्यः प्रकृतेभ्यो वियदादिभूतेभ्यः प्रागपि प्राणानां सत्ताश्रवणाच्च । यथा "असद्वा इदमग्र आसीत् तदाहुः किं तदग्र आसीत् ऋषयो वा वत अग्रे सदासीरन् तदाहुः के ते ऋषय" इति । अत्र इदंशब्दवाच्यानां भूतशरीरादीनामसत्ताकालेऽपि प्राणानां सत्तावगम्यत इत्यर्थः ॥

सूत्रद्वयेन "तेजोमयी वागि" ति श्रुतेर्गौणत्वं व्यवस्थाप्य इदानीं येन गुणेन गौणत्वं तमाह—

तत्पूर्वकत्वाद् वाचः ॥४॥

वाचो वागिन्द्रियकार्यस्य शब्दस्य तत्पूर्वकत्वात् पूर्वपादोक्ततेजोरूपभूतपूर्वकत्वादित्यर्थः । अग्निरूपेण तेजसा देवतयाऽधिष्ठितं वागिन्द्रियं शब्दप्रयोगहेतुतयाऽभिव्यज्यते । अतो वृत्तिलाभगुणेन तेजोमयी वागिति गौण्युत्पत्तिश्रुतिरिति भावः । $यच्चेन्द्रियाणां भौतिकत्वं न्यायाद्यभ्युपगतं तत्कल्पभेदेनार्थवादिकं स्मृतिषु कुत्रचिदेव तद्दर्शनात् , उत्सर्गतस्त्वभौतिकत्वमाहङ्कारिकत्वस्मृतिबाहुल्यादिति विभागः$ ।

इदानीं कर्मेन्द्रियाणि व्यवस्थापयितुं सप्तेन्द्रियवादिनमुत्थाप्यापाकरोति सूत्रद्वयेन—

सप्त गतेर्विशेषितत्वाच्च ॥५॥

ननु चक्षुरादिपञ्चकं बुद्धिमनसी चेत्येवं सप्तैव प्राणाः इन्द्रियाणि भवेयुः न वागादिकम् , कुतः ? गतेर्गतिवाक्यात् "सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त" इत्येवंरूपात् । सप्त सप्तेति वीप्सा प्रतिपुरुषाभिप्रायेण ।

ननु ते सप्त प्राणाः किं वृत्तिभेदान् मुख्यः प्राण एव ? किं वा इन्द्रियाणि ? इन्द्रियत्वेऽपि किं कर्मेन्द्रियाणि किं वा ज्ञानेन्द्रियाणीति कथमवधारणीयं, तत्राह— विशेषितत्वाच्चेति । "तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते" इति श्रुतौ विज्ञानवत्त्वेन प्राणानां विशेषितत्वादपि ज्ञानसाधनानि सप्तैव प्राणाख्यानीन्द्रियाणीत्यर्थः ।

अपरे त्वेवं व्याचक्षते—"सप्त वै शीर्षण्याः प्राणा" इति श्रुत्या शिरस्यत्वेन विशेषितत्वाच्चेन्द्रियाण्येव ग्राह्याणि न मुख्यप्राणाः । शिरसि हि चक्षुर्द्वयं श्रोत्रद्वयं

$ अयं पाठः उ० ह० लि० पु० वर्तते ।
अयं पा० २ पु० ना० इति मु० शा० ।

घ्राणद्वयं रसना चेतीन्द्रियाण्येव सप्त प्रसिद्धान्युपपद्यन्ते च मुख्यप्राणपरिग्रहे मूर्धन्य-नाड्यादिनाधिक्यप्रसङ्गात् ।

ननु "सप्त वै शीर्षण्याः प्राणा" इत्यनन्तरं "द्वाववाञ्चावि" ति श्रवणान्नवैव प्राणाश्चावगम्यन्ते, तथा श्रुत्यन्तरेषु "नवैव पुरुषे प्राणाः नाभिर्दशमी दशेमे पुरुषे प्राणा आत्मैकादश" इत्यादिना नानाविधाः संख्याः श्रूयन्ते, तत्कथं सप्तैवेत्यवधार्यत इति चेन्न, लाघवान्न्यूनसंख्यावधारणे सति वृत्तिभेदेनाधिकसंख्यानामुपपत्तेरिति। तत्र शीर्षण्यसप्तप्राणवृत्तित्वस्याग्रेऽस्माभिः प्रसाधयत्वात् । सिद्धान्तमाह—

## हस्तादयस्तु स्थितेऽतो नैवम् ॥६॥

हस्तादयस्त्वपरे सप्तभ्योऽतिरिक्ताः प्राणाः श्रूयन्ते "हस्तौ वै ग्रहः स कर्मणाऽति-ग्राहेण गृहीतो हस्ताभ्यां हि कर्म करोति" इत्यादिना। ग्रहो जीवबन्धकः। श्रुत्यन्तरे च "सर्वेषां कर्मणां हस्तावेकायनमि" त्यादिक्रमेण कर्मेन्द्रियपञ्चकं समग्रमेव श्रूयत इति। एवं स्थिते सिद्धे सति अतो हेतोर्नैवं भवति यत् सप्तैवेन्द्रियाणि इतीत्यर्थः । प्राणानां सप्तत्वविज्ञानवत्त्वयोर्वचनं तु प्राधान्याभिप्रायेण बोध्यम्। "सप्त वै शीर्षण्याः प्राणाः द्वाववाञ्चा" विति श्रुतिश्च नवच्छिद्रद्वारा मुख्यप्राणस्य नववृत्तीरेव प्रतिपादयति न पुनरिन्द्रियाख्यान् प्राणान्, श्रुत्यन्तरे "नवैव प्राणा नाभिर्दशमी" ति वचनात् नाभेरनिन्द्रियस्येन्द्रियदशमत्वानौचित्यात् ।

नन्वेवमिन्द्रियाणां संख्यानिर्णयः कथं स्यात्? न च "दशेमे पुरुषे प्राणा आत्मैकादश" इति वाक्यादात्मशब्दोक्तमनसा सहैकादशसंख्यासिद्धिरिति वाच्यम्, तत्रापि दशमध्येऽनिन्द्रियस्य नाभेः पठितत्वेन मुख्यप्राणवृत्तीनामेव दश[1] त्वालाभात्, आत्मशब्देन च मुख्यप्राणावचनात्। प्राणस्य हि नवद्वारैर्नववृत्तयः नाभिच्छिद्रे दशमी वृत्तिः सर्वनाडीषु रोमकूपादिषु च मुख्यप्राणवृत्तिरित्युपपन्न-मेकादशत्वमिति ।

अत्रोच्यते—दशैव ज्ञानकर्मभेदेनेन्द्रियाणि याज्ञवल्क्यमैत्रेयीसंवादे "सर्वेषां स्पर्शानां त्वगेकायनमि"त्यादिक्रमेण दशेन्द्रियवचनात्। यच्च तत्र बुद्धिमनसोः पठनं तत्करणविधयैव न त्विन्द्रियविधया श्रुत्यन्तरस्मृत्यैकवाक्यत्वात्। "बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च। इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्॥ इन्द्रियेभ्यः परं मनः" इत्यादिश्रुतिषु "मनसश्चेन्द्रियाणां चैकाग्र्यं परमं तपः। इन्द्रियाणि मनो बुद्धिरि" त्यादिषु स्मृतिषु च इन्द्रियाद् भेदेन तयोः पाठात्। क्वाचित्कं च एका-दशेन्द्रियवचनम् इन्द्रियप्रवर्तकतया मनसोन्द्रियत्वोपचारात्। न चैवमुक्तवाक्येष्वेव गोबलीवर्दन्यायेन पृथग्वचनं कथं नोच्यत इति वाच्यम्, इन्द्रियलक्षणस्य बुद्ध्यादाव-संभवात्। इन्द्रियत्वं ह्येकजातीयमात्रव्यापारे करणत्वं वाच्यम्, अन्यथा शरीरा-दीनामपीन्द्रियत्वप्रसङ्गात्। अन्तःकरणं च चाक्षुषादिवचनादिरूपनानाजातीयज्ञान-कर्मणोः करणमिति ।

---

[1] 'दशत्वलाभात्' इति उ० ह० लि० पु० पाठः ।

यत्तु सात्त्विकाहङ्कारोपादानकत्वमिति सांख्योक्तमिन्द्रियलक्षणं[1] तत् तद्दर्शन-सिद्धान्तानुसारेणैव। अत्र तु दर्शने दशैवेन्द्रियाणि न मनः, आचार्यैः पूर्वपादे बुद्धिमनसी विचार्य पृथगत्र प्राणाख्यानामिन्द्रियाणां परीक्षितत्वात्। ननु बुद्धिमनसो-रपि प्राणखचिततया प्राणशब्देनात्रान्तःकरणमपि कथं न गृह्यत इति चेन्न, अन्तः-प्राणखचितत्वाभावात् बुद्धिमनसोः पृथग् विचारितत्वाच्च ॥

इदानीं तन्मात्राणां सूक्ष्मभूतापरनाम्नामुत्पत्त्यादिकालमवतारयति—

## अणवश्च ॥७॥

तथेत्यनुवर्तते। अणवः सूक्ष्मभूतान्यपि तथा परमेश्वरात् सदाकाशयोरन्तराल एवोत्पद्यन्ते प्रलीयन्ते च परमेश्वराधिष्ठिताश्च तिष्ठन्ति लिङ्गाविशेषादित्युक्तहेतोरेवे-त्यर्थः। अन्तरोत्पत्तिः[2] लिङ्गं च ( त्तिलिङ्गं च ) पाठक्रमो यथा-भूतानि पञ्चतन्मात्राणि पञ्चमहाभूतानि भूतशब्देनोच्यन्त इति च मैत्रेयोपनिषदिति। तथा मन्वादिस्मृतिमूल-त्वेनानुमिताभ्यः श्रुतिभ्यः साक्षादपि क्रमः प्रत्येतव्यः इति भावः।

परे तु अनेन सूत्रेण इन्द्रियाणामणुत्वमुच्यत इत्याहुः। तन्न, इन्द्रियाणा-मणुत्वे सकलदेहव्यापिन्याः स्पर्शसंवित्ति[3] (त्ते) रसंभवात्। अथाणुशब्देन विभुत्व-निरासाय मध्यमपरिमाणं विवक्षणीयमिति चेन्न, कार्यत्वादेव मध्यमपरिमाणत्वाविभु-त्वयोः सिद्धेः। किं चैवमणुत्वे सूत्रकारस्य हेत्वप्रदर्शनन्यूनतापत्तिः तथा समग्र-सृष्ट्यकल्पनन्यूनतापत्तिः स्यादिति ॥

## श्रेष्ठश्च ॥८॥

तथेत्यत्राप्यनुवर्तते। तथा श्रेष्ठः पञ्चवृत्तिप्राणोऽपि परमेश्वरात् सदाकाशयो-रन्तरैवोत्पद्यते प्रलीयते च परमेश्वराधिष्ठितश्च तिष्ठति, लिङ्गाविशेषात् "एतस्माज्जा-यते प्राणो मनः सर्वेन्द्रियाणि च" ति पाठक्रमरूपलिङ्गाविशेषात् ज्येष्ठत्वश्रवणाच्चे-त्यर्थः। "प्राणो वा व ज्येष्ठश्च श्रेष्ठश्चे" ति श्रुतेर्ज्येष्ठत्वं श्रेष्ठत्वं च प्राणस्यावगम्यते। तत्र ज्येष्ठत्वं सर्वप्रथमोत्पन्नत्वात् शरीरे प्रथमं वृत्तिलाभाच्च। अन्यथा शुक्रस्य पूतिभाव-प्रसङ्गात् रससंचारं विना बुद्ध्यादिकरणवर्गस्य गोलकनिर्माणासंभवाच्च। अत एव श्रेष्ठत्वमपि सर्वकरणादीनामाधारत्वादिभिरात्मत्वाच्च। "प्राण एवैकधा भवति तेन यदश्नाति यत् पिबति तेनेतरान् प्राणानवति यस्मिन्नुत्क्रान्ते इदं शरीरं पापिष्ठतरमिव

---

[1] "तदपि लक्षणं मनसि नास्ति, अन्तःकरणस्यैकतयाऽहङ्कारस्य मनोवृत्तिमात्रोपादान-त्वात्" इति १ पु० पाठ इति मु० श्रा०।
. अयं पाठ उ० ह० लि० पु० नास्ति।

[2] यथामुद्रितं पाठ एकस्मिन् ह० लि० पु० वर्तते।
'उत्पत्तिलिङ्गं च' इत्यन्यस्मिन् ह० लि० पु० पाठः।

[3] 'संवित्तिरसंभवात्' इति ड० ह० लि० पु० पाठः। 'त्ते' इति पाठः सम्यक्।

दृश्यते स वः (स वै) श्रेष्ठ" इति, "प्राणेन रक्षन्नवरं कुलापं (यं), तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनुक्रामन्ति, मा मोहमापद् यथा अहमेवैतत् पञ्चधाऽत्मानं प्रविभज्यैतद् वायुमवष्टभ्याभिधारयामी" त्यादिश्रुतिशतेभ्यः।

तदेवं भूतसृष्टेः प्रागेव बुद्ध्यादीनां प्राणान्तानामुत्पत्तिः श्रुतिस्मृत्यनुसारतो विचारिता। अत्रावान्तरो यः क्रमः परिमाणभेदश्च स सूत्रानुक्तोऽप्यस्माभिरणुश्चेत्यागामिसूत्रे विवेचयिष्यत इति ॥

ननु प्राणस्य वायुरूपत्वा[1]दत्र पञ्चभूतेभ्यः प्राक् तस्य जन्मादि संभवति। किंच मुख्यप्राण ऊर्ध्वाधोगमनप्राणापानादिनामा वायोः क्रियाविशेषावच्छिन्नपरिणामविशेष एव, स च शरीर एव संभवतीति कथं शरीरात् प्राक् तस्योत्पत्तिः स्यादिति, तामिमामाशङ्कामपाकरोति—

न वायुक्रिये पृथगुपदेशात् ॥९॥

मुख्यप्राणो न वायुः, नापि शरीरस्योर्ध्वाधोगमनलक्षणा वायुक्रिया धर्मधर्मिणोरभेदात् तदवच्छिन्नपरिणाम इति यावत्, कुतः? पृथगुपदेशात् "प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषा भाति च तपति च" त्यादिश्रुतौ "स प्राणमसृजत प्राणात् श्रद्धा खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमि" त्यादिश्रुतौ च प्राणस्य वायुतः पृथगुपदेशात्। तथा "अहमेवैतत् पञ्चधात्मानं प्रविभज्यैतद्वायुमवष्टभ्य विधारयामी" त्यादिश्रुतिषु शरीरतन्त्राभ्यः पञ्चवृत्तिभ्यो अंशेभ्यः पृथगंशिनः प्राणस्योपदेशादित्यर्थः। न चैवमपि वायोर्विकारान्तरं प्राणः स्यादितिवाच्यम्, "प्राणात् श्रद्धा खं वायुरि" त्युक्तश्रुतौ वायोः प्राणकार्यत्वावगमात् ॥

नन्वेवं "यः प्राणः स एव वायुः पञ्चविध" इति श्रुतिविरोध इति, तत्राह—

चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥१०॥

यथा चक्षुरादिरभौतिकोऽपि स्वाधिष्ठातृतेजआद्यभिन्नस्तथा श्रेष्ठोऽपि स्वाधिष्ठातृवायुदेवाभिन्नः। तथा चोक्ता श्रुतिः शक्तिशक्तिमतोश्चक्षुःसूर्ययोरिवाधिष्ठेयाधिष्ठात्रोरभेदं बोधयति, प्राणनादिवृत्तिपञ्चकोत्पत्तौ प्राणस्य वाय्वधिष्ठेयत्वात्। ननु विजातीययोरधिष्ठेयाधिष्ठातृभावो न युक्त इति चेन्न, स्वतः क्रियावत्त्वेनोभयोः प्राणवाय्वोः साजात्यात्। यथा चक्षुःसूर्ययोः राजससात्त्विकाहङ्कारकार्ययोः परस्परविजातीयत्वेऽपि भास्वरत्वसाजात्येनाधिष्ठेयाधिष्ठातृत्वमिति।

चक्षुरादीनां सूर्यादिदेवताकत्ववत् प्राणस्य वायुदेवताकत्वे हेतुमाह—तत्सहशिष्ट्यादिभ्य इति। "सूर्यश्चक्षुर्वातः प्राणः" इत्यादिश्रुतिषु सदेवैश्चक्षुरादिभिः सह शासनात्। आदिशब्दात् "प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषा भाति च तपति च" इत्यादिश्रुत्यादयो ग्राह्या इति।

---

[1] "वायुरूपत्वान्न पञ्चभूतेभ्यः प्राक् तस्य" इति ड० ह० लि० पु० पाठः।

नन्वेवं चक्षुरादिभिः सह पाठेन प्राणस्याहङ्कारिकत्वमपि स्यात्, तथा च करण-जन्यत्वेन ज्येष्ठत्वश्रेष्ठत्वहानिरित्याशङ्क्याह—

**अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥११॥**

चशब्दादभूतत्वाच्चेत्यवगन्तव्यम्। तथा चाकरणत्वादभूतत्वाच्च नाहङ्कार-जन्य इति न ज्येष्ठत्वश्रेष्ठत्वयोर्हानिरित्यर्थः। तथा हि दर्शयति श्रुतिः प्राणस्याकरणत्वम-परिच्छिन्नसर्वाधिकारित्वेन। यथा—"सा ह वागुवाच यद्वाहं वशिष्ठोऽस्मि, त्वं तद्वशि-ष्ठोऽसीति, यद्वाहं प्रतिष्ठाऽस्मि त्वं तत्प्रतिष्ठोऽसीति चक्षुः, यद्वाऽहमायतनमस्मि त्वं तदा-यतनमसीति मन" इत्यादिना बाह्याभ्यन्तरसर्वकरणाध्यक्षत्वात् प्राणस्याकरणत्वं दर्श-यति। करणं हि परिच्छिन्नविषयकमेव राजादीनां दृश्यते, अमात्यत्वमेव स्वपरिच्छिन्न-विषयकमिति। प्राणस्य च बुद्ध्यादिसकलसङ्घातधारणादिलक्षणोऽसाधारणो व्या-पार इति मन्तव्यम् "प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति" इति श्रुतेः।

नन्वेवं प्राणस्य किं कारणमिति चेत्, प्रकृतिरेव। महत्तत्त्वं ह्येकमेव प्रकृतेरुत्प-द्यमानं ज्ञानक्रियाशक्तिभ्यां बुद्धिप्राणशब्दाभ्यामभिलप्यत इति स्मृतिष्ववधारितम् "यो वै प्राणः सा प्रज्ञा, या प्रज्ञा स प्राणः" इत्यादिश्रुतिषु च। अत एव महत्तत्त्वसृष्टेः पृथक् प्राणसृष्टिः श्रुतिस्मृतिषु प्रायशो न श्रूयते। आचार्यस्तु नित्यत्वादिशङ्कानिरासार्थं मनस इव प्राणस्यापि वृत्तिभेदेन पृथगुत्पत्तिमुक्तवान्। अत एव सांख्यशास्त्रम् "सामा-न्यकरणवृत्तिः प्राणाद्या वायवः पञ्च" ति। अस्यार्थः—सामान्यं सर्वकार्यसाधारण यत् करण महत्तत्त्वं तस्यैव वृत्तिभेदाः प्राणापानादयः पञ्च। ते च वायुदेवताकत्वाद् वायु-तुल्यसंचाराद्वा वायव इति।

ननु वायोः पृथगुत्पन्नस्य प्राणस्य कथं वायुर्देवता स्यादिति चेन्न, प्राणस्य प्राण-नादिरूपपञ्चवृत्तावेव वायोः प्रेरकत्वेन देवतात्वात्। पूर्वोत्पन्नवस्तुनः कार्यविशेषप्रेरकं चेतरो (चोत्तरो) त्पन्नमपि सम्भवत्येवेति। प्राणस्य सूत्राख्या च वृत्तिर्वायोः प्रागेव जायते तथा चोक्तम्—"सत्त्वं रजस्तम इति त्रिवृदेकमादौ सूत्रं महानहममिति प्रवदन्ति जीवम्" इति। अत्र महतो बुद्धेरपि पूर्वेन्द्रियाशक्त्या सूत्रनाम्नः प्राणस्योत्पत्तिरुक्ता "प्राणात् श्रद्धामि" त्युक्तश्रुत्यनुसारात्, धर्मधर्म्यभेदेन बुद्धेरेव श्रद्धाशब्देन तत्रोक्तत्वात् आका-शादिदिव्यैः सह पाठात्। जीवमिति जीवोपाधिमित्यर्थः। ‡सूत्राद्युपाधिविशिष्टजीवा एव वा सूत्रदिशादि ( सूत्रादि ) शब्देनोक्ता इति बोध्यम्‡॥

इदानीं प्राणस्य संख्या विचार्यते। तत्र संशयः किं पञ्चघटवदेकजातीयाः व्यक्ति-भेदाः पञ्च प्राणाः? आहोस्विद् वृक्षवदेकव्यक्तिरेव प्राणः शाखाभेदतुल्यैरंशभेदैः पञ्च व्यपदिश्यत इति? तत्रायं निर्णयः—

**पञ्चवृत्तिर्मनोवद् व्यपदिश्यते ॥१२॥**

---

‡ अयं पाठ उ० इ० लि० पु० नास्ति।

अयं पा० २ पु० ना० इति मु० पा०।

एकैव प्राणव्यक्तिः पञ्चवृत्तिका शास्त्रेषु व्यपदिश्यते, मनोवत् अन्तःकरणवदित्यर्थः। यथा ह्येकैवान्तःकरणव्यक्तिर्निश्चयादिचतुष्टयवृत्तिका शास्त्रेषु व्यपदिश्यते, तथैवैकैव प्राणव्यक्तिः प्राणापानसमानोदानव्यानाख्यपञ्चवृत्तिकोच्यत इति। अत्र व्यपदिश्यत इति व्यपदेश एव हेतुरभिप्रेत इति तद्व्यर्थं न भवति। अयं भावः—कुत्रचिद्वाक्येऽवान्तरभेदविवक्षया बुद्ध्यादिचतुष्टयस्य वृत्तिचतुष्टयं व्यपदिश्यते पृथक् पृथक्। कुत्रचिच्च भेदाविवक्षया अव्यवस्थातो वृत्तिसाङ्कर्यमपि व्यपदिश्यते, यथा—"ह्रीर्धीर्भीरित्येतत् सर्वं मन एव" इत्यादौ। अत्र हि धीशब्दवाच्या बुद्धिवृत्तिः सर्वशब्दोक्ताश्चाभिमानचिन्तादयोऽपि वृत्तयो मनस्येवोक्ताः। स चायं व्यपदेशो न व्यक्तिभेदे सम्भवति नाप्यत्यन्तमभेद इति। तथा स्मृतावपि सङ्करव्यपदेशो, यथा वायौ –

मनो महान् मतिर्ब्रह्मा प्रबुद्धिः ख्यातिरीश्वरः।
प्रज्ञा संविच्चितिश्चेति स्मृतिश्च परिपठ्यते ॥

इति। तथा पातञ्जलभाष्येऽपि क्लेशादीनां चित्तधर्मत्वं मनोधर्मत्वं चोक्तं "त एते क्लेशादयो मनसि वर्तमानाः पुरुषे व्यपदिश्यन्ते" इति। चतुर्विंशतितत्त्वकथनं तु बीजाङ्कुरादीनामिवावस्थावस्थिनोर्भेदविवक्षयेति। अत एकैकव्यक्तिरन्तःकरणं वक्तव्यम्, एवमेव कुत्रचिद् वाक्येऽवान्तरभेदविवक्षया पञ्च प्राणा उच्यन्ते, कुत्रचिच्च भेदाविवक्षया अपानादयो (यः) प्राणस्यैकस्यैव वृत्तित्वेनोच्यन्त इति। अत एकैव व्यक्तिः प्राणोऽपीति सिद्धम्।

यद्यपि प्राणान्तःकरणयोरप्येकव्यक्तित्वमेव तथापि क्रियाशक्तेरवान्तरभेदाः पञ्च, ज्ञानशक्तेरवान्तरभेदास्तु चत्वार इति भावः सम्भवत्येवेति मन्तव्यम्। वृक्षशाखोपशाखादृष्टान्तेन चैतदवसेयम्। तथाऽवान्तरकार्यकार[1]णयोरपि (भावोऽपि) बीजाङ्कुरमहावृक्षादिदृष्टान्तेनावधारणीय इति। अवान्तरविभागकार्यकारणभावयोः शास्त्रेषु प्रतिपादनं च योगाभ्यास उपयुज्यते प्राणान्तःकरणयोरिति न तद्व्यर्थम्।

एतेन वैशेषिकाणामेकान्तःकरणाभ्युपगमोऽपि लाघवतर्कमूलको वेदाविरुद्ध इति द्रष्टव्यम्। तत्र प्राणस्य पञ्च वृत्तयः कथ्यन्ते। प्राग्वृत्तिर्नासाग्रसंचारी प्राणः, उच्छ्वासादिकर्मा अवाग्वृत्तिरपानो अधःसंचारो पाय्वादिद्वारैर्मलाद्यवसारकः, व्यानस्तयोः सन्धिः वीर्यवत् कर्महेतुः, उदानः ऊर्ध्ववृत्तिरुत्क्रान्त्यादिहेतुः, समानः सर्वशरीरवृत्तिरसितपीतादिसमीकरणहेतुरिति। एतेषु च प्राणो जीववन्मुख्यः सर्वेषां कारणं शाखादीनां मूलमेवेनि[2] (मिवेति) बोद्धव्यम्। अत एव प्राणशब्देनापानादयो बुद्ध्यादयश्चोच्यन्ते नत्वपानादिशब्देन प्राण इत्युपपद्यते। अत एव च चक्षुरादयोऽपि प्राणा इत्येवोच्यन्ते न त्वपानव्यानदयो वेति। यद्यप्यपरेऽपि प्राणव्यापाराः कूर्मादिरूपा अनन्ताः सन्ति, तथापि तेषामप्राधान्यान्नात्र गणना कृतेति न न्यूनता। अपरे तु मनोऽपि पञ्च-

---

[1] 'अवान्तरकार्यकारणोपि' इति उ० ह० लि० पु० पाठो वर्तते।

[2] 'मिवेति' पाठ उ० ह० लि० पु० वर्तते।

वृत्तिकं "प्रमाणविपर्ययविकल्पनिद्रास्मृतय" इति योगसूत्रानुसारेण मनोवदिति दृष्टान्तेनात्र प्रदर्श्यत इत्याहुः। तन्न, तेन हि सूत्रेण साक्षाद्[1]वि (नि) रोध्यानां वृत्तीनामेव पञ्चत्वमुक्तं न तु कामाद्या वृत्तयो असंख्याता निराकृता इति ॥

अणुश्च ॥१३॥

तथेत्यनुवर्तत एव। तन्मात्रकार्यः स्थूलमहाभूताणुरपि सदाकाशयोरन्तरैवोत्पद्यते प्रलीयते च परमेश्वराधिष्ठितश्च तिष्ठति, लिङ्गाविशेषादित्युक्तहेतोरेवेत्यर्थः। "यं वै सौम्यैतमणिमानं न निभालयसे एतस्य वै सौम्येषोऽणिम्न एवं (एव) महान्यग्रोधस्तिष्ठती" त्यादिश्रुतिः पार्थिवाणुप्रतिपादिका सकलमहाभूतसूक्ष्मे तस्यान्तरालोत्पत्तौ च लिङ्गम्। तथा,

"अण्व्योमात्राविनाशिन्यो दशार्धानां तु याः स्मृताः।
ताभिः सार्धमिदं सर्वं संभवत्यनुपूर्वशः ॥"

इति मन्वादिवाक्यान्यपि तयोः प्रमाणानि। तथा पातञ्जलभाष्ये व्यासदेवैः पञ्चस्थूलभूताणूत्पत्तिप्रक्रिया प्रोक्ता सैव इहापि ग्राह्या, अत्र विशेषतोऽनुक्तत्वात्। तथा (च)[2] तद्भाष्यम् "शब्दादीनां मूर्तिसजातीयानामेकः परिणामः पृथिवीपरमाणुस्तन्मात्रावयवः, तेषां चैकोऽयं परिणामः पृथिवी गौर्वृक्ष इत्यादिः। एवं भूतान्तरेष्वपि स्नेहौष्ण्यप्रसरावकाशदानान्युपादाय विशेषविकारारम्भः समाधेय" इति। अस्यार्थः—शाब्दा[3] (शब्दा) दि तन्मात्राणां मध्ये मूर्तिसजातीयानां कठिनजातीयानां तन्मात्राणां वैशेषिकपार्थिवपरमाणुस्थानीयानां सूक्ष्मभूतानामेकः परिणामः स्थूलपृथिव्या अणुश्चरमावधिर्वैशेषिकत्र्यणुकस्थानीयः तेषां चैकः परिणामः इयं महापृथिवी। एवं स्नेहजातीयानां रसतन्मात्राणामेकः परिणामः स्थूलजलाणुः। तथोष्णजातीयानां रूपतन्मात्राणामेकः परिणामः स्थूलतेजोऽणुः। तथा सदागतिजातीयानां स्पर्शतन्मात्राणामेकः परिणामः स्थूलवाय्वणुः। तथाऽवकाशप्रदजातीयानां शब्दतन्मात्राणामेकः परिणामः स्थूलाकाशाणुरिति।

न च तन्मात्रेभ्यः साक्षादेव महाभूतोत्पत्तिसम्भवेऽणुकल्पनायां गौरवमिति वाच्यम्, शास्त्रसिद्धत्वेन गौरवस्य प्रामाणिकत्वात्। अन्यथा वैशेषिकाणां द्व्यणुकमपि न सिध्येत्, गौरवात्। अथ त्र्यणुकस्यावयवाः सावयवाः, महद्द्रव्यारम्भकत्वात्, कपालवत् इत्याद्यनुमानात् त्र्यणुकावयवसिद्धिरिति चेत्, एवमनुमानमस्माकमपि समानं श्रुतिस्मृती चात्र उभाभ्यामेवानुग्राहकतकौं स्वीकार्याविति।

यच्चात्राणूनामेकैकः परिणामो महापृथिव्यादिरित्युक्तं तत्रापि क्रमविशेषो विष्णुपुराणादावुक्तः। यथा विष्णौ[4]—

---

[1] 'साक्षान्निरोध्यानां' इति उ० ह० लि० पु० पाठः। 'नि' इति पाठः सम्यक्।

[2] यथा तद्भाष्यम् इति उ० ह० लि० पु० पाठः। अयं सम्यक् पाठः।

[3] 'शब्दादि' इति उ० ह० लि० पु० पाठः।

[4] वि० पु० अं० १ अ० २ श्लो० ३७।

$भूतादिस्तु विकुर्वाणः सर्गं तन्मात्रिकं ततः।
ससर्ग (र्ज) शब्दतन्मात्रादाकाशं शब्दलक्षणम् ॥
शब्दमात्रं तदाकाशं भूतादिः स समावृणोत्।
आकाशस्तु विकुर्वाणः स्पर्शतन्मात्रलक्षणम् ॥
शब्दमात्रं तदाकाशं भूतादिः स समावृणोत्।
आकाशस्तु विकुर्वाणः स्पर्शमात्रं ससर्ज ह ॥
बलवानभवद्वायुस्तस्य स्पर्शो गुणो मतः।$

इत्यादिः। अस्यार्थः— ततोऽहङ्कारोत्पत्त्यनन्तरं भूतादिस्तन्मात्रिकं तन्मात्रसमुदायात्मकं सर्गं ससर्ज अकरोत्। तदनन्तरं शब्दतन्मात्रात् तत्सहकृतो भूतादिर्महाकाशं ससर्ज। न वाकाशं[1] (तदाकाशं) वायुसृष्टये भूतादिः पुनरापूरयदंशान्तरेण। ततश्चाहङ्कारो[2] परित (अहङ्कारापूरित) आकाशः पूर्वोत्पत्त्यनन्तरं स स्पर्शतन्मात्रं स्वावष्टम्भेनाणुरूपतया ससर्ज। ततो अणुभ्यो महावायुरजायत। एवं भूतान्तरेष्वपि बोध्यमिति। अत्र पञ्चस्वपि भूतेषु तन्मात्राणामेवोपादानत्वम्, अहङ्काराकाशादीनां त्वधिष्ठानकारणतेति विशेषः।

तथा सांख्येऽपि स्थूलभूताणुरुक्तो यथा—"सूक्ष्मा मातापितृजाः सह प्रभूतैस्त्रिधा विशेषाः स्युरि" ति। स्थूलभूतानि विशेषाख्यानि त्रिविधानि भवन्ति। प्रथमः सूक्ष्मा अणवः, ततश्च भूतानि महाभूतानि, ततश्च मातापितृजा देहा इत्यर्थः। एतेषु मध्ये सूक्ष्माः संयुक्ताः पञ्चभूताणवः सप्तदशावयवकस्य सप्राणस्य लिङ्गशरीरस्याधारभूता इति सांख्ये व्यक्तम्—

चित्रं यथाश्रयमृते स्थाण्वादिभ्यो विना यथा छाया।
तद्वद् विना विशेषैर्न तिष्ठति निराश्रयं लिङ्गम् ॥ इति।

लिङ्गशरीरं च तत्रैव संख्यातम्—

पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्यन्तम्।
संसरति निरुपभोगं भावैरधिवासितं लिङ्गम् ॥ इति।

अत्र सूक्ष्मभूतानां लिङ्गमध्ये गणनमाधारतयैव मन्तव्यम्[3]। ‡यच्च पुराणादौ सप्तदशावयवकं लिङ्गमुच्यते तन्महदहङ्कारावेकीकृत्येति बोध्यम्। अतएव कापिलसूत्रे

$ एते श्लोका उ० ह० लि० पु० अशुद्धाः पठिताः।

[1] 'नवाकाशं वायुसृष्टं अधूनादिः' इति उ० ह० लि० पु० पाठः।

[2] 'ततश्चाहङ्कारो परित आकाश' इत्येकस्मिन् ह० लि० पु० पाठः। 'ततश्चाहङ्कारो पूरित आकाश' इत्यन्यस्मिन् ह० लि० पु० पाठः। 'अहङ्कारापूरित' इति सम्यक्। अत्रत्यो मुद्रितपुस्तकपाठोऽपि विशृङ्खलः।

[3] 'मन्तव्यम्' इति उ० ह० लि० पु० पाठः।

सप्तदशैव लिङ्गदेहघटकमुक्तं 'सप्तदशैकं लिङ्गमि'ति‡। एकं समष्टिरूपमित्यर्थः। तथा मोक्षधर्मेऽपि—

"ससप्तदशकेनापि राशिना युज्यते च स" इत्यत्र सप्तदशभिरवयवैः सह वर्तते यो राशिः स ससप्तदशक इत्यर्थः। युज्यते पुनरिति पाठे तु स जीव इत्यर्थः। लिङ्गशरीरञ्च पञ्चतन्मात्रमादायैव सप्तदशकं बोध्यम्।

आधुनिकानां पञ्चप्राणमादाय पञ्चतन्मात्रपरित्यागस्त्वप्रामाणिक एव, प्रामाणिकसांख्यविरोधात्। तथा च प्राणानां महद्रूपत्वे तेषां तत्रैव प्रवेशः, नो चेत् प्राणो लिङ्गदेहेन संश्लिष्ट एव न तु लिङ्गान्तर्गत इति विवेक्तव्यम्। तस्मात्तन्मात्रकार्यभूता अणवः छान्दोग्यतैत्तिरीयोक्तं[1] (क्त) महाभूतसृष्टेः प्रागुत्पद्यन्ते इति सूत्रार्थः।

तदयं सकलश्रुतिस्मृतिसांख्ययोगैकवाक्यतया महाभूतपर्यन्तायाः सृष्टेः क्रमः कथ्यते—प्रथमं तावदीश्वराधिष्ठानेन संयुक्ताभ्यां जीवप्रधानाभ्यां महानुत्पद्यते। स च क्रियाशक्त्या प्राणः निश्चयशक्त्या च बुद्धिः, तयोर्मध्ये प्रथमं प्राणवृत्तिरुत्पद्यते "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च, खं वायुरि" त्यादिपाठक्रमात् "स प्राणमसृजत प्राणात् श्रद्धा खं वायुरि" त्यादिश्रुतौ साक्षादेव प्राणात् श्रद्धावृत्तेर्बुद्धेरुत्पादावगमाच्च। तदनन्तरमङ्कुरस्य वृक्षभाववदहङ्काररूपो अन्तःकरणस्य वृत्तिविशेष उत्पद्यते, ततश्च तथैव मनः, तदनन्तरमिन्द्रियाणि, [ तत इन्द्रियवदन्योन्यकार्यकारणभावरहितानि ] तदनन्तरं पञ्चतन्मात्राणि सूक्ष्मतरभूतानि, ततश्च यथोक्ताः स्थूलमहाभूतपरमाणव सूक्ष्मा उत्पद्यन्ते। ततः परं च तैत्तिरीयच्छान्दोग्योक्ता आकाशादिक्रमेण महाभूतपञ्चकसृष्टिरवगन्तव्या। ततश्च वक्ष्यमाणं छान्दोग्यीयं त्रिवृत्करणं ब्रह्माण्डादिसृष्टिरूपमिति।

ननु छान्दोग्योक्तानि त्रिवृत्कृतभूतान्येव तन्मात्राण्यणवो वा कथं नेष्यन्ते लाघवादिति चेत् न, *तन्मात्राणां परस्परं छान्दोग्योक्तकार्यकारणभावासंभवादिन्द्रियाणामिव अन्यथा स्पर्शादीनां शब्दादिकारणानुप्रवेशेन तन्मात्रत्वानुपपत्तेः। तथा च विष्णुपुराणादिविरोधः स्यात्[2]। यथा—

---

‡ 'यच्चे'त्यारभ्य···'लिङ्गमिति' पर्यन्तः पाठ उ० ह० लि० पु० नास्ति।
"कपिलसूत्रे हि" पाठः उ० ह० लि० पु० वर्तते।
अयं पाठ २ पु० ना० इति मु० शा०।

[1] 'उक्तं' इति सानुस्वारः 'उत्पद्यते' इत्येकवचनान्तश्च पाठ उ० ह० लि० पु० वर्तते।

[ ] कोष्ठान्तर्गतः पाठ उ० ह० लि० पु० नास्ति। यथामुद्रितपाठे तु 'तदनन्तरम्' इत्यंशोऽनावश्यको भाति।

* अयं पाठ उ० ह० लि० पु० नास्ति।
अयं पा० २ पु० ना० इति मु० शा०।

[2] अं० १ अ० २ श्लो० ४३।

तस्मिन् तस्मिन् तु तन्मात्रा तेन तन्मात्रता स्मृता ।
तन्मात्राण्यविशेषाणि अविशेषास्ततो हि ते ॥
न शान्ता नापि घोरास्ते न मूढाश्चाविशेषिणः ।
भूततन्मात्रसर्गोऽयमहङ्कारात्तु तामसात् ॥

इति। नापि अत्रिवृत्कृतानि*, शरीरादिरूपेण संहतस्यैव त्रिवृत्करणशब्दार्थताया वक्ष्यमाणत्वात्, तन्मात्राणां च साक्षाच्छरीरादावहेतुत्वात्। अन्तरा छान्दोग्योक्तानि त्रिवृत्कृतभूतानि न यथोक्ताणवोऽपि भवितुमर्हन्ति "अपागादग्नेरग्नित्वम्" इत्याद्युत्तरवाक्येष्वादित्यादिरूपेण त्रिवृत्करणस्यैव तत्र लाभाच्च, आदित्यादीनां च साक्षात् परमाणुकार्यत्वाभावादिति। अयं च सृष्टिक्रमो मोक्षधर्मादिबहुशास्त्रे निर्णीतः। अन्ये च विरुद्धाः सृष्टिक्रमाः कल्पभेदेनोपपादनीया इति संक्षेपः॥

तदेवं पादद्वयेन महाभूतानां लिङ्गशरीरस्य साधारण्यस्य चोत्पत्त्यादिरवधारिता। इदानीं लिङ्गशरीरोपहितजीवेन शरीरेणेश्वराधिष्ठितान् महाभूतसंघाताद् ब्रह्माण्डाद्युत्पत्तिं विचारयति—

**ज्योतिराद्यधिष्ठानं तु तदामननात् ॥१४॥**

छान्दोग्ये तेजआदिभूतत्रयसृष्ट्यनन्तरमिदमाम्नायते "सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी" ति। तत्रेयमाशङ्का—किं विचारेण ? परसैन्यं प्रविश्याकलयामीतिवज्जीवस्यैव प्रवेशः, ईश्वरस्तु स्वांशभूतजीवस्य प्रवेशयितैव। ⁂ननु स्वयं प्रविशति स्वयंभूप्रभृतिदेवैरेव स्वपरदेहनिर्माणसम्भवात् तच्छ्रवणाच्च⁂। किं वा अश्वेन पादेन वा ग्रामं प्रविश्य विचरामीतिवदीश्वरस्यापि प्रवेश इति। तत्रायं सिद्धान्तः—प्रकृतस्य ब्रह्मणो ज्योतिरादिषु विराड्देहबीजेषु भूतसङ्घेषु अधिष्ठानप्रवेशोऽस्ति, कुतः ? तदामननात्। "यदिदं किं च तत्सृष्ट्वा तदेवानुप्राविशत्, द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते" इत्यादिश्रुतिषु, "सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च। एकोऽहमस्मीत्यात्मानं यस्त्वं कल्याण मन्यसे। नित्यं स्थितस्ते हृद्येष पुण्यपापेक्षिता मुनिरि" त्यादिस्मृतिषु च जीववदीश्वरस्यापि देहबीजेषु देहेषु च जीवात् पृथक् प्रवेशामननादित्यर्थः। विभोरीश्वरस्य प्रवेशश्च ज्ञानेच्छाकृत्यादिरूपमायावृत्त्योपाधिक इत्युक्तं प्राक्। तथा चोक्तम्—"तदनु त्वमप्रविष्टः प्रविष्ट इव भाव्यसे" इति। $अतो हिरण्यगर्भादीनामप्यन्तर्यामिप्रेरणयैव विराडादिस्वपरदेहनिर्मातृत्वं न स्वातन्त्र्येणेति सिद्धम्। तथा स्मर्यते—

---

⁂अयं पाठ उ० ह० लि पु० वर्तते।
अयं पा० २ पु० ना० इति मु० शा०।
$ अयं पाठ उ० ह० लि० पु० वर्तते।
अयं पा० १ पु० ना० इति मु० शा०।

ब्रह्मविष्णुहरादीनां स्रष्टृत्वादि करोति सः ।
उपचारतया त्वेव स्रष्ट्राद्यास्तेऽपि कीर्तिताः ॥ इति ।
तां तां शक्तिमुपादाय स्वयं देवमहेश्वरः ।
सृजतो (ते) विविधान् देहान् ग्रसते चैव लीलया ॥
सर्वासामेव शक्तीनां ब्रह्मविष्णुमहेश्वराः ।
प्राधान्येन स्मृता देवाः शक्तयः परमात्मनः ॥ इति चेति $ ।

नन्वीश्वरस्य प्रवेशाङ्गीकारे जीवस्य प्रवेशद्वारत्वं वक्तव्यं तच्चायुक्तम् ईश्वरस्य प्रकृतिपुरुषयोरिव देहबीजेषु भूतेष्वपि स्वयमेव प्रवेशसम्भवादित्याशङ्कायामाह—

प्राणवता शब्दात् ॥१५॥

प्राणवता प्राणिना जीवेनैवाश्ववत् करणभूतेन ब्रह्मणो देहबीजाधिष्ठानं मन्तव्यम्, कुतः ? शब्दात् शब्दप्रामाण्येन तर्काभावेऽपि वस्तुसिद्धेः । "अनेन जीवेनात्मने" त्यादिर्हि शब्दो 'जीव बलप्राणधारणयोरि'ति व्युत्पत्त्या प्राणवता करणेन ब्रह्मणः प्रवेशं बोधयतीत्यर्थः । तर्कश्चात्र "भोक्तुरधिष्ठानाद् भोगायतननिर्माणमन्यथा पूतिभावप्रसङ्गादि" ति सूत्रे कपिलोक्तो वर्तते । प्राणप्रवेशं हि विना देहबीजस्य पूतिभावदर्शनेन दृष्टसामग्र्यन्तर्गतं प्राणमपेक्ष्यैव ब्रह्मणा भोगायतनं समष्टिव्यष्टिदेहजातं सृज्यते । तथा च "भृत्यद्वारा स्वाम्यधिष्ठितिनैकान्तादि" ति सांख्यसूत्रान्तरात् प्राणप्रवेश एव जीवप्रवेशो घटप्रवेश इव घटाकाशस्येति । तथा प्राणादिदेवतानामैश्वर्यभोगसम्पादनार्थमपि प्राणादिद्वारैव प्रवेशो युक्तः, ईश्वरस्य स्वतः प्रयोजनाभावादिति । *सर्वत्र कारणे ब्रह्मणो ज्ञानेच्छाकृतिभिर्व्यापनरूपे प्रवेशे च युक्तिस्तार्किकैरुक्ता सामान्यतः कार्यत्वावच्छेदेनेश्वरस्य कर्तृत्वकल्पने लाघवमिति* ॥

ननु प्रलये ब्रह्मैवैकमद्वितीयमासीत् नान्यत्, अतः सृष्टिकाले जीवस्योत्पत्तिमनूक्त्वैव ( मनुक्त्वैव ) श्रुत्या कथमुच्यते "अनेन जीवेन" ति, तत्राह—

तस्य च नित्यत्वात् ॥१६॥

तस्य च प्राणवतो जीवस्य नित्यत्वादनेन जीवेनेति शब्दः सिद्धवन्निर्दिशतीत्यर्थः । प्राणोत्पत्तिस्तु मध्ये पूरिता "तथा प्राणा" इत्यादिसूत्रैरिति भावः ॥

ननु "प्राणवता शब्दादि" ति सूत्रे प्राणशब्देन किमुक्तं तत्राह—

त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥१७॥

ते प्राणवतेत्यत्रोक्ताः प्राणाः श्रेष्ठं प्राणं वर्जयित्वा सर्वे दशैवेन्द्रियाणीत्यवगन्तव्यम् । कुतः ? तद्व्यपदेशात् जीवस्य देहप्रवेशे तयोरपि साहित्यव्यपदेशात् ।

---

* अयं पाठ उ० ह० लि० पु० वर्तते ।
अयं पा० १ पु० ना० इति मु० ग्रा० ।

"तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति सविज्ञानो[१] ( सविज्ञानो भवति ) सविज्ञानमेवान्वा( न्वव )क्रामति तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चे" त्यादिश्रुत्या मुख्यप्राणेनेन्द्रियवर्गेण च सहोत्क्रान्तस्य जीवस्य तमित्यनेन परामृष्टस्य पुनर्देहान्तरेष्वारभ्यमाणस्य विशेषणत्वेन श्रेष्ठेन्द्रिययोर्व्यपदेशादित्यर्थः। तथा—

> ममैवांशो जीवलोके जीवभूतः सनातनः।
> मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति॥
> शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः।
> गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्॥

इत्यादिस्मृत्यापि तद्व्यपदेशादिति बोध्यम्। अत्र प्राणबुद्ध्योरेकत्वात् श्रेष्ठग्रहणेनैवान्तःकरणसामान्यं गृहीतम्।

नन्वेवं किं प्राणान्तःकरणेन्द्रियैः सहैव जीवस्य देहे प्रवेशो न तन्मात्रभूतैरिति, तथा च सांख्यस्याप्रामाण्यमिति चेन्न, "तद्यथा पेशस्कारी पेशसी[२](सो)मात्रामुपादायान्यन्नवतरं रूपं तनुत एवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वाऽन्यन्नवतरं कल्याणतरं रूपं कुरुते बाह्य(ब्राह्म)पर्यन्तमि" ति श्रुतिष्ववगमेन तन्मात्राणां लिङ्गदेहाधारसूक्ष्मभूतानां च प्राणशब्देनात्रोपलक्षणादिति। $आचार्यस्तु प्राणशब्दस्य रूढ्यर्थमात्रं व्याख्यातवान्न तु लिङ्गशरीरान्तर्गतानामन्येषां जीवप्रवेशे साहित्यं निराकृतवानिति बोध्यम्$॥

ननु जीवोपकरणत्वसाम्यात् श्रेष्ठस्यापीन्द्रियत्वमेवोचितम्, तत्कथं श्रेष्ठादन्यत्रेत्यनेन श्रेष्ठस्य पार्थक्यमुक्तमित्याकाङ्क्षायां प्रसङ्गेन प्राणस्यानिन्द्रियत्वं साधयति—

**भेदश्रुतेः ॥१८॥**

"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" त्यादौ श्रेष्ठेन्द्रिययोर्भेदश्रवणात् श्रेष्ठाद् भिन्नान्येवेन्द्रियाणीत्यर्थः॥

ननु भेदव्यपदेशो गोबलीवर्दन्यायेनोपपद्यत इत्याशङ्क्याह—

**वैलक्षण्याच्च ॥१९॥**

लक्षणभेदोऽप्यस्ति श्रेष्ठेन्द्रिययोः। श्रेष्ठत्वं हि सकलजीवोपकरणधारकत्वम् इन्द्रियत्वं च प्रतिनियतविषयत्वमिति। अतो विरुद्धलक्षणकत्वादुभयोर्भेद इत्यर्थः।

---

[१] यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते। किन्तु "सविज्ञानमेवान्वचक्रामति" इति उभयत्र पुस्तकयोः पाठः।

[२] यथामुद्रित पाठ उ० ह० लि० पु० वर्तते।

$ अयं पाठ उ० ह० लि० पु० वर्तते।
अयं पा० १ पु० ना० इति मु० शा०।

प्राणबुद्धी चैकमेव तत्त्वमिति नान्तःकरणस्यापि व्यवस्थितविषयत्वमतो नेन्द्रियत्वमिति भावः ॥

तदेवं विराजादिदेहबीजेषु लिङ्गशरीरोपहितं जीवमादाय परमेश्वरस्य प्रवेशः शरीरसृष्टये भवतीति प्रसाधितम्, इतः परं शरीरसृष्टिर्विचार्यते—

**संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥२०॥**

सत्प्रक्रियायां तेजोऽबन्नानां सृष्टिं निरूप्योच्यते "सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकां करवाणी" ति। तत्र संशयः—यदिदं संज्ञामूर्तिकल्पनरूपं नामरूपव्याकरणं किमिदं त्रिवृत्करणात् पूर्वं पाठक्रमात्, अथवा युक्त्यनुरोधेन पश्चात्, तत्रापि किं व्यापारव्यवधानेन, उताव्यवधानेनेति। तत्रायं निर्णयः—संज्ञामूर्ती नामरूपे, नाम विराडग्न्यादि, रूपं चतुर्दशभुवनचतुर्मुखादि, तयोः क्लृप्तिर्निर्माणं त्रिवृत्कुर्वत एव परमेश्वरानन्तव्यं न त्रिवृत्कृतवतः। तथा च त्रिवृत्करणाव्यवहितोत्तरकाल(ले)नामरूपे स्पष्टीभवत इत्यर्थः। कुतः? उपदेशात् नामरूपव्याकरणस्योपायाङ्क्षायां त्रिवृत्करणमात्रस्योपदेशादित्यर्थः।

*यदेव हि नामरूपे व्याकरवाणीत्युक्तं तदेव विवृणोति "तासां त्रिवृतं त्रिवृतमेकैकां करवाणी" ति न तु व्याकरणैकीकरणयोः कार्यकारणभावादिभेदो विवक्षितो गौरवात्। त्रिवृत्करणस्य नामरूपव्याकरणहेतुत्वे तस्यैव प्राग्वचनौचित्याच्च। नामरूपव्याकरणकार्यत्वासंभवाच्चेत्यर्थः। अत एव "यदविज्ञातमिवाभूदित्येतासामेव देवतानां समास" इत्येव वाक्यशेषे श्रूयते न तु समासकार्यमिति*। अत्र च त्रिवृत्करणं पञ्चीकरणस्याप्युपलक्षणं युक्तेस्तौल्याच्छरीरादौ पञ्चभूतगुणदर्शनाच्चेति बोध्यम्।

यत्तु पञ्चीकृतभूतेभ्यो ब्रह्माण्डादिसृष्टिरिति प्रलपनमाधुनिकानां तदप्रामाणिकम्, महाभूतेभ्योऽपञ्चीकृतेभ्य एव तदुत्पत्तिसंभवात् श्रुतिस्मृत्यभावाच्चेति ध्येयम्। याऽपि तैः पञ्चीकरणे व्यवस्था कल्पिता, अर्धं एकस्य भूतस्यापरार्द्धं च समभागैर्भूतचतुष्टयस्येत्येवं मिलितं पञ्चीकृतं भवतीति साप्यप्रामाणिकी व्यभिचरिता च। सुवर्णादौ तेजसि तैलादौ च पार्थिवे पृथिवीजलादीनामितरभूतापेक्षयाऽऽधिक्यदर्शनादिति दिक् ॥

अधिदैवं त्रिवृत्करणं प्रतिपाद्य अध्यात्ममपि तेजोबन्नानां त्रिवृत्करणं प्रतिपादयति "यथा तु खलु सौम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत् त्रिवृदेकैका भवति तन्मे विजानीहीति, अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत् पुरीषं भवति, यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मन" इत्यादिना। तत्र पुरीषस्य मूत्रस्य च शरीरारम्भकत्वं न सम्भवतीत्याशङ्कायामाह—

**मांसादिभौमं यथाशब्दमितरयोश्च ॥२१॥**

---

* अयं पा० २ पु० ना० इति मु० शा०।
पाठोऽयमुपत्र ह० लि० पुस्तकयोर्वर्तते।

पुरीषमूत्रे प्रसङ्गादेवोक्ते न तु पुरुषारम्भकत्वेन। पुरुषे च पुरीषं विहाय मांसमनसी अन्नाख्यभूमिविकारौ मन्तव्यौ। एवं यथाशब्दं शरीरघटकपदार्थविवेचकश्रुत्यन्तरानुसारेण इतरयोरप्तेजसोरपि विकाराः मन्तव्याः। तत्रापि जलविकारमध्ये मूत्रं परित्यज्य लोहितप्राणौ जलस्य अस्थिमज्जावचांसि तेजसो विकार इत्यर्थः। तथा चाध्यात्मं पुरुषाकारेणान्नजलतेजसां त्रिवृत्करणं सिद्धमिति भावः। अत्र च श्रुतिवाक्ये—"अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागि" ति। मनआदीनां भूतकार्यत्ववचनमन्नाद्यनुगतैः करणप्राणसूक्ष्मांशैरभिव्यक्त्यैवेति व्याख्यातं "गौण्यसंभवादि" ति सूत्रेणेति स्मर्तव्यम्॥

ननु यदि विराडग्न्यादिरूपा देवतामूर्तयः स्थावरजङ्गमादिरूपाश्चाध्यात्ममूर्तयः सर्वा एव पञ्चीकृतास्तर्हि कथं देवतानां तैजसी आप्यादिश्च स्थूलमूर्तिः स्थावरादीनां च पार्थिवीति विभागः शास्त्रोक्त उपपद्येत ? तत्राह—

वैशेष्यात्तु तद्वादस्तद्वादः ॥२२॥

विशेष्यं प्रधानं तस्य भावो वैशेष्यं प्राधान्यमाधिक्यमिति यावत्। तस्मादाधिक्यात्तैजसपार्थिवादिव्यपदेशो मूर्तिष्वित्यर्थः। एतेन पाञ्चभौतिकं शरीरमिति वेदान्तसिद्धान्तः। ननु शरीरमिति कथं विशिष्यते पृथिव्यादिमहाभूतानामपि पाञ्चभौतिकत्वादिति चेन्न, पृथिव्याः साक्षाज्जलमात्रमहाभूतकार्यत्वादेवं जलादिभूतत्रयस्यापि साक्षादेकैकमात्रमहाभूतकार्यत्वादाकाशस्य च भूताकार्यत्वात्। कार्ये कारणगुणानुगमात्तु महापृथिव्यादिष्वपि नानागुणोपलम्भ इति।

वस्तुतस्तु तन्मात्रकार्यपार्थिवादिसजातीयाणुसंघातमात्रकार्याण्येव पृथिव्यादिमहाभूतानि आकाशादिजलपर्यन्तमुत्तरोत्तरभूतेष्वाधाराख्यं निमित्तकारणमेवेति। तद्वाद इति द्विः पाठोऽध्यायसमाप्तिसूचनार्थः॥

इति ब्रह्ममीमांसायां विज्ञानयतिकृते विज्ञानामृताख्य ऋजुभाष्ये

द्वितीयाध्यायस्य चतुर्थः पादः।

समाप्तश्च द्वितीयोऽध्यायः।

---

## अथ तृतीयाध्याये प्रथमः पादः

पूर्वस्मिन्नध्याये वेदान्तानां ब्रह्मपरत्वे विरोधः परिहृतः, तथा "जन्माद्यस्य यत" इत्यनेनोक्तेषु जन्मादिषु मध्ये आदिसर्गप्रक्रिया प्रतिपादिता । इदानीं तृतीयाध्यायेऽवान्तरसृष्ट्यादिप्रक्रिया ब्रह्मतत्त्वं ससाधनब्रह्मज्ञानं तस्य पुरुषार्थसाधनत्वं च विचारणीयम् । तत्र प्रथमपादे ज्ञानपूर्वाङ्गवैराग्यस्य प्रयोजकान् संसारगतान् स्वर्गनरकगमनागतिगर्भवासादीन् ब्रह्मकार्यतया प्रतिपादयति—

**तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥१॥**

पूर्वपादोक्तसंज्ञामूर्ती तच्छब्देनोच्येते । तथा च तदन्तरप्रतिपत्तौ एकं नामरूपं परित्यज्य नामरूपान्तरपरिग्रहकाले जीवो यथोक्तैर्भूतसूक्ष्माधारकैः पञ्चतन्मात्रेन्द्रियान्तःकरणैः सशरणैस्त्रिविधदुःखनिदानैः परिष्वक्त एव रंहति लोकान्तरं संसरति, कुतः ? प्रश्ननिरूपणाभ्याम् । प्रश्नोपनिषदि चतुर्थप्रश्नात् तन्निरूपणाच्चैतदवगम्यत इत्यर्थः । यथा "अथ हैनं गार्ग्यः पप्रच्छ, कस्मिन्नु सर्वे प्रतिष्ठिता भवन्तीति, तस्मै होवाच, यथा गार्ग्य मरीचयोऽर्कस्यास्तं गच्छतः सर्वा एतस्मिंस्तेजोमण्डल एकीभवन्ति ताः पुनरुदयतः प्रचरन्ति, एवं ह वै तत्सर्वं परे देवे मनस्येकीभवन्ति, तेन तर्ह्येष पुरुषो न शृणोति न पश्यती" त्याद्यनन्तरं "स यथा सोम्य वयांसि वासो वृक्षं संप्रतिष्ठन्ते, एवं ह वै तत्सर्वं परे आत्मनि संप्रतिष्ठन्ते पृथिवी च पृथिवीमात्रा चापश्चापोमात्रा च तेजश्च तेजोमात्रा च वायुश्च वायुमात्रा चाकाशश्चाकाशमात्रा च चक्षुश्च द्रष्टव्यं च श्रोत्रं च[1] (श्रोतव्यं च) घ्राणं च घ्रातव्यं च रसश्च रसयितव्यं च त्वक् च* ( स्पर्शयितव्यं च, वाक् च ) वक्तव्यं च हस्तौ चादातव्यं च उपस्थश्चानन्दयितव्यं च पायुश्च विसर्जयितव्यं च पादौ च गन्तव्यं च अहङ्कारश्चाहङ्कर्तव्यं च चित्तं च चेतयितव्यं च तेजश्च विद्योतयितव्यं च प्राणश्च विधारयितव्यं च, एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुष" इत्यादि ।

नन्विदं वाक्यं सुषुप्तप्रकरणस्थं परमात्मन्येव सर्वावस्थानप्रतिपादकं च तत् कथमेतद्वाक्याल्लिङ्गशरीरवेष्टितजीवगमनं लभ्यत इति चेन्न, आभ्यां प्रश्ननिरूपणाभ्यां देहविच्छेदकालेऽपि सर्वपरिष्वङ्गस्य लाभात्, अस्तं गच्छत इति लिङ्गसामान्यात् । तथा तत्र वाक्ये मनःशब्दोक्तजीवद्वारैव परमात्मनि सर्वपरिष्वङ्गस्योक्तत्वात् । अन्यथा मनसि मनोवस्थानवचनासङ्गतः[2] (तेः) सर्वविशिष्टजीवरंहणस्य चाश्रुतत्वादित्यादिना षष्ठसूत्रेण स्वयमाशङ्क्य समाधास्यमानत्वादिति ॥

---

[1] "श्रोत्रं च श्रोतव्यं च" इति पाठ उ० ह० लि० पु० वर्तते ।

* " स्पर्शयितव्यं च, वाक् च" इति पाठ उ० ह० लि० पु० वर्तते ।

[2] 'तः' इत्येव पाठ उ० ह० लि० पु० अपि वर्तते ।

नन्वेतद्वाक्यानुसारेण संसरणव्यवस्था नोचिता, यतः छान्दोग्ये पञ्चाग्निविद्यायां द्युपर्जन्यपृथिवीपुरुषयोषित्सु पञ्चस्वग्निषु श्रद्धासोमवृष्ट्यन्नरेतोरूपाः पञ्चाहुतीः प्रदर्श्य "इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती" ति श्रूयते। तत्रापः पुरुषवचसो भवन्तीति वचनाज्जलमात्रवेष्टितस्यैव गमनं युक्तम्, प्रश्नोपनिषद्वाक्यस्य च सुषुप्तिमात्रपरत्वेनैव चरितार्थतासम्भवात् इत्याशङ्क्याह—

## त्र्यात्मकत्वात्तु भूयस्त्वात् ॥२॥

रेतोरूपाणामपां त्र्यात्मकत्वेन त्रिवृत्कृतत्वेनावश्यमप्शब्दस्यापां भूयस्त्वे तात्पर्यादित्यर्थः। तथा चावन्तर्गततया भूतान्तरवत् प्राणलिङ्गशरीरतदाधारसूक्ष्मभूतान्यपि ग्राह्याणीति भावः। किं च "तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा भवती" ति छान्दोग्यवाक्ये श्रद्धाशब्दो भूयस्त्वपरतयैव व्याख्येयोऽन्यथा केवलस्य श्रद्धाख्यगुणस्य होमासम्भवात् पञ्चम्यामाहुतौ तस्याः पुरुषाकारपरिणामासम्भवाच्च। तथा च यथाऽन्त्येष्टौ हुतस्य पुरुषस्य श्रद्धाभक्तिमता लिङ्गदेहादिरूपो रस एव श्रद्धाबाहुल्यात् श्रद्धाशब्देनोच्यते, एवमेव पञ्चम्यामाहुतावप्शब्दो[1] (ऽद्) न (बाहुल्यात्) स एवोच्यत इति युक्ततरमिति।

परे तु श्रद्धाशब्देनोक्तवाक्ये श्रद्धया हुतानि घृतादीनि द्रवभूयांस्युच्यन्ते "पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती" ति श्रुत्यनुसारात्। एवं हि इष्टादिकारिणामारोहप्रक्रिया—इष्टादिकारिभिरग्निहोत्रदर्शपौर्णमासादिकर्मसु हुता दधिपयःप्रभृतयो द्रवभूयस्त्वादप्शब्दवाच्या अग्नौ सूक्ष्मीभूता आहुत्यपूर्वरूपाः सन्तस्तानिष्टादिकारिणः प्रविशन्ति। तेषां च शरीरं नैधनेन विधानेनान्त्येष्टावृत्विजो जुह्वत्य "सौ स्वर्गाय लोकाय स्वाहे" ति। ततस्ता आपः श्रद्धायुक्तकर्मसमवायित्वात् श्रद्धाशब्दवाच्याः द्युलोकाग्नौ देवैर्हूयन्त इत्याहुः। तत्र (तन्न) श्रद्धाशब्दस्य लाघवात् श्रद्धायुक्तार्थतया एवौचित्यात् यजमानस्यैव "तं प्रेतं दिष्टमितोऽग्नय एव हरन्ती" ति श्रुत्या प्राप्तत्वात्। यच्चोक्तं हविःसूक्ष्मांश एवापूर्वमिति, तदपि न, कार्यद्रव्यानाधारे प्रलये सत्त्वासम्भवादिति॥

इतश्च छान्दोग्येऽप्शब्दः भूयस्त्वपर इत्याह—

## प्राणगतेश्च ॥३॥

प्राणानां गतिसिद्धेश्च। "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इत्यादिना प्राणस्यापि जीवेन सहोत्क्रमणं श्रूयते। अतः प्राणोत्क्रमणसाफल्याय प्राणैः सह जीवस्य गमनमवश्यं वक्तव्यमिति भूयस्त्वपर एवाप्शब्द इत्यर्थः॥

## अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥४॥

ननु प्राणादिभिः परिष्वक्तो जीवो रंहतीति कथमुच्यते? मरणकाले स्थूलदेहव-

---

[1] 'अप्शब्दो ना बाहुल्यात् स एवोच्यते' इति उ० ह० लि० पु० पाठः।

देव अग्न्यादिषु वागादीनां विनाशात् । काण्वपञ्चमाध्याये अग्न्यादिदेवतासु वागादीनां गतेर्लयस्य श्रवणात् "अस्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राण" इत्यादिवाक्येभ्य इति चेन्न, भाक्तत्वात् । वागादीन्द्रियाणामाहङ्कारिकारणामग्न्याद्यकार्यत्वेनापृथग्वृत्तितामात्रे लयगत्यादिशब्दस्य भाक्तत्वात्, दैववृत्तिभ्यः पृथग्वृत्त्यन्तराभावात् न तु प्राकृतप्रलयवद् वागादीनां प्रतिमरणं विलयो भवतीत्यर्थः ॥

**प्रथमे श्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥५॥**

ननु अग्न्यादिगतिश्रुतिर्न भाक्ता भवितुमर्हति, तस्याः प्रथमे पूर्ववाक्ये मुख्यस्य प्राणादिप्रलयस्यैव श्रवणात् । यथा "यत्रायं पुरुषो म्रियते उदस्मात् प्राणाः क्रामन्त्याहो नेति ? नेति होवाच याज्ञवल्क्योऽत्रैव समवनी(ली)यन्ते स उच्छ्वसत्याध्यातो मृतः शेत" इति । अत उत्तरवाक्येऽपि "अग्निं वागप्येती" त्यादौ मुख्य एवाप्ययो युक्त इति चेन्न, ता एव ह्युपपत्तेः । हि यस्मात्ता भाक्ता एव गतयः प्रथमवाक्येऽप्युक्ताः, उपपत्तेः "तमुत्क्रामन्तं प्राणोऽनूत्क्रामती" त्यादिश्रुत्युपपत्त्यर्थमित्यर्थः । ननु गतिप्रतिषेधकस्य प्रथमवाक्यस्य कथं भक्त्यापि गत्यर्थता स्यादिति चेत्, उच्यते, अस्मादित्यत्र च सर्वनाम्ना पूर्वसन्निहितः पुरुषाख्यो जीवः परामृष्यते । तथा च मरणकाले प्राणादयो जीवान्नोत्क्रामन्ति जीव एव समवनी(ली)यन्ते परमेश्वरेण गम्यन्ते परेष्वेकीक्रियन्त इति यावत्, त्रिविधगत्यर्थमिति प्रथमवाक्यार्थ इति । तदेतदाचार्यः स्वयं वक्ष्यति "प्रतिषेधादिति चेन्न, शारीराद्" तिसूत्रेणेति ॥

ननु भवतु देहविच्छेदकालेऽपि जीवस्य प्राणादिपरिष्वङ्गस्तथापि लोकान्तरगमनाख्ये रंहणे जीवस्य प्राणादिपरिष्वङ्गोऽश्रुतत्वादप्रामाणिक एवेत्याशङ्क्यापाकरोति—

**अश्रुतत्वादिति चेन्न, इष्टादिकारिणां प्रतीतेः ॥६॥**

उपाधिपरिष्वङ्गेण गमनस्य श्रुत्यर्थानुपपत्त्या प्रतीतेरित्यर्थः । तथाहि यथा छान्दोग्यपञ्चाग्निविद्यायाम् "अथ ये इमे ग्रामे इष्टापूर्त्ते दातुमित्युपासते ते धूममभिसम्भवन्ति धूमाद् रात्रिमि" त्यादिस्थानपरम्पराक्रमेण चन्द्रमसं जीव आरुह्य देवानामन्नं भवतीति श्रूयते "तद्देवानामन्नं तं देवा भक्षयन्ती" ति । न चेयं धूमादिरूपता स्थानात् स्थानान्तराप्तिर्देवभोग्यत्वं वा केवलस्य जीवस्य संभवति स्वतो विभुत्वात् प्राणादिसंबन्धं विना भोग्यत्वासम्भवाच्च ।

यत्तु कुतार्किकैः प्राणादिगमनं च नाभ्युपगम्यते भोगस्थाने कर्मवशात् प्राणाद्युत्पत्त्या जीवस्य वृत्तिलाभमात्रे च गमनोपचारश्चोच्यते, तन्मन्दम्, न हि वृत्तिलाभो जीवस्य वर्त्मनि धूमादिरूपेऽस्ति तत्कथं धूमादिसम्भवनं जीवस्य प्राणाद्यौपाधिकत्वं विनोपपद्येत कथं वा अन्नादिवद्देव भक्ष्यत्वं स्यादिति । न च भूतमात्राणां प्राणादीनां च सर्वत्र सुलभत्वात् तद्गमनकल्पनं व्यर्थमिति वाच्यम्, प्रतिशरीरं प्राणेन्द्रियभेदकल्पनागौरवात् श्रुतेस्तर्कनिरपेक्षत्वाच्च । विरुद्धश्रुतिभ्यामेव स्वार्थावधारणाय तर्कापेक्षणात्, सन्दिग्धे न्यायप्रवृत्तिरित्युक्तत्वादिति । तस्माद् युक्तं प्राणाद्युपाधिता (तो) जीवस्य धूमाद्यविभागक्रमेण गमनमिति ॥

नन्विष्टादिकारिणामपि धूमादिक्रमेण रंहणं धूमादिक्रमस्य यथाकथञ्चिद् देहोत्पत्तिकारणत्वादिना भाक्तं वक्तव्यं, तत्राह—

## भाक्तं वाऽनात्मवित्त्वात् तथा हि दर्शयति ।।७।।

वा शब्दः समुच्चयार्थः, नेत्यनुवर्तते। इष्टादिकारिणां रंहणं[१] (ण) श्रवणं भाक्तमपि न, कुतः ? अनात्मवित्त्वात्। यदि ह्यात्मविदस्ते स्युस्तदा तेषामुपाधेरात्यन्तिकविलयेन रंहणानुपपत्त्याऽगत्या भाक्तत्वं कल्पेत[२](कल्प्येत)। इष्टादिकारिणस्त्वज्ञाः केवलकर्मणा पितृलोकं धूमादिमार्गेण गन्तुं योग्या एव भवन्ति उपाधिसत्त्वसंभवात्। तत्किमर्थं सत्यां गतौ तेषां रंहणं भाक्तं कल्पनीयमित्यर्थः। अनात्मवित्त्वे प्रमाणमाह—तथाहीति। तथा हि अनात्मवित्त्वं हि पुनरावृत्तिप्रतिपादनेन वाक्यशेषो दर्शयति "अथैत मेवाध्वानं पुनर्निवर्तन्ते यथेतमि" त्यनेन। तस्माज्जीवस्य रंहणं न भवति किं तु साधारणप्राणलिङ्गशरीरोपाधिकमेवेति सिद्धम्। स्मृतिप्रामाण्यादप्येतदभ्युपगन्तव्यमिति।

आधुनिकास्त्विदं सूत्रमेवं व्याचक्षते—"चन्द्रमसं प्राप्यान्नं भवन्ति तं देवा भक्षयन्ती"ति श्रुतौ इष्टादिकारिणो भृत्यादिवत् देवभक्ष्यत्वं भाक्तं परभक्ष्यताया इष्टादिफलत्वमौचित्यादित्यर्थ इति, तन्न, पितृयानेन गतानां देवभक्ष्यत्वं[३] (त्व) सम्भवात्, देवभक्ष्यत्वस्येष्टादिफलत्वा (त्व[४]) वचनाच्च। नन्वेवं कथं देवभक्ष्यत्वं ज्ञेयमिति चेत्, पतनप्रकारालोचनादिति गृहाण। सोममण्डलस्थान् हि गृहीताप्यशरीरान् इष्टादिकारिणः पुरुषानादित्यस्था देवता भक्षयन्ति तेजोमयाः(य्यः)। ततस्तु सूर्यतेजसि विलीनास्ते वृष्ट्यादिक्रमेण पुनर्मनुष्यलोकमावर्तन्ते इति। "न ह वै देवा अश्नन्ति न पिबन्ति एतदेवामृतं दृष्ट्वा तृप्यन्ती" ति श्रुत्या चर्वणादिकं विनैव सूर्याख्यचक्षुषा[५] चन्द्राख्यामृतपानवचनानां चोक्तप्रक्रिया प्रामाणिकीत्यवधेयम्।।

तदेवं दुःखसाधनपरिष्वक्तस्य गतिं विचार्येदानीं सामान्यत एवागतौ विचारयिष्यमाणायामादौ प्रसङ्गागतस्येष्टादिकारिण एवागतिं विचारयति स्वर्गिणामपि [६]यातदुःखप्रतिपादनाय—

## कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ।। ८ ।।

रंहतीत्यनुवर्तते। कृतस्य पुण्यस्य अत्यये भोगेऽतीते सति अनुशयवान् कर्मशेषवानत्रागच्छति, कुतः ? दृष्टस्मृतिभ्याम् "तद् य इह रमणीयचरणा अभ्याशो ह

---

[१] 'रंहणं' इति पाठ उ० ह० लि० पु० वर्तते।

[२] 'कल्पेत' इति पाठ उ० ह० लि० पु० वर्तते।

[३] 'देवभक्ष्यत्वसंभवात्' इति पाठ उ० ह० लि० पु० वर्तते।

[४] 'फलत्वावचनाच्च इति' पाठ उ० ह० लि० पु० वर्तते।

[५] 'चक्षुषा' इति पाठ उ० ह० लि० पु० अपि वर्तते।

[६] 'यात' इति पाठ उ० ह० लि० पु० अपि वर्तते।

यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा, अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं शूकरयोनिं वा चाण्डालयोनिं वा" इति श्रुतेः। "वर्णा आश्रमाश्च[1] स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजानि[2](ति) कुलरूपायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्त "इत्यादिस्मृतेश्चेत्यर्थः। अभ्याशः शीघ्रमित्यर्थः। तत्रावरोहे विशेषमाह—यथेतं यथागतम्, अनेवं तद्विपरीतं चेति आगमने ऽप्याकाशादीनां वर्त्मनां कीर्तनात्, तथा रात्र्याद्यकीर्तनात् अभ्राद्यधिकोपसंख्यानाच्चेत्यर्थः।

एतेनानाद्यैः "एतस्मिन् यावत्सम्पातमुषित्वाऽथैनमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद् वायुमि" त्यादिश्रुतौ यथेतमिति शब्दो व[3]( ग )त्येकदेशाभिप्रायेण व्याख्यात इति बोध्यम्। अनुशयशब्दार्थश्च भू[4](भु) क्तप्रायफलस्य कर्मणो योन्यन्तरापत्तिरूपेणाल्पफलेनावशिष्टता[5]प्रेत्य कर्मफलमनुभूय ततः शेषेणेत्युक्तस्मृतेः स्वर्गनरकप्रापकस्यैव कर्मण इह लोके रमणीयकपूययोनिप्राप्तिपर्यन्तफलनिष्पत्तिं यावदवस्थानात्तु न काप्यनुपपत्तिः। अत एव ब्रह्महत्यादीनां सकलस्थावरयोनिप्राप्त्यादिपर्यन्तमेव फलं श्रूयत इति।

आधुनिकास्तु आमुष्मिकफलकर्मणः फलजातम् उपभुक्ते अवशिष्टमैहिकफलकं कर्मान्तरमनुशय इति कल्पयन्ति, तन्न, ततः शेषेणेत्युक्तवाक्यस्य यथाश्रुतार्थपरित्यागानौचित्यात्। अवरोहमात्रे ऽनुशयवानिति विशेषोक्त्यनौचित्यापत्तेश्च। आरोहेऽपि भवदुक्तानुशयजन्यत्वाविशेषात् कर्मान्तरकल्पनाया अनौचित्याच्चेति॥

## चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः॥ ९॥

ननु शीलाख्याच्चरणादेव योनिविशेषापत्तिस् "तद्य इह रमणीयचरण" श्रुत्योच्यते, चरणकर्मणा वाचारयज्ञादिरूपे भेदेन व्यपदिष्टे "यथाकारी यथाचारी तथा भवती" ति श्रुत्या, तत्कथं कर्मशेषरूपादनुशयाद् योन्यापत्त्यर्थमावृत्तिद्रव्यत[6] (रुच्यत) इति चेन्न, यतो ऽनुशयोपलक्षणार्थात् (र्था) छत्रिशब्दवच्चरणश्रुतिः "यथाकारी यथाचारी" ति श्रुत्योभयोरिव[7] ( रेव ) योन्यापत्तिहेतुत्वावगमादिति कार्ष्णाजिनिराचार्यो मन्यत इत्यर्थः॥

## आनर्थक्यमिति चेन्न तदपेक्षत्वात्॥ १०॥

---

[1] यथामुद्रितं पाठः उ० ह० लि० पु० वर्तते।

[2] 'जानि' इति पाठ उ० ह० लि० पु० वर्तते। स चासम्यक्।

[3] यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते। 'गत्ये' इति पाठः सम्यक्।

[4] 'भुक्त' इति उ० ह० लि० पु० पाठः।

[5] 'अवशिष्टता' इति उ० ह० लि० पु० पाठः।

[6] 'द्रव्यत' इत्येकस्मिन् 'रुच्यत' इत्यन्यस्मिन् ह० लि० पु० पाठः।

[7] 'उभयेरिव' इति उ० ह० लि० पु० पाठः।

ननु चरणस्यानर्थक्यं कर्मण एव योनिविशेषप्राप्तिपर्यन्तफलत्वश्रवणादिति चेन्न, अङ्गविषयाचरणसापेक्षत्वादनुशयस्य "आचारहीनं न पुनन्ति वेदाः, आचारप्रभवो धर्म" इत्यादिवाक्येभ्य इत्यर्थः। आचारश्च शौचाचमनादिरूपः पुण्योत्पत्तिप्रतिबन्धकपापात्मकाशुद्धिनिवर्तकत्वेन कर्माङ्गमिति बोध्यम् ॥

## सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥

बादरिस्त्वाचार्योऽशुद्धिक्षयद्वारा यागाङ्गत्ववददृष्टद्वारादि(पि)शुभाशुभयोनिहेतुत्वं चरणस्येच्छन् सुकृतदुष्कृते एव चरणस्यार्थः प्रयोजनमिति मन्यते। तथा चोभयोरेवाचारयज्ञादिकर्मणोः समसमुच्चयेन योन्यादिप्राप्तिहेतुत्वमित्यर्थः ॥

ननु इष्टादिकारिणामेव चन्द्रलोकगमनं भवति, तथा च चन्द्रलोकात् क्रमेण पततो जीवानधिकृत्य कथं प्रोच्यते "कपूयां योनिमापद्येरन्नि" ति, स्वर्यातानां रमणीययोनिमात्रौचित्यादित्याशङ्कां समाधत्ते—

## अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥

इष्टाद्यकारिणामपि रंहणमारोहावरोहरूपं श्रुतमस्ति कौषीतकीश्रुतौ, यथा "ये वैके वा[1] (चा) स्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति" त्यादिना। तथा च "तद्य इह कपूयचरणा" इत्युक्तश्रुतौ वा[2] (चा) निष्टादिकारिणां नरकगतानामपि चन्द्रमण्डलादवरोहः श्रुतः इत्यर्थः। तथा वा (चा) विशेषेण सर्वेषामस्माल्लोकात् प्रयातानां चन्द्रलोकगमनं ततोऽवरोहश्च भवत्येव। केवलं त्वनिष्टादिकारिणां धूमादिक्रमेणारोहो नास्त्यश्रवणादिति भावः ॥

नन्वेवं दुष्कृतिनामपि चन्द्रलोकगमने सुकृतिदुष्कृतिनोः फलाविशेषः। "स सोमलोके विभूतिमनुभूय पुनरावर्तत" इति श्रुत्या चन्द्रलोकगतानामैश्वर्यभोगप्रतिपादनादित्याशङ्कां परिहरति—

## संयमने त्वनुभूयेतरेषामारोरावरोहौ तद्गतिदर्शनात् ॥ १३ ॥

इतरेषां दुष्कृतिनां संयमने याम्यपुर एव भोगः, न तु चन्द्रमसि। तेषां हि आरोहावरोहौ संयमने अनुभूय भोगान् भुक्त्वैव भवत इत्यर्थः। कथं पुनर्भोगप्रयोजनाभावेऽपि तेषां चन्द्रमस्यारोह इष्यते, तत्राह—तद्गतिदर्शनादिति। "चन्द्रमसमेव ते सर्वे गच्छन्ती" त्युक्तश्रुतौ तेषामपि गतिदर्शनादप्याव[3]च्चन्द्रमसीत्यर्थः। तथा च सुकृतिनां भोगार्थं चन्द्रमस्यारोहः दुष्कृतिनां च वृष्ट्यादिक्रमेण शरीरपरिग्रहमात्रार्थं चन्द्रमस्यारोह इति विभाग इति भावः। इह लोक एव योनेर्योन्यन्तरप्राप्तौ च न चन्द्र-

---

[1] यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते।

[2] 'वानिष्टादि' इति उ० ह० लि० पु० पाठः।

[3] 'दथाच्चन्द्रमसी' त्येकस्मिन् ह० लि० पु० पाठः।
'दर्थाच्चन्द्रमसी' त्यन्यस्मिन् ह० लि० पु० पाठः।

मसि गमनं "ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ती" ति प्रमाण[१] (प्रयाण) विशेषणात्। "आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" इति च वाक्यं लोकान्तरगतप्रजामात्रपरमिति।

आधुनिकास्तु नरकागतानां चन्द्रमस्यारोहं नेच्छन्ति। तेषां मते संयमने त्वनु-भूयारोहावरोहाविति सूत्रावयवस्य यथाश्रुतार्थपरित्यागः स्यात्। ते ह्येवं व्याचक्षते—संयमने यमालये समारुह्य तत्र दुःखमनुभूयेतरेषामवरोह इति। तथा तन्मते चन्द्र-मसमेव ते सर्वे गच्छन्तीतिश्रुतिविरोधश्च बोध्यः॥

## स्मरन्ति च ॥१४॥

स्मरन्ति च याज्ञवल्क्यादयो दुष्कृतिनामपि आरोहावरोहौ योगियाज्ञ-वल्क्यादिषु—

अक्षेत्रेभ्यश्च यानन्यानमेध्यान् गृह्णते रसान्।
अथर्वाङ्गिरसेभ्यश्च संभवेद् वैकृतं तु यत्॥
अश्माशनिरवश्यायनागकुष्माण्डवायसाः ।
स्तेनास्तेन च जायन्ते [२]सौम्येनासुरराक्षसाः॥

इत्यादिनेत्यर्थे[३] (र्थः।) अत्र वाक्ये सूर्यकिरणोद्धृतापवित्ररससंसृष्टाः पापिनो वृष्टिद्वाराऽवरोहन्तीत्यवगम्यते। तस्मात् दुष्कृतिनोऽपि नरकभोगानन्तरं देहपरिग्रहा-र्थमारोहावरोहौ भवत इति सिद्धं वचनप्रामाण्यात्॥

## अपि च सप्त ॥ १५ ॥

न केवलं स्वर्गगता नरकगताश्च जीवा आरोहावरोहवन्तः, अपि तु सप्त[४](पा)-तालवासिनोऽपि सप्तविधा जीवा इह देहपरिग्रहार्थं यथोक्तारोहावरोहवन्तः। तद्व्या-पारा[५]दविरोधः प्रत्येतव्यः। उक्तशास्त्रप्रामाण्यादित्यर्थः॥

नन्वेवमारोहावरोहयोरनुशयजन्यत्वात् "जन्माद्यस्य यत" इति ब्रह्मकारणता-प्रतिज्ञाविरोध इत्याशङ्कामपनुदति—

## तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥

तत्रापि आरोहावरोहयोरपि तस्य प्रकृतस्य ब्रह्मणो व्यापारान्नोक्तविरोध इत्यर्थः। अपिशब्दश्च यथोक्तमादिसर्गं समुच्चिनोति। तथा हि श्रुत्यन्तरं वदति

---

[१] 'प्रमाण' इत्येकस्मिन् 'प्रयाण' इत्यन्यस्मिन् ह० लि० पु० पाठः।

[२] 'ऽसौम्येन' इति उ० ह०लि० पु० पाठः।

[३] 'इत्यर्थे' इति उ० ह० लि० पु० पाठः।

[४] 'सप्तपातालवासिनोऽपि' इति उ० ह० लि० पु० पाठः।

[५] 'व्यापारात्' इति उ० ह० लि० पु० अपि पाठः। अंशोऽयमिहापातादागतो भाति।

"यथा अनः सुसमाहितमुत्सर्ज्जद् यायादेवमेवायं शारीर आत्मा प्राज्ञेनात्मना अन्वा-रूढ उत्सर्जद् याती" त्यादि। अवरोहे च परमेश्वराधिष्ठाने प्रमाणं [illegible]-ऽवरोहप्रकारपरीक्षणे वक्ष्यति, अनुशयानां च विहितप्रतिषिद्धकर्मणां [illegible]-रूपाणां निमित्तमात्रत्वमिति भावः ॥

ननु कथमेवमुच्यते "तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चे" तिश्रुत्या विद्या-कर्मणोरेव देहारम्भे प्राधान्यावगमान्नेश्वरस्येत्याशङ्कामपाकरोति—

### विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥

विद्याकर्मणोर्यद्देहारम्भकत्वमिति श्रुत्योक्तं तत्तु विद्याकर्मणोः प्रकृतत्वादेव न तु स्वातन्त्र्याभिप्रायेण, "फलमत उपपत्तेरि" ति सूत्रे ब्रह्मण एव स्वातन्त्र्यस्य वक्ष्यमाणत्वादित्यर्थः ॥

### न तृतीये तथोपलब्धेः ॥ १८ ॥

यथोक्तावारोहावरोहौ च तृतीये स्वर्गिनारक्यपेक्षया तृतीये वक्ष्यमाणयूकादि-जीवे न स्तः, कुतः ? तथोपलब्धेः। "अथैतयोः पथोः न कतरेणचन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत् तृतीयं स्थानं तेनासौ लोको न सम्पूर्यते तस्माज्जुगुप्सेतेति छान्दोग्यश्रुतौ तथोपलब्धेः। आरोहावरोहाभाव-श्रुतेरित्यर्थः। श्रुत्यर्थश्चायम्—एतयोः पथोः पूर्वोक्तदेवयानपितृयानयोरेकतरेणापि न यान्ति यानि यूकामशकादीनि भूतानि तानीमानीहैव च पृथग्वत् परिवर्तमानानि क्षुद्रभूतानि भवन्ति जायस्व म्रियस्वेति पुनः पुनर्जायन्ते म्रियन्ते वेति। तेषामेतद् भूर्लोकाख्यमेव तृतीयस्थानं देवलोकपितृलोकापेक्षया। तेन हेतुनाऽसौ द्युलोको न जावैः सम्पूर्यते। तस्मात् संसारं जुगुप्सेत गर्हयेदिति। अत्र इहैवासकृदावर्तनवचनात् क्षुद्रजन्तूनामारोहावरोहावुत्सर्गतो न स्त इत्यायातम् ॥

### स्मर्यतेऽपि च लोके ॥ १९ ॥

न केवलं श्रुत्युक्ते तृतीये क्षुद्रभूते यथोक्तारोहावरोहयोरभावः प्रत्येतव्यः किं तु नन्दीश्वरनहुषजडभरतादिजनेऽपि च स्मर्यते योन्यन्तरपरिग्रहायारोहावरोहौ न स्त इतीत्यर्थः। पुराणेषु हि स्मर्यते—नन्दीश्वरो मनुष्यपरिणामं हित्वा देवदेहं क्षणादेव प्राप्तो, नहुषश्च देवानामिन्द्रः क्षणादेव सर्पदेहं प्राप्तः, भरतस्तु मरणानन्तरमेव शृगाला-दिदेहं प्राप्त इति। श्रुतौ च क्षुद्रभूतशब्द उपलक्षणपर इति भावः ॥

### दर्शनाच्च ॥ २० ॥

दर्शनात् श्रुतेरपि देहपरिग्रहः कदाचित् प्रकृष्टजीवानामपि विनैवारोहाव-रोहौ भवतीत्यवगन्तव्यम्। यथा "स यदि पितृलोककामो भवति संकल्पादेव पितरः समुत्तिष्ठन्ती" त्यादिश्रुत्या योगिसंकल्पमात्रेण क्षणादेव पित्रादीनां देहपरिग्रहः श्रूयत इत्यर्थः। एतेन श्रुतौ पार्थिवाग्निक्रमेण भूतानामुत्पत्तिरुक्ता, साप्युत्सर्गाभि-

प्रायेण बोध्या। अतएव द्रोणधृष्टद्युम्नसीताप्रभृतीनां योषाख्याग्न्याहुतिं विनैव देह-परिग्रहेऽपि न दोषः॥

क्षुद्रजन्तुप्रसङ्गेन प्राणिनामवान्तरविभागो विचार्यते—ननु चतुर्विधानि भूतानि स्वेदजोद्भिज्जजरायुजाण्डजरूपाणि पुराणादिषु स्मर्यन्ते। श्रुतौ तु तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति-अण्डजं जीवजमुद्भिज्जमितीत्यनेन त्रीण्येव बीजान्यव-गम्यन्त इति विरोधः, तं परिहरति—

**तृतीयशब्दावरोधः संशोकजस्य॥२१॥**

संशोकः स्वेदश्लेष्मादिः कार्ये कारणोपचारात्। तथा च तृतीयेनोद्भिज्ज-शब्देन स्वेदजस्योपरोधः उपसंग्रहः कर्तव्य इत्यर्थः। उभयोरपि स्वेदजोद्भिज्जयोरुदक-भूम्युद्भेदप्रभवत्वसाम्यादिति भावः॥

इदानीमवरोहप्रकारः परीक्ष्यते—

**साभाव्यापत्तिरुपपत्तेः॥२२॥**

"तस्मिन् यावत् संपातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशाद् वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिला माषा इति जायन्ते" इत्यवरोहे प्रकारः श्रूयते। तत्रायं संशयः—किमवरोहन्तो जीवा आकाशादिव्रीह्यादिस्वरूपता-मेव प्रतिपद्यन्ते, किं वा आकाशादिसाम्यमिति समानलक्षणत्वमिति। तत्र वायुर्भू-त्वेति यथाश्रुतशब्दानुरोधात् तत्स्वरूपतामेव प्राप्नुवन्तीति प्राप्ते सिद्धान्तमाह—

आकाशादिव्रीह्यादिप्रवेशेन तत्समानलक्षणत्वमात्रमविभागरूपमनुशयिनः आप-द्यन्ते प्रतिपद्यन्ते, कुतः? उपपत्तेः तस्यैवोपपत्तेः, आत्मनोऽन्यरूपताया अन्यथानुपपत्ते-रित्यर्थः। यथा हि प्रलये जीवतद्रूपकरणानां ब्रह्मणि प्रवेशेन तत्सालक्षण्यरूपेणा-विभागेन "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमि" ति व्यपदिश्यते तथैव जीव आकाशादिप्रवेशेनावरोहान्नाकाशादिकं भवतीत्युच्यते इति भावः। अन्यथा संसा-रिण ईश्वररूपतावच्चेतनस्याचेतनाकाशादिरूपत्वानुपपत्तेः। स्वर्गागतानां व्रीह्यादिस्था-वररूपैर्दुःखभोगानौचित्याच्चेति॥

अवरोहे चारोहापेक्षया वैलक्षण्यमाह—

**नातिचिरेण विशेषात्॥२३॥**

यथा सत्कर्मणा चन्द्रलोकारोहे पितृलोकादिभोगानुसारेण विलम्बो भवति, नैवमवरोहे, किन्तु झटित्येवावरोहो भवति, कुतः? भोगाभोगाभ्यां विशेषात्। भोगा-नुरोधेन हि वर्त्मनि विलम्ब इष्यते, स च भोग आरोह एव श्रूयते नावरोह इत्यर्थः।

तत्रापि "तदभ्यापारादविरोध" इति सूत्रेणावरोहेऽपि यत् परमेश्वराधिष्ठानमु-क्तम्, तत्र प्रमाणं दर्शयति—

## अन्याधिष्ठिते पूर्ववदभिलापात् ॥२४॥

यश्चायमवरोह उक्तः, सोऽपि पूर्ववदारोहवदन्याधिष्ठिते परमेश्वराधिष्ठित एव जीवे भवति, कुतः ? अभिलापात् यथेतमिति वाक्येन पूर्वतुल्यतयैवाभिलापात्। पूर्वस्मिंश्चारोहे प्राज्ञेनात्मनाऽन्वारूढत्वश्रवणात् तद्दृष्टान्तेनावरोहेऽपीश्वरारूढत्वं जीवस्य गम्यत इत्यर्थः।

आधुनिकास्तु अन्याधिष्ठिते व्रीह्यादौ जीवान्तराधिष्ठित इत्यर्थ इत्याहुः। तन्न, "साभाव्यापत्तिरुपपत्तेरि" ति सूत्रेणैव गतार्थत्वात् निष्प्रयोजनकत्वाच्च। अस्मद्व्याख्याने च "जन्माद्यस्य यतः" इति प्रतिज्ञोपपादनमेवास्य सूत्रस्य महाफलमिति॥

## अशुद्धमिति चेन्न शब्दात् ॥२५॥

ननु अशुद्धं नरकाद्यवरोहि पापि जीवजातं तत्र परमेश्वराधिष्ठानं नोचितमिति चेन्न, शब्दात्। नहि शब्दसिद्धेऽर्थे तर्कविरोधो दूषणमित्यर्थः॥

## रेतः सिग्योगोऽथ ॥२६॥

अन्याधिष्ठित इत्यनुवर्तते, अन्यथा संशयाभावेन सूत्रवैयर्थ्यापत्तेः। अथ अवरोहानन्तरं यो रेतः सिञ्चति तद्भूय एव भवतीति श्रुत्युक्तो रेतःसेक्तृपुरुषसंयोगोऽपि जीवे परमेश्वराधिष्ठित एव भवति न स्वत इत्यर्थः। सर्वकर्तेत्यादिश्रुतेरिति भावः।

## योनेः शरीरम् ॥२७॥

अथ रेतः सिग्भावानन्तरं योनौ निषिक्ते रेतसि सति योनेरुत्पाद्यमानं शरीरमपि अन्याधिष्ठित एव जीवे भवतीत्यर्थः। अतः सिद्धमीश्वरो जन्मादिकारणमिति।

तदेवमनेन पादेन ब्रह्मणः सकाशादवान्तरसर्गं प्रतिपादयताऽऽचार्येण प्रसङ्गादनन्तं स्वर्गनरकादिगमनागमनं गर्भवासपर्यन्तविविधक्लेशमयमित्यपि प्रतिपादितम्। "अतः खलु दुर्निष्प्रपतरं तस्माज्जुगुप्सेते" ति श्रुत्यापि संसरणं निन्दितमतस्ततो विरज्य परमात्मानमेवोपासीत, तस्यैव बन्धकतया तदनुग्रहं विनैतादृशसंसारधारानिवृत्त्यसंभवादित्येतत्पादस्यावान्तरतात्पर्यार्थः। तथा च स्मर्यते—

बन्धको भवपाशेन भवपाशाच्च मोचकः।<br>
कैवल्यदः परं ब्रह्म विष्णुरेव सनातनः॥ इति।

इति ब्रह्ममीमांसायां विज्ञानयतिकृते विज्ञानामृताख्य ऋजुभाष्ये

तृतीयाध्यायस्य प्रथमः पादः।



## अथ तृतीयाध्याये द्वितीयः पादः

पूर्वपादे देहाद् देहान्तरप्राप्तिरित्येवंरूपा ऽवान्तरसृष्टिर्ब्रह्मणः सकाशाद् भवतीति विवेचितम्। इदानीमेकस्मिन्नेव देहे स्वप्नादिकालीनमपि सृष्ट्यादिकं ब्रह्मणः सकाशाद् विचार्यम्, ततश्च "जन्माद्यस्य यत" इति ब्रह्मणः कार्यद्वारकलक्षणस्य विचारे समाप्ते ब्रह्मणः स्वरूपलक्षणमपि प्रतिपादनीयं ततश्च प्रपञ्चब्रह्मणोर्भेदाभेदाविति द्वितीयपाद आरभ्यते—

### सन्ध्ये सृष्टिराह हि ॥१॥

जाग्रत्सुषुप्तयोः सन्धौ भवः सन्ध्यः स्वप्नः "सन्ध्यं तृतीयं स्वप्नस्थानमि"ति श्रुतेः। तस्मिन् सन्ध्ये स्वप्ने सृष्टिरस्ति, कुतः ? हि यस्मात् स्वप्ने सृष्टिं श्रुतिराह— "न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते, स हि कर्ते"ति, "स्वप्नेऽपि जीवः सुखदुःखभोक्ता स्वमायया कल्पितविश्वलोक"इति चेत्यर्थः॥

तस्यां च सृष्टौ परमात्मैव साक्षान् निर्मातेत्याह—

### निर्मातारं चैके पुत्रादयश्च ॥२॥

प्रकृतं परमात्मानमेव च तस्यां निर्मातारमेके कठा आमनन्ति "य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः। तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते, तस्मिन् लोकाः श्रिताः सर्वे तदु नात्येति कश्चने" त्यादिना। अत्र हि वाक्ये "सुप्तेषु जागर्ती" त्यादिकं ब्रह्मलिङ्गमेव दृश्यते जीवव्यावृत्तमिति। न च श्रुत्यन्तरे स्वयं विहृत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा च स्वपिति जीवस्य स्वयंशब्देनेतरनिरपेक्षत एव स्रष्टृत्वमुक्तमिति वाच्यम्, उपाधिद्वारकोपादानत्वाभिप्रायेणैव स्वयंशब्दप्रयोगात्। स्वेन ज्योतिषेति तृतीया च विशेषणे, अलुप्तचैतन्य एव स्वपितीत्यर्थः। एतेन "न तत्र रथाः" इत्यादिश्रुत्युक्तजीवकर्तृत्वमप्युपपन्नं, पच्यते तण्डुलः स्वयमेवेतिवदुपाधिद्वारकपरिणामस्वातन्त्र्यविवक्षयेति मन्तव्यम्।

अन्ये तु "न तत्र रथा" इत्याद्युक्तवाक्येऽदृष्टद्वारा 'परम्परया[1] गौणं कर्तृत्वं जीवस्योक्तमिति न विरोध इत्याहुः।

ननु स्वप्नो ज्ञानमात्रमेवास्तु, किमत्र सृष्टिकल्पनयेत्याशङ्क्याह—पुत्रादयश्चेति। चो हेतौ। तत्र हि स्वप्ने जाग्रद्वदेव पुत्रादयः प्रतीयन्ते, ते च पुत्रादयः आत्मचैतन्यमात्रा भवितुं नार्हन्ति, नित्यतापत्तेः स्वरूपचैतन्यस्य निराकारत्वात्, तथा कर्मकर्तृविरोधेनैकस्य भास्यभासकतानुपपत्तेः। जाग्रत्पदार्थानामपि तथात्वापत्त्या विज्ञानवादिबौद्धमताभ्युपगमापाताच्च। यदि च बुद्धेर्घटाकारः परिणाम एव ज्ञानशब्देनोच्यते तदा स एवास्माभिः स्वप्नसृष्टिरुच्यते। नैयायिकाद्यैस्तु नैवमिष्यत इति

---

[1] 'परंपरया' इति उ०ह०लि०पु० पाठः सम्यक्। 'परं यस्या' इति मु०पु० पाठोऽयुक्तः।

विशेषः । न च स्वप्ने परिदृश्यमानाः पराभिप्रेतबाह्या भवितुं युक्ताः बाधकं विना अन्तःस्थत्वांशे स्फुटप्रत्यक्षत्वांशे च बाधोत्तरमप्यनुभूयमाने भ्रमत्वकल्पनानौचित्यादिति भावः ॥

ननु स्वप्नेऽपि सृष्ट्यङ्गीकारे स्वप्नो मायामात्रं जाग्रत्तु सत्यमिति विभागः किंनिमित्त इति तत्राह—

## मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥३॥

स्वाप्नसृष्टिः परमेश्वरस्य मायामात्रमिति तु जाग्रत्सृष्टितो वैलक्षण्यम् । एतच्च "स्वप्नेऽपि जीवः सुखदुःखभोक्ता स्वमायया कल्पितविष्णुलोक" इति परमात्मप्रकरणस्थश्रुतावुक्तम् । कथं ? तदाह—कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् । यथा हि जाग्रद्विषयाः सर्वपुरुषसाधारण्येन तथाऽर्थक्रियाकारित्वेन स्थिरत्वेन च दृष्टोत्पादकविनाशकसामग्रीनियतत्वादिना च कृत्स्नैर्धर्मैरभिव्यज्यन्ते नैवं स्वप्नविषयाः, अत इन्द्रजालवत् परमेश्वरमायाकार्यतया मायामात्रा इत्यर्थः । मात्रशब्देन च स्थूलभूतादिकार्यत्वमेव व्यावर्तते न तु लिङ्गशरीरकार्यत्वमपि, शशशृङ्गतुल्यत्वेऽत्यसतो भानं स्यादिति भावः

नन्वेवमैन्द्रजालिकमपि सत्यमेव स्यात्, स्यादेव क्षणभङ्गुरतया बाह्यविषयवदर्थक्रियाकारित्वाभावेन चासत्यव्यवहारात् न त्वभावरूपतया "नाभाव उपलब्धेरि" तिसूत्रेणात्यन्तासत उपलब्धिप्रतिषेधात् । ऐन्द्रजालिकेश्वरयोर्विशेषस्त्वियान्—यदैन्द्रजालिकस्य मन्त्रादिनैरपेक्ष्येण सत्यसंकल्पादिमती प्रकृतिपुरुषादिकोशभूता स्वशक्तिरेव मुख्यमाया—

त्वं वैष्णवी शक्तिरनन्तवीर्या विश्वस्य बीजं परमासि माया ।

इत्यादिस्मृतिभ्यः । तयैव हि विश्वं व्यामोहयतीति । तच्छेषतया तान्ये[1] (चान्ये) प्रकृत्यंशाः पुरुषादयश्च माया । तया च मायया लौकिककरणनिरपेक्षयात्र रसाद्युपचितमनसः परिणाममात्रमर्थं स्वप्ने परमेश्वरः कटककुण्डलादिवन्निर्मिमीते । स्वाप्नविषये बुद्धिवृत्त्यतिरिक्ताकारा बुद्धिवृत्तिरेव मोहो भ्रम इति । अतः शुक्तिरजतादिसाधारणमतस्मिंस्तद्बुद्धिरित्यादिरूपं भ्रमलक्षणं स्वप्नेऽप्यस्ति । परभ्रमजनिका स्वाश्रया व्यामोहिनी दुर्लङ्घ्या च विदुषः शक्तिर्मायेत्युच्यते । स्वाप्नविषयस्य मायामात्रत्वं तु लोकदृष्टसामग्रीनैरपेक्ष्येण मायाकार्यतया कार्यकारणाभेदादुक्तमिति । एवमेव भ्रमविषयस्य बाधः स्वप्नस्थले बुद्धिवृत्तावुपपद्यते "मया स्वप्ने यद् दृष्टं तत् सर्वं बुद्धिविकार एव न तत्र बाह्यविषयोऽस्ती"ति । अत एव च शुक्तावनिर्वचनीयरजतोत्पत्तिवादोऽप्युपपन्नः, शुक्त्यवच्छिन्नमनसि रजतस्य दुर्लङ्घ्यकारणजन्यत्वरूपानिर्वचनीयत्वात् । रजतस्यापि च बाधो बुद्धिवृत्त्यतिरिक्ततयेति पूर्वमुक्तम् ।

अन्ये तु स्वाप्नेऽत्यन्ततुच्छमभ्युपगच्छन्तः "सन्ध्ये सृष्टिरि" त्यादिसूत्रद्वयं

---

१ 'तान्ये' इत्येकस्मिन् 'वान्ये' इत्यन्यस्मिन् ह० लि० पु० पाठः ।

पूर्वपक्षतया व्याख्याय "मायामात्रं तु"इत्यनेन सिद्धान्तमाहुः, मायामात्रं तुच्छमात्र-मित्यर्थ इति च व्याचक्षते। तत्र (तन्न), आगामिसूत्रेण सृष्टेरेव साधयिष्यमाणत्वात् स्वप्नसृष्ट्यभावप्रतिपादनस्य काकदन्तान्वेषणवन्निष्फलत्वाच्च। स्वप्नदृष्टान्तेन जाग्र-त्प्रपञ्चस्यापि तुच्छत्वं साधनीयमिति प्रयोजनमिति च [1](न), आचार्यैरेवमसाधितत्वात् वैधर्म्याच्च। "न स्वप्नादिवदि" ति सूत्रेण वैपरीत्यस्यैवोक्तत्वात् "नाभाव उपलब्धेरि" "त्यनेन स्वप्नेऽपि तुच्छभानप्रतिषेधाच्च।

किं चैवं तेषां स्वप्नादावनिर्वचनीयार्थोत्पत्त्यभ्युपगमविरोधः। न च तेषाम-निर्वचनीयतावादोऽपि गुडजिह्विकैव,

"कृपणधीः परिणाममुदीक्षते क्षपितकल्मषधीस्तु विवर्तताम्।
स्थिरमतिः पुरुषः पुनरीक्षते व्यपगतद्वितयं परमं पदम्॥"

इति तेषामभ्युपगमादिति वाच्यम्, एवं सति कार्यकारणाद्यभावेन "जन्माद्यस्य यत" इत्यादिसूत्रैर्जगत्कारणतया ब्रह्मलक्षणं तत्साधनं सृष्ट्यादिप्रतिपादनं सर्वमेव नोपपद्येत। तस्मान्नेदं व्यासदर्शनं किन्तु शून्यवादिबौद्धस्यैवान्तरङ्गभूमिकेत्युपेक्षणीयमास्तिकैः। ब्रह्मातिरिक्तस्य बाधे प्रमाणबाधेन पुनर्ब्रह्मणि संशयाद्यापत्तेः, ज्ञानप्रामाण्यसंशयाहि-तार्थसंशयादिवदिति दिक्॥

इतश्च स्वप्ने सृष्टिरभ्युपगन्तव्या—

## सूचकश्च हि श्रुतेराचक्षते च तद्विदः॥४॥

स्वप्नानुभवस्य निर्विषयत्वे सति तेन निर्विषयज्ञानेनातीतानागतादिर्विषयविशेषः सूचयितुं न शक्यते सादृश्याद्यसम्भवात्। सूचकश्च हि स्वप्नो भवति, कुतः? "पुरुषं कृष्णं कृष्णदन्तं पश्यति स वैनं हन्ती"त्यादिना स्वप्नप्रकरणे यमदूतसमानाका-रस्वप्नस्य मरणसूचकत्वश्रवणात्। तद्विदः स्वप्नाध्यायविदः आचक्षते कुञ्जरारो-हणादीनि धन्यानि खरयानादीनि त्वधन्यानीति। अतः स्वप्नेऽपि मनउपादाना परमात्मनिर्मिता विषयसृष्टिरस्तीत्यर्थः। स्कान्दे त्वस्य सूत्रस्यार्थः उक्तः—जाग्रदित्यु-दितावस्थामपेद्य स्वप्ननामिका अवस्थानृतरूपा हि नासत्या सापिच[2] स्वप्नम्, तथाहि स्वप्नदृष्टं च वस्तु तत्साम्ययोगतः सूचकं हि भवत्येव जाग्रत्सत्यार्थसिद्धय इति। स्वप्ने च घटादिसृष्टिरेव बाधिता भवति, पूर्वसूत्रोक्तयुक्तेः। सुखादिसृष्टिस्तु अबाध्यैव तद्युक्त्यभावाद् बाधाननुभवाच्चेत्यपि विवेक्तव्यम्।

यत्तु कालदैर्घ्यादिविसंवादात् स्वप्नसृष्टिर्नास्तीति, तन्न, मनोमयकालस्य बाह्यका-लादिभिन्नत्वेन विसंवादेऽप्यक्षतेः। घ्नन्तीव जिनन्तीव हस्तीव विच्छाययतीत्यादाविव-

[1] 'चत्र' इत्येकस्मिन् 'चन्त' इत्यन्यस्मिन् ह० लि० पु० पाठः।
'चेन्न' इति सम्यग् भाति।

[2] 'सापि च स्वतं' इत्येकस्मिन् अन्यस्मिंश्च ह० लि० पु० पाठः।
'सापि चानृतं' इति पाठः सम्यक् प्रतिभाति।

कारस्तु जाग्रदपेक्षया बोध्यः, यदेव जाग्रद्भयं पश्यति तदत्राविद्यया मन्यत इत्युत्तरवाक्यात्। "न रथयोगा" इत्यादिश्रुतिस्तु स्वप्ने बाह्यरथाद्यभावं स्वाप्नसृष्टिप्राक्काले रथाद्यभावं वा प्रतिपादयति न तु सर्वथैव रथाद्यभावं "रथादीन् सृजत" इत्युत्तरवाक्यविरोधादिति बोध्यम्। स्वप्नसृष्टेरीश्वरकर्तृकत्ववचनं च सकलानां जाग्रदादिकालीनमानससृष्टीनामुपलक्षणमतो न न्यूनता ॥

ननु यदि स्वप्ने विषयसृष्टिर्भवति तदा जाग्रत्काले ऽपि ते विषया दृश्येरन् तद्विनाशकारणादर्शनादित्याशङ्कां परिहरति—

**पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥५॥**

यदीश्वरनिर्मितं स्वाप्नं विषयजातं तत् तस्यैव परस्य कारणस्येश्वरस्याभिध्यानात् संहारसङ्कल्पात् क्षणेनैव तिरोहितं तरङ्गबुद्बुदादिवद् विलीनं भवति, कुतः? हि यस्मात् ततः परमेश्वराभिध्यानादेवास्य जीवस्य मनोविकारैर्बन्धः, तद्विपर्ययो विकारविलयेन चिन्मात्ररूपतयाऽवस्थानं मोक्षश्च भवति—

बन्धको भवपाशेन भवपाशाच्च मोचकः।
कैवल्यदः परं ब्रह्म विष्णुरेव सनातनः॥

इत्यादिवाक्यशतैरित्यर्थः ॥

सुषुप्तौ स्वप्नविलये पराभिध्यानमेव केवलं कारणं, जाग्रदवस्थायां स्वप्नविलये तु परमेश्वरकृतो मनोदेहसंयोगोऽपि दृष्टं कारणं भवतीत्याह—

**देहयोगाद् वा सोऽपि ॥६॥**

वाशब्दोऽत्र कालभेदव्यवस्थिते विकल्पे। सोऽपि परमेश्वराभिध्यानजोऽपि तिरोभावः कदाचित् जाग्रदवस्थायां मनोदेहसंयोगद्वारा भवतीत्यर्थः। दृष्टो ह्यग्निसंयोगेन घृतस्य कठिनाकारपरिणामविलय इति ॥

स्वप्नविलयरूपिण्याः सुषुप्तेः कारणं विचार्येदानीमाधारं विचारयति—

**तदभावो नाडीषु तत् श्रुतेरात्मनि च ॥७॥**

तस्य स्वप्नप्रपञ्चस्य जीवस्य वाऽभावो लयः सुषुप्तिरिति यावत् स नाडीषु देहान्तःस्थितासु भवति, तथा आत्मनि परमात्मनि च पुरीतद्वेष्टितहृदयाकाशावच्छिन्ने भवति। बुद्धौ हि नाडीविशेषगतायां स्वप्नप्रपञ्चस्य लयो भवतीति नाड्यस्तदाधाराः नाड्यभ्यन्तराकाशस्येव। परमात्माधिष्ठितकारणोपाधावेकतां बुद्धिर्गच्छति समुद्रे नदीवत् पृथग्वृत्त्यभावान्नद्या[1](द्याः)तदवच्छेदेनैवोपाधिविलयात्तदवच्छिन्ने परमात्मस्वरूपे जीवस्वरूपं साजात्यादेकतां गच्छतीत्यतः परमात्माऽपि सुषुप्त्याधार इत्यर्थः। तत्र प्रमाणमाह—तत् श्रुतेरिति। "नाडीषु सृप्तो भवति" पुरीतति शेते, [2]स्वम-

[1] 'नद्यात् दवच्छेदेनैव' इति उ० ह० लि० पु० पाठः।

[2] 'स्वप्नयीत' इति मु० पु० पाठो न युक्तः।

पीतो भवति, सति सम्पद्य न विदुः सति सम्पद्यामह" इत्यादिभ्यः सुषुप्त्य-धिकारश्रुतिभ्यस्तस्योक्तार्थस्य श्रवणादित्यर्थः। पुरीतच्छब्देन हृदयस्थनाडीमयपद्मा-कारचक्रवेष्टनं कर्मो(-चर्मो)च्यते, तस्य च परम्परया गृहस्येव स्वापाधारत्वम्। एतेन हृदयाकाशादीनामपि स्वापाधारत्वं श्रुत्यन्तरोक्तमुपपन्नम्। द्वारद्वारिभावेन स्वापाधार-ताविश्रान्तिस्तु परमात्मन्येव ॥

स्वाप्नसृष्टिवद् बौद्धं सृष्ट्यन्तरं जाग्रदाख्यमपि परमेश्वरादेव भवतीत्याह—

अतः प्रबोधोऽस्मात् ॥८॥

अतः श्रवणादेवास्मादुक्तात् परमात्मनः सकाशात् प्रबोधो बुद्धेरिन्द्रिय-द्वारिका विषयाकारतया सृष्टिर्भवति सुवर्णस्येव कटकाकारतयेत्यर्थः। सा च श्रुतिः "सत आगत्य न विदुः सत आगच्छामह इति, केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ती" त्यादिः। तथा स्मृतिरपि—

योऽतः[1] (न्तः) प्रविश्य मम वाचमिमां प्रसुप्ताम्।
संजीवयन्य (त्य) खिलशक्तिधराः (रः) स्वधाम्ना ॥
अन्यांश्च हस्तचरणश्रवणत्वगादीन्।
प्राणात्रयो[2] (न्नमो) भगवते पुरुषाय तस्मै ॥

इत्यादिरिति।

ननु स्वप्नसुषुप्तिजाग्रद्रूपमवस्थात्रयं चेतनस्य जीवस्यैव श्रूयते तत्कथं तत्त्रयं बुद्धेः सृष्टिप्रलये (य) रूपमित्युक्तमिति चेन्न, परमार्थाभिप्रायेणास्माभिरुक्तत्वात्। जीवो हि स्वतोऽविकारीति "आभास एव चे" त्यत्रोक्तः। अतः स बुद्ध्युपाधिनैवा-वस्थात्रयवान् भवति "तद्गुणसारत्वात्तु तद्व्यपदेश" इत्युक्तसूत्रात्। तथा चोक्तम्—

जाग्रत्स्वप्नसुषुप्तं च गुणतो बुद्धिवृत्तयः।
तासां विलक्षणो जीवः साक्षित्वेन व्यवस्थितः ॥

इति। वृत्तिर्जीवनहेतुर्व्यापारः। तत्रः[3] (तत्र)स्वप्नः प्रमाणव्यापारद्वारा कश्चित् परिणामो विषयाकारताविलय इति। यदि च वृत्त्यनुभवरूपा एव पुरुषस्य जाग्रदाद्य-वस्था उच्यन्ते, तदा साक्षादेव जीवानां प्रबोधो व्याख्येयः ॥

ईश्वरादेव प्रबोधे युक्तिमप्याह—

स एव च कर्मानुस्मृतिशब्दविधिभ्यः ॥९॥

---

[1] 'योंतः प्रविश्य' इति उ० ह० लि० पु० पाठः। 'योऽन्तः' इति सम्यक्।
'न्य' इति 'धराः' इति उ० ह० लि० पु० पाठः।
[2] यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते।
[3] 'तत्र' इति उ० ह० लि० पु० पाठः।

चकारो हेतौ। य एव हि यस्मिन् देहे सुषुप्तः पुरुषः स एव प्रबोधकाले तस्माद् देहात् प्रबुध्यते न पुनर्जीवान्तरम्। न चायं नियमः सर्वजीवाधिष्ठातारं प्रतिनियतजीवप्रबोधकमेकं परमात्मानं विना घटते। जीवस्य विशेषविज्ञानाभावेन स्वयं प्रबोधासम्भवात्। कर्मनिमित्तकत्वेऽपि दृष्टकारणं कर्तारं विना कार्यानुपपत्तेः। अन्यथाऽदृष्टमात्रैककारणपरिशेषापत्तेरिति। तथा चोक्तम्—

"येन चेतयते विश्वं विश्वं चेतयते न यम्।"

इति। न चान्यस्य देहे अन्येषां लिङ्गशरीरमेव नास्तीति वाच्यम्, अपत्यलिङ्गदेहानामप्यन्ततः पितृलिङ्गदेहे संसृष्टत्वादिति। कुतः पुनः स एवोत्तिष्ठतीत्यवधृतं, तत्राह—कर्मेत्यादि। कर्मशेषानुष्ठानदर्शनात्, तथा पूर्वप्रबोधदृष्टपदार्थानुस्मृतिदर्शनात्, तथा शब्दात् "प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव, त इह व्याघ्रो वा सिंहो वृको वा यद् यद् भवन्ति तत्तदाभवन्ती" त्यादिरूपात्, तथा विधेः विद्याकर्मविधेश्चेत्यर्थः। यदि सुप्तः पुरुषो गत एवान्य एव वोत्तिष्ठेत तदा कृतहान्यकृताभ्यागमप्रसक्त्या विधयोऽनर्थकाः स्युरिति। प्रतिन्यायं प्रत्यागतं गतिवैपरीत्येनेति यावत् प्रतिगोलकं बुद्धान्ताय जागराय तदाभवन्ति सुषुप्त्यादौ तिष्ठन्ति न पुनरपूर्वोत्पत्तिरित्यर्थः। अत्रानुस्मृत्यादिहेतुभिर्जीवानां नित्यत्वमप्यायातं सुषुप्तप्रलययोस्तदुत्थितयोश्च समानत्वात्। तथा स एवेति वचनाज्जीवबहुत्वसिद्धान्तः॥

तदेवमवस्थात्रयं विचार्येदानीं सुषुप्तावावान्तरं द्वैविध्यं प्रतिपादनीयम्। ननु सुषुप्तौ जीवस्यात्यन्तं विलये सुषुप्तस्यानन्दभोगादिश्रुतिरनुपपन्नेत्याशङ्क्य तस्या अवान्तरभेदमाह—

## मुग्धेऽर्धसंपत्तिः परिशेषात् ॥१०॥

मुग्धे ऽस्पष्टज्ञाने पुरुषेऽर्धसम्पत्तिरूपा सुषुप्तिर्भवति। यथा सम्प्रज्ञातासम्प्रज्ञातभेदेन योगो द्विविधो भवति तथा सुषुप्तिरपीति, कुतः? परिशेषात्। मोहो हि न जाग्रत्स्वप्नौ, स्पष्टज्ञानाभावात्। नापि सर्वसम्पत्तिरूपा सुषुप्तिः, ज्ञानलिङ्गानां सुखदुःखमोहानुस्मृतीनां रोमहर्षवेपथुवैकृत्यादीनां च दर्शनात्। अत एव पुनरुत्थानाच्च न मरणम् अयोगिनां च जीवदशायामवस्थात्रयातिरिक्तावस्था नास्तीति बृहदारण्यकसप्तमेऽध्यायेऽवगतम्। अतः परिशेषात् सुषुप्तावान्तर एव मोहो ब्रह्मण्यर्धसम्पत्तिरूप इत्यर्थः। एवञ्च इमामेवार्धसम्पत्तिरूपां सुषुप्तिमधिकृत्य प्रवृत्ता "आनन्दभुक् चेतोमुखः प्राज्ञः जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं यत् प्रकाशते" इत्यादिश्रुतयः सुषुप्तावानन्दभोगं प्रपञ्चं च वदन्ति तदा प्र[1]ज्ञत्वं प्राज्ञेऽर्धसम्पत्त्या बोध्यम्। प्रपञ्चशब्दश्च त्रिविधरचनायां रूढ इति। तथाऽस्यामेवावस्थायां योगाश्च सत्त्वादिगुणभेदेन सुखदुःखमोहानभ्युपगच्छन्ति। सर्वसम्पत्तिरूपां चाधिकृत्य "यत्र त्वस्य सर्वमात्मैवाभूत तत् केन कं पश्येदि" त्यादिश्रुतय इति न श्रुतीनामन्योन्यविरोध इति भावः।

---

[1] यथामुद्रितं पाठः उ० इ० लि० पु० वर्तते।

नन्वेवं तामस्यामेव मूर्छावस्थायां कथं लोके मोहव्यवहार इति चेत्, "यत्रायमात्माऽऽबल्यं न्येत्य संमोहमिव न्येत" त्यादिश्रुतिषु मरणादिकालीनायां तामस्यवस्थायां प्रयोगबाहुल्यादिति। एत्य गत्वेत्यर्थः। जीवस्य चतुर्थी मरणावस्था ब्रह्मलोकगतिप्रसङ्गेन चतुर्थाध्याये वक्ष्यते "वाङ्मनसि दर्शनादि" त्यादि बहुविस्तरेणेति। तुरीयावस्थापि मोक्षरूपा तत्रैव वक्ष्यत इति च। यः[1] यथोक्तां तु मोहावस्थां नैयायिकाः स्वप्नमध्ये प्रक्षिप्य सुषुप्तेर्ज्ञानसामान्याभावरूपतामेव वदन्ति। पातञ्जलाः पुनरिमां निद्राख्यां वृत्तिमाहुः "अभावप्रत्ययालम्बना वृत्तिर्निद्रे" ति योगसूत्रात्। अभावो वृत्तीनां सामान्याभावो महासुषुप्तिस्तस्याः प्रत्ययः कारणं तमः, तदालम्बना तत्प्रचुरा चित्तविषयिणी वृत्तिः "सुखमस्वाप्सं दुःखमस्वाप्सं मूढोऽस्वाप्सम्" इत्येवंरूपजाग्रत्कालीनस्मरणानुमेया अर्धसम्पत्तिरूपिणी निद्रेति तत्सूत्रार्थः। तदेकवाक्यतयात्र सैवावस्थाऽर्धसम्पत्तिरूपाऽवधार्यते ॥

तदेवं "जन्माद्यस्य यत" इति कार्यद्वारकं ब्रह्मणो लक्षणं सृष्टिप्रलयप्रक्रियया। इदानीं ब्रह्मणो अन्तरङ्गशक्तिद्वारकं लक्षणं ब्रह्मस्वरूपं ब्रह्मप्रपञ्चोयर्भेदाभेदौ च परीक्ष्येते पादसमाप्तिं यावत्—

## न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥

स्थानमुपाधिस्तत्रैवाभिव्यक्तेः लिङ्ग(लिङ्गं)व्यञ्जकमौपाधिकधर्म इति यावत्। तैरेव हि धर्मैर्लिङ्गशरीरव्यवहारः। तत्तथा च परस्य परमात्मनः स्थानतोऽपि उपाधितोऽपि न उभयलिङ्गं जीववद् यथोक्तावस्थाभेदेन ज्ञानाज्ञानरूपधर्मद्वयमस्ति न यथोक्तजाग्रदाद्यवस्थात्रयसम्बन्धोऽस्तीति यावत्, किं त्वविलुप्तोपाधित्वात् सदा सर्वसाक्षित्वसदैश्वर्यसदानन्दत्वाद्येकरूपत्वमेव, कुतः? सर्वत्र हि। हि यस्मात् सर्वत्रैव वस्तुन्यधिष्ठातृतया परस्तिष्ठति "यः स सर्वस्मिन् तिष्ठन् सर्वमन्तरो यमयति" इति श्रुतिः। तच्च सर्वाधिष्ठानं साक्षित्वाद्यनित्यत्वे न सम्भवति स्वाज्ञानकालीनकार्ये अधिष्ठानासम्भवादित्यर्थः। तथा च औपाधिकानेकरूपत्वस्याभावोऽपि परमात्मनो जीवव्यावृत्तं लक्षणम्। जीवे चात्मसाक्षित्वादिकं तदप्यनित्यमिति। उपाधिशबलस्यापि ब्रह्मणः सदैकरूपत्वं विष्णुपुराणादावुक्तम्—

परः पराणां परमः परमात्मात्मसंस्थितः।
नामरूपादिनिर्देशविशेषणविवर्जितः ॥
सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः।
ततः स वासुदेवेति विद्वद्भिः परिपठ्यते ॥
तद्ब्रह्म परमं नित्यमजमक्षयमव्ययम्।
एकरूपं च सदा हेयाभावाच्च निर्मलम् ॥

इत्यादिभिः। न चेदं सूत्रमेतादृशवाक्यानि च विविक्तब्रह्मपराणि वक्तुं शक्यन्ते, जीवात्मसाधारण्येन ब्रह्मलक्षणत्वानुपपत्तेः परस्येत्यादिविशेषवचनवैयर्थ्यापत्तेश्चेति ॥

[1] 'चयः' इति उ० ह० लि० पु० पाठः।

## न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥

ननु परस्य नोभयलिङ्गत्वाभावो घटते ब्रह्मण्यपि जाग्रदाद्यवस्थाभिर्ज्ञानाज्ञानरूपलिङ्गभेदश्रवणात्। यथा माण्डूक्ये चतुष्पादब्रह्मकथने जागरितस्थानो वैश्वानरः प्रथमः पादः, स्वप्नस्थानस्तैजसो द्वितीयः पादः, सुषुप्तस्थानः प्राज्ञस्तृतीयः पाद इति चेन्न, प्रत्येकमतद्वचनात् वाक्यशेषेण प्रत्येकं तत्तदवस्थावदन्यत्ववचनात्। यथा, "नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञमदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्त" इत्यनेन। अत्र नान्तःप्रज्ञमित्यनेन स्वप्नावस्थाप्रतिषेधः, बहिःप्रज्ञत्वाभावेन मोहावस्थानिषेधः, न प्रज्ञानघनमित्यनेनेच्छाकृत्यानन्दसंभेदाज्जीवस्वरूपतो व्यावृत्तिरुक्ता, जीवा हि मोक्षादावौपाधिकधर्मनिवृत्त्या चिन्मात्रेण शिष्यन्ते। अथवा पूर्ववाक्ये प्रसक्तस्य विज्ञानघनत्वेन ज्ञानव्यक्तिभेदस्य अनेन प्रतिषेधः। न प्रज्ञमित्यनेन चैतन्याश्रयत्वं प्रतिषिद्धम्, नाप्रज्ञमित्यनेन च सुषुप्तमरणाद्यवस्थाः प्रतिषिद्धा इति। अतो न ब्रह्मणोऽवस्थाभिरुभयलिङ्गत्वमित्यर्थः। ब्रह्मणो जाग्रदाद्यवस्थावचनं वां[1] (चां) शांशिनोरभेदेन जीवावस्थाभिर्बोध्यम्,

स्वायंभुवाद्या मनवो हरिं ध्यायन्ति कर्मठाः।
व्रताचारार्चनाकर्मस्तुतिजप्यपरायणाः ॥
जाग्रत्स्वप्नसुषुप्त्यादिवर्जितं नामवर्जितम्।
अध्यक्षजाग्रदादीनां शान्तरूपं सुरेश्वरम् ॥

इत्यादिस्मृतिभ्यः। अत एव श्रुत्यन्तरे "अथास्य पुरुषस्य चत्वारि स्थानानि भवन्ति नाभिर्हृदयं कण्ठं मूर्धा च तत्र चतुष्पदं ब्रह्म विभाति, जागरिते ब्रह्मा, स्वप्ने विष्णुः, सुषुप्ते रुद्रस्तुरीयमक्षरं स आदित्यो विष्णुश्चेश्वरश्चे" त्यत्र व्यष्टिजीवानां जाग्रदाद्यधिष्ठातृभ्यो ब्रह्मविष्णुरुद्रेभ्योऽधिकारिदेवताभ्यो मित्रत्वेन[2] (भिन्नत्वेन) तुरीयाख्यं चतुर्थं परमेश्वरमुक्त्वा अस्यैव शक्तिशक्तिमदंशांश्याद्यभेदेन तत्त्रितयरूपत्वं "स आदित्य" इत्यादिना। तत्रादित्यो ब्रह्मा ईश्वरो रुद्र इति। एवं पुराणे यद्यप्यस्ति विस्तरभयादत्र न लिख्यते। तुरीयशब्दश्च चतुर्थवाची। सोऽपि स्वस्वावस्थात्रयाधारगुणत्रयाभिमानिब्रह्मविष्णुहराख्यदेवतात्रयापेक्षया सर्ववित्त्रयाधा[3] (धारे) परमेश्वरेऽप्युच्यते। तुर्यातीतशब्देन स्वस्वोपाधिविविक्त ऐश्वर्योपलक्षितः परमात्मा चिन्मात्र एवोच्यत इति पुराणादिष्ववधृतमिति ॥

## अपि चैवमेके ॥ १३ ॥

अपि च एके काण्वा एव[4] (एवम्) अतद्रूपजाग्रदाद्यवस्थाशून्यमेव परमेश्वर-

---

[1] 'वां' इत्येकस्मिन् 'चां' इत्यन्यस्मिन् ह० लि० पु० पाठः।

[2] यथामुद्रितं पाठ उ० ह० लि० पु०। 'भिन्नत्वेन' इति सम्यक्।

[3] 'सर्ववित्त्रयाधारे' इति उ० ह० लि० पु० पाठः।

[4] 'एवं' इति उ० ह० लि० पु० पाठः।

मामनन्ति "अस्थूलमनण्वह्रस्वमदीर्घमि" त्यादिना "अचक्षुष्कमश्रोत्रमवागमनोऽतेज-स्कमप्राणममुखममात्रमनन्तरमबाह्यं न तदश्नाति किंचन न तदश्नाति कश्चन, एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत" इत्यन्तेन। अस्यां हि श्रुतौ अचक्षुष्कमित्यादिना चक्षुरादिशून्यत्वादक्षरत्वादिवचनाच्च जाग्रदाद्यवस्थाविरहोऽवगम्यत इत्यर्थः।

न चैतद् वाक्यं विवेकपरमिति वाच्यम्, जीवव्यावृत्त्यसंभवात् "अचक्षुष्कमि" ति बहुव्रीहिसमासतो विवेकालाभाच्च। "न तदश्नाति किञ्चने" ति चलोकवद् भोजनस्यैव प्रतिषेधो "न ह वै देवा अश्नन्ति न पिबन्ति एतदेवामृतं दृष्ट्वा तृप्यन्ती" त्यादिश्रुतिवत् "तदश्नाति कश्चने" ति वाक्यसहपाठात्। अन्यथा ईश्वरस्यापि योगिभोग्यत्वेन "ऋतं पिबन्तौ, भर्ता भोक्ता महेश्वर" इत्यादिश्रुतिस्मृतिविरोधेन चासामञ्जस्यापत्तेरिति॥

ननु अवस्थावत्ताप्रतिपादकम् अवस्थाशून्यताप्रतिपादकं च वाक्यजातं वर्तते, तयोर्मध्ये कथमुत्तरवाक्यस्यैव बलवत्त्वमवधारितम्? तत्राह—

## अरूपवदेव हि तत्प्रधानत्वात्॥ १४॥

हि यस्मात् उभयविधवाक्यसत्त्वेऽपि अरूपवदेव ब्रह्मरूपम् "द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं चे "त्यादिश्रुत्युक्तं स्थूलसूक्ष्मशरीरद्वयं जाग्रदाद्यवस्थाहेतुभूतं तत् शून्यमेव परं ब्रह्म प्रतिपदि (पत्त) व्यम्, कुतः? तत्प्रधानत्वात् तत्परत्वात् श्रुतीनामन्ततो यदुत्तरतरं तदरूपमनामयम् "य एतद् विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति, यन्मनसा न मनुते येनाहुर्मनो मतं तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इत्यादिश्रुतिभिरवस्थाधारैर्मनआदिकरणैः शून्यस्यैव ब्रह्मणः सम्यग्ज्ञानविषयत्वावधारणात्। किं चावस्थाप्रतिपादकवाक्यानां "वासुदेवः सर्वमि" त्यादिवाक्यवद्दंशांशितया भेदोपासापरत्वेनोपपत्तिरस्ति। निषेधवाक्यानां च प्रयोजनान्तराभावेन तत्त्वावेदकतया स्वपरत्वमेवोचितम्। अपि च "अथात आदेशो नेति, न ह्येतस्मादिति, नेत्यन्यत् परमस्ति" इति श्रुतिर्मूर्त्तामूर्तरूपाभावात् आदेशस्यैव पारमार्थिकत्वं वदति "न ह्येतस्मादिति नेत्यन्यत् परमस्ति" इत्यनेनेति। एतेन परमेश्वरस्य लीलाविग्रहेण लीलाविग्रहकल्पनमाधुनिकानामपसिद्धान्तः। अरूपवदेवेत्यवधारणात् ब्रह्मविष्णुशिवादीनामसम्भवात्।

परोऽज्ञानमयोऽ सद्भिर्नामजात्यादिभिर्विभुः।
न योगवान्न युक्तोऽभून्नैव पार्थिव योक्ष्यति॥

इति[1] विष्णुपुराणादिविरोधाच्चेति॥

तदेवमुभयलिङ्गत्वप्रतिषेधेनैकमात्ररूपकत्वमुपाधिसाधारण्येन लक्षणमुक्तम्। इदानीं जीवस्यासाधारणं स्वरूपमुच्यते—

---

[1] अं० २ अ० १४ श्लो० ३०।

## प्रकाशवच्चावैयर्थ्यात् ॥१५॥

तद्ब्रह्म स्वरूपतः प्रकाशतुल्यं च प्रत्येतव्यम्। यथा सूर्यादिप्रकाशे प्रकाशाख्यं धर्मान्तरं नास्ति। सूर्यादिप्रकाशो घटादिकं प्रकाशयतीति धर्मधर्मिव्यवहारस्तु राहोः शिर इतिवद् विकल्पमात्रः। तत्रैव (तथैव) परमात्मापि चैतन्यमात्रो न चैतन्यधर्मकः। सर्वज्ञ इति व्यवहारस्तु राहोः शिर इतिवदेव मन्तव्यः। कुतः ? अवैयर्थ्यात् अवैयर्थ्यायेत्यर्थः। यदि हि आत्मनि ज्ञानाख्यं धर्मान्तरं कल्प्यते तदा तद् व्यर्थं स्यात्, धर्मधर्मिभावशून्यादेकस्मादेव वस्तुनः प्रकाशवत् सर्वव्यवहारसंभवादित्यर्थः।

न केवलं लाघवतर्केण दृष्टान्तबलादेव परमात्मनो ज्ञानमात्रस्वरूपत्वं सिध्यति, अपि तु श्रुतेरपीत्याह—

## आह च तन्मात्रम् ॥१६॥

श्रुतिगणोऽपि ब्रह्मणश्चित्प्रकाशमात्रत्वमाह, यथा "एको देवः सर्वभूतेष्व[1](षु) गूढः सर्वव्यापी सर्वभूतान्तरात्मा। कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेताः केवलो निर्गुणश्च ॥, यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघनः, एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नो ज्ञानघन एवे" त्यादिः। अत्र वा[2] (चा) त्मत्वाविशेषात् जीवस्य चिन्मात्रताबोधकान्यपि वाक्यानि "चैतन्यं चिन्मात्रं सदि" त्यादीन्युदाहार्याणि, जीवब्रह्मणोर्वैधर्म्यलक्षणभेदस्य स्वरूपतोऽभावात्। "यथा सुदीप्तात् पावकाद् विस्फुलिङ्गाः सहस्रशः प्रभवते[3] (न्ते) सरूपाः" इत्यादिश्रुतेः, अंशांशिसूत्रात् "आभास एव चे"ति सूत्राच्च। यथा "यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति एवं मुनेर्विजानत आत्मा भवति गौतमे" त्यादिश्रुतेश्च। अत्र च मात्रशब्देन चैतन्यब्रह्मणोर्धर्मधर्मिभाववद्' ब्रह्मणीच्छाकृत्यानन्दसम्पर्कोऽपि प्रतिषिद्ध इति मन्तव्यम्। अतो ब्रह्मण आनन्दस्वरूपत्वाभ्युपगम आधुनिकानामपसिद्धान्त एव, "आनन्दादयः प्रधानस्ये" ति वक्ष्यमाणसूत्राच्च। एतच्च पञ्चसूत्र्यां विस्तारितम्।

नन्वेवं मात्रशब्देन सत्ताऽपि प्रतिषिध्येतेति चेन्न, असद्व्यावृत्तिरूपाया एव सत्ताया ब्रह्मण्यभ्युपगमसम्भवात्, परिणामित्वलयाद्यभावस्यैव 'पारमार्थिकसत्तारूपत्वात्। असुखव्यावृत्तिस्तु ब्रह्मणि वक्तुं न शक्यते तस्याः सुखरूपतया मात्रशब्देन निरस्तत्वात्। "नानन्दमि" त्यादिश्रुतिभ्यो "अदुःखमसुखं ब्रह्म भूतभव्यभवात्मकमि" ति मोक्षधर्मादिभ्यश्चासुखरूपतासिद्धेः। "न निरानन्दमि" त्यौपाधिकानन्दगुणवत्त्वप्रतिपादनायोक्तम्। असद्रूपत्वं च ब्रह्मणो न श्रूयते प्रत्युत "असन्नेव स भवत्यसद्ब्रह्मेति वेद चेत्, अस्ति ब्रह्मेति चेद् वेद सन्तमेनं ततो विदुरि" त्यसत्ताप्रतिषेध एव श्रूयते इति।

---

[1] 'ष्वगूढ' इति उ० ह० लि० पु० पाठः।

[2] 'वा' इति उ० ह० लि० पु० पाठः।

[3] 'प्रभवते' इति उ० ह० लि० पु० पाठः।

ये तु केचिदाधुनिका दुःखविरुद्धत्वमेवात्मनः सुखत्वमाहुस्तन्मतं तु न दूष्यते, परमप्रियत्वेनात्मनो दुःखविरुद्धत्वस्यास्माभिरप्यङ्गीकारात्। वस्तुतस्तु मात्र-शब्देनोपाधिगता विशेषगुणा एव प्रतिषिध्यन्ते तत्रैव संशयात्। संयोगजातिसंख्या-परिणामादौ तु सामान्यधर्मे ब्रह्मस्वरूपनिष्ठतया स्पष्टश्रुतिस्मृतिन्यायसिद्धे विवादा-भावेन मात्रशब्दानिरस्यत्वमिति। "न सत्तन्ना (न्ना) सदुच्यते" इत्यादिवाक्यानां च स्थूलसूक्ष्मविश्वरूपताप्रतिषेधकत्वमिति ॥

## दर्शयति चाथो अपि स्मर्यते ॥१७॥

श्रुतिश्च प्रकाशतुल्यत्वं दर्शयति "सूर्यो यथा सर्वलोकस्य चक्षुरि" त्यादिः "मनोमयः प्राणशरीरो भारूपः सत्यसंकल्पः" इत्यादिश्च। भारूप इति प्रकाशवद् रूपं यस्येत्यर्थः। अथो अनन्तरम् स्मर्यतेऽपि प्रकाशतत्सत्वं[1] (तुल्यत्त्वं) ब्रह्मणः—

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥

इत्यादिभिरित्यर्थः ॥

सूर्यकाद्युपमाश्रवणादपि प्रकाशतुल्यत्वमवधार्यत इत्याह—

## अत एव चोपमा सूर्यकादिवत् ॥१८॥

सूर्यकः सूर्याभासः तत्प्रतिबिम्बमिति यावत्। इतिशब्दश्च सूत्रस्यान्ते-ऽध्याहार्योऽन्यथा अन्वयाभावात्। यत एव परमात्मा प्रकाशतुल्यः अत एव अंशां-शिसाधारणस्य परमात्मन उपाधिषु प्रतिबिम्बे सूर्यप्रतिबिम्बादिरूपमस्ति शास्त्रेष्वि-त्यर्थः। तत्र श्रुतिषु "एक एव हि भूतात्मा भूते भूते व्यवस्थितः, एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" इत्याद्या दृष्टान्ताः। तत्त्वत एक एवात्मा परमेश्वरो अंशांशि-विभागेनोपाधिषु प्रतिबिम्बितो ज्ञाज्ञाभ्याम् एकधा बहुधा च दृश्यते, जलप्रतिबिम्बि-तचन्द्रवदित्यर्थः। अथवा एक एवेति एकरूप एवेत्यर्थः, एकधा बहुधेति प्रकारवाचि-धाप्रत्ययदर्शनात्। अखण्डतावादिमते धाप्रत्ययवैफल्यम्। स्मृतिषु च "यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्[2] (न्), उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मे" त्याद्या दृष्टान्ताः। अत्राप्येकशब्द एकरूपार्थः। भेद-रूपो नानारूप इत्यर्थः।

अथवा यथा एक एव सूर्यः उपाधिसंबन्धेनानेकप्रतीतिगोचरः क्रियते, तथा एकः परमात्मा अंशांशिविभागेनोपाधिषु प्रतिबिम्बितो अनेकात्मप्रतीतिगोचरः क्रियत इत्यर्थः। अस्माच्च सूत्रादुक्तवाक्याभ्यां च जीवः परमात्मनः प्रतिबिम्ब इति भ्रमो न कार्यः। अस्मिन् सूत्रे वाक्ये चेतनानां स्वस्वोपाधौ प्रतिबिम्बस्यैव लाभात्, उपा-

[1] 'प्रकाशतत्सत्वं' इति उ० ह० लि० पु० पाठः। 'तुल्यत्वं' इति सम्यक्।
[2] 'गच्छन्' इति उ० ह० लि० पु० पाठः।

धिभेदेषु साक्षादंशद्वारा च परमात्मप्रतिविम्बस्यैव वचनात्, न तु जीवः परमात्मनः प्रतिविम्ब इत्युक्तः । अंशत्वप्रतिविम्बयोर्विरोधेनांशसूत्रादिविरोधाच्चेति ॥

प्रसङ्गागतं प्रतिविम्बनं परीक्ष्यते—

अम्बुवदग्रहणात्तु न तथात्वम् ॥१९॥

तत्रायं संशयः—किं जले सूर्यादिप्रतिबिम्बवच्चेतनानामपि स्वस्वोपाधौ प्रतिविम्ब एव भवति ? उत तप्तायःपिण्डवदन्योन्याध्यासेन प्रतिविम्बतुल्यतामात्रमिति ? तत्रायं पूर्वपक्षः—ननु तथात्वं परमार्थतः प्रतिविम्बितत्वं न सम्भवति, कुतः ? अम्बुवदग्रहणात् जले सूर्य इतिवद् बुद्ध्यादावहमित्यनुभवस्याभावादित्यर्थः । न हि जलवद् बुद्धिभे[1] (भें) देनात्माधारतया भासते, अहमित्येव बुद्धिभानादिति । किं च अम्बु रूपवत्, अतस्तत्र सूर्यादिप्रतिविम्बं घटते, बुद्ध्यादिस्तूपाधिनै (नैं) वं रूपवद् दृश्यत इतीत्यर्थः ॥

सिद्धान्तमाह—

वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसाम‍ञ्जस्यादेवम् ॥२०॥

यद्यप्यम्बुवद् ग्रहणं नात्रास्ति, तथापि वृद्धिह्रासभाक्त्वम् अन्तर्भावात् प्रतिविम्बरूपेणान्तःप्रवेशादेव सम्भवति । अतो दृष्टान्तदार्ष्टान्तिकयोर्जलबुद्ध्योरुभयोः सामञ्जस्यात् वृद्धिह्रासनियामकत्वसादृश्यादेवं प्रतिविम्बितत्वं प्रतिपत्तव्यमित्यर्थः । उपाधिवृद्धिह्रासाभ्यां हि वृद्धिह्रासभाक्त्वमुपाधिषु प्रतिविम्बरूपेण प्रवेशादेव दृष्टं नान्यथा, तप्तायःपिण्डघटाकाशादिस्थलेष्वदर्शनात्, अयोघटादि पुष्ट्य ( पु ह्य )[2] ऽग्न्याकाशयोः क्षैण्यस्यैव दर्शनादिति । यथा सूर्यादयो जलगतवृद्धिह्रासाभ्यां प्रतिविम्बद्वारा वृद्धिह्रासभाजः प्रतीयन्ते, तथैव चेतना एकरूपा अपि स्वस्वोपाधिवृद्धिह्रासभाजः प्रतीयन्ते । बुद्धेर्ह्यन्नादिनोपचये सति चैतन्यस्याप्युपचयो दृश्यते तदपचये वा[3] ( चा ) पचयः । तथा उपाध्युत्कर्षापकर्षाभ्यां परमात्महिरण्यगर्भादयो व्यापका महान्त ईश्वराः, मनुष्यस्थावरादयश्च क्षुद्राः परवशाश्चेति, "बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यवरोऽपि दृष्टः" इति श्रुतेः "तद्गुणसारत्वात्तु तद्व्यपदेश" इत्युक्तसूत्राच्चेति । अत्र वृद्धिह्रासावौपाधिकधर्मसामान्योपलक्षकौ । रूपादिमत्त्वस्य च न प्रतिविम्बप्रयोजकत्वम् आकाशे पर्वतनीलिमादिप्रतिविम्बस्य मठाकाशादौ शब्दप्रतिविम्बस्य प्रत्यक्षसिद्धत्वात् स्मृतिसिद्धत्वाच्च ॥

दर्शनाच्च ॥ २१ ॥

न केवलं वृद्धिह्रासादिधर्मानुकारित्वात् प्रतिविम्बश्चेतनस्य मन्तव्यः, अपितु

---

[1] 'बुद्धिभेदेन' इति उ० ह० लि० पु० पाठः ।

[2] यथामुद्रितं पाठः उ० ह० लि० पु० वर्तते ।

[3] 'वा' इत्येकस्मिन् 'चा' इत्यन्यस्मिन् ह० लि० पु० पाठः ।

दर्शनादपि। यथा ह्यदृश्यमपि मुखं प्रतिबिम्बरूपेण दर्पणे दृश्यते, एवं कर्मकर्तृविरोधेन साक्षाददृश्यमप्यात्मसामान्यमुपाधिषु दृश्यते अहमिति जानामीति सुखीति वा, तथाऽहं सर्वज्ञ ईश्वरोऽहं मुक्त इति वा। प्रतिबिम्बस्य तुच्छत्वात्तु न्यायवैशेषिकादिभिस्तत्र (तन्न) निरूपितमिति मन्तव्यम्। जीवस्तु न ब्रह्मणः प्रतिबिम्बित्वांश[1] (प्रतिबिम्बं किंत्वंश) एवेत्यप्युक्तं न विस्मर्तव्यम्।

उपाधावात्मनश्च धर्मप्रतिबिम्बवत् धर्मिप्रतिबिम्बमपि स्वीकार्यम, अन्यथाऽहमिति ज्ञानानुपपत्तेः, दर्पणप्रतिबिम्बनं विना मुखा[2] (ख) स्फुरणानुपपत्तिवत्। अत एव पातञ्जलसूत्रम् "द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थमि"ति। तथा बुद्वेरप्यात्मनि न केवलं पञ्चसूत्र्युक्तयुक्त्या वृत्त्यादिधर्मप्रतिबिम्बं किन्तु धर्मिप्रतिबिम्बमपि। अन्यथाऽसङ्गे चिति बुद्धिस्फुरणानुपपत्त्या तस्याप्यहमित्यात्मस्फुरणानुपपत्तेः। न हि दर्पणादर्शने मुखदर्शनं संभवति। तथा च पातञ्जलसूत्रम् "चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम्" इति। तत्र धर्मप्रतिबिम्बने जपास्फटिकादयो दृष्टान्ताः धर्मिप्रतिबिम्बे च जलसूर्यजलद्रुमादयो दृष्टान्ताः शास्त्रेषूक्ता इति विवेक्तव्यम्॥

ननु परमात्मा प्रकाशरूप इति यद् दृष्टान्तादिभिरुपपादितं तत् श्रुतिविरुद्धम् "अथात आदेशो नेति नेतीति" श्रुत्या ब्रह्मणो अभावरूपत्वावगमादितीमां शङ्कामपाकरोति—

**प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः॥ २२॥**

ब्रह्म प्रकाशस्वरूपमेव मन्तव्यं, हि यस्मात् श्रुतिर्नेति नेतीत्याद्या प्रकृतैतावत्त्वमेव प्रतिषेधति "द्वे वाव ब्रह्मणो रूपे मूर्तं चैवा मूर्तं चे" त्यादिना पूर्वप्रकृतं यन्मूर्ताद्युपाधिभूतमेतावत्त्वं हि एतद्रूपत्वमेव प्रतिषेधति न प्रकाशादिरूपत्वम्, इतिशब्दस्य प्रकृतपरामर्शकत्वात्। किं च ततो निषेधवाक्यादनन्तरं भूयः पुनर्वदति श्रुतिः "प्राणा वै सत्यं तेषामेष सत्यं स वा एष महानज आत्मा अजरोऽमरोऽभयो ब्रह्मे"त्यादिकमित्यर्थः। यदि हि निषेधवाक्येनाभावस्वरूपत्वमेव प्रतिपाद्यते तदा तस्य सत्यत्वमभयत्वमात्मत्वं च वाक्यशेषोक्तं नोपपद्येत अभावस्य असत्तारूपत्वात् मरणरूपतया भयहेतुत्वात् अनात्मत्वाच्च।

"यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह।
यच्चास्य सन्ततो भावस्तस्मादात्मेति कथ्यते॥"

इत्यात्मलक्षणासम्भवादिति भावः। तथा "असन्नेव स भवत्यसद् ब्रह्मेति वेद चेदि" त्यादिश्रुतेरपि परमात्मनो नाभावरूपत्वमिति बोध्यम्। नन्वभावत्वेऽपि सत्त्वं घटा-

---

[1] 'प्रतिबिंबित्वंश' इत्येकस्मिन् 'प्रतिबिंकिंत्वंश' इत्यन्यस्मिन् ह० लि० पु० पाठः। 'प्रतिबिम्बं किंत्वंश' इति पाठः सम्भवी।

[2] 'मुखा' इति उ० ह० लि० पु० पाठः।

द्यभावानामिव स्यात् इति चेन्न, अधिकरणादिस्वरूपत्वेनैव तेषां सत्त्वात् प्रपञ्चनिषेधस्य चाधिष्ठानाङ्गीकारे तदेव ब्रह्मेत्यायातम् ॥

इदानीमपरं विशेषं ब्रह्मण आह—

तदव्यक्तमाह हि ॥२३॥

तत् परम् अव्यक्तं लौकिकबुद्धिवृत्त्यगोचरं, हि यस्मात् श्रुतिस्तदाह—"यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इत्यादिः। स्मृतिरपि—"अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते" इत्यादिरित्यर्थः ॥

ननु यदि ब्रह्म व्यक्तं न भवति तर्हि "कश्चिद् धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्, तमेव विदित्वाऽतिमृत्युमेति, आत्मा वा अरे द्रष्टव्य" इत्यादिश्रुतिव्याकोपस्तत्राह—

अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥२४॥

आह हीत्यनुवर्तते। संराधने श्रवणमननधारणाध्यानसमाधिरूपसम्यक्साधने सति प्रत्यक्षानुमानाभ्यां गम्यमपि भवति, यस्मादुक्तश्रुतिस्तथाह। तथा स्मृतिरपि—

यं विनिद्रा जितश्वासाः सन्तुष्टाः संयतेन्द्रियाः।
ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥

इत्यादिरित्यर्थः। एतच्च शास्त्रयोनित्वादित्यत्र विस्तरेण विचारितम् ॥

इदानीं ब्रह्मणो जीवेभ्यो निर्विशेषत्वरूपमवैधर्म्यलक्षणाभेदं वदति जीवे ब्रह्मदृष्ट्यर्थं पूर्वोक्तांशांशिभावोपपत्त्यर्थं जीवदृष्टान्तेन ब्रह्मस्वरूपावधारणार्थं च—

प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥२५॥

आह हीत्यनुवर्तते। नास्ति वैशेष्यं विशेषित्वं यत्रेत्यवैशेष्यम्। तथा च तत् परं ब्रह्म अंशांश्यवच्छेदयोर्निर्विशेषम् एकरूपम्, हि यस्मात् शास्त्रं तथाह—"अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव। एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥, तत्त्वमेव त्वमेव तत् प्रभवन्ते सरूपा" इत्यादिः श्रुतिः। स्मृतिश्च –

यथा दीपः प्रकाशात्मा ह्रस्वो वा यदि वा महान्।
ज्ञानात्मानं तथा विद्यात् पुरुषं सर्वजन्तुषु ॥
त्वमेवाहमहं त्वं च सच्चिन्मात्रवपुर्भवान्।
आवयोरन्तरं नाथ नश्यत्वाक्षालवात्तव ॥

इत्यादिः। प्रकाशादिवदिति। यथा प्रकाशाकाशतत्त्वादयः स्वस्वांशांश्यवच्छेदयोरेकरूपास्तद्वदित्यर्थः। चकारः प्रकाशरूपत्वसमुच्चये।

ननु यदि जीवाः ब्रह्म चैकरूपाः किं निमित्तं तर्हि ब्रह्मणो विश्वप्रकाशकत्वं जीवानां चाल्पप्रकाशकत्वमिति, तत्राह—प्रकाशश्च कर्मण्यभ्यासात्। कर्मणि प्रकाश्ये

अभ्यासात् नैकद्यात्[1] ( ट्यात् ) संबन्धादिति यावत् । तथा चायमर्थः—प्रकाशो ज्ञानं पुनरात्मनि प्रकाश्यज्ञेयसम्बन्धादेव भवति । तत्सम्बन्धश्चोपाधिवृत्तिद्वारैव चेतने भवति । अत उपाधिवृत्तितारतम्येन समेष्वपि चेतनेषु सर्वप्रकाशत्वाल्पप्रकाशत्वोपपत्तिरित्यर्थः ।

तदेवं "जन्माद्यस्य यत" इत्यादिना महाप्रबन्धेन ब्रह्मणः कार्यद्वारकं लक्षणम्, अन्तरङ्गोपाधिखचितं च लक्षणं, स्वरूपं च परीक्षितम् । इतः परं कार्यकारणभावांशांशिभावशक्तिशक्तिमद्भावैर्यथायोग्यं ब्रह्मण्युपासाद्यर्थं समस्तप्रपञ्चाभेदः समस्तजीवाभेदश्च श्रुतिस्मृत्युक्तः परीक्ष्यते—

## अतोऽनन्तेन तथा हि लिङ्गम् ॥ २६ ॥

अत्र साध्यानां विशेष्यांशत्रयं वक्ष्यमाणसूत्रत्रये वक्ष्यति साधारण[2]श्च(श्च), स च विशेषणांशो हेतुश्च साधारणोऽनेनैकसूत्रेण लाघवार्थमुच्यते । तथा चायमर्थः—यतो ब्रह्मणो जगज्जन्मादिकारणसर्वशक्तिकत्वं चिन्मात्रस्वरूपत्वाज्जीवब्रह्मणोरवैशेष्यं च सिद्धम्, अतो हेतोरनन्तेनाखिलेन चेतनाचेतनरूपेण पदार्थेन सह यथायोग्यं ब्रह्म वक्ष्यमाणसूत्रत्रयोक्ताहिकुण्डलादिवदभिन्नं प्रत्येतव्यम् । अत्र प्रमाणमाह—तथा हि लिङ्गमिति । अयं च प्रमारूपः साधारणो हेतुरुत्तरसूत्रत्रयवक्ष्यमाणसाध्येषु विभज्य व्याख्यास्यते ।

## उभयव्यपदेशात्त्वहिकुण्डलवत् ॥२७॥

आगामिसूत्रयोर्वाशब्दद्वयं व्यवस्थितविकल्पार्थकम् । तथा चानेन सूत्रेणाखिलकार्यैः सह ब्रह्मणोऽभेदः प्रतिपाद्यते । द्वितीयसूत्रेण च जीवैः सहाभेद उपपादयिष्यते । तृतीयसूत्रेण कार्यकारणसाधारणशक्तिभिरिति व्यवस्था बोध्या । सूत्रत्रयेऽपि दृष्टान्तैः सादृश्यं भेदाविरुद्धाभेदे (दो)[3] विवक्षितो ( तः उ )भयव्यपदेशादिति, भेदाभेदव्यपदेशोपपत्त्यर्थमित्यर्थः । एतदपि साध्यत्रयेऽपि योजनीयम् । तुशब्दश्च अन्योन्याभावाभावरूपाभेदपूर्वपक्षव्यवच्छेदाय ।

अस्य च सूत्रस्यायमर्थः—अनन्तेनेति यदुक्तं तन्मध्येऽखिलेन कार्येण सह ब्रह्म अहिकुण्डलवत् कार्यकारणाभेदेन प्रत्येतव्यम् । हि यस्मात् लिङ्गं कार्यकारणाभेदानुमापकं श्रौतं प्रमाणमस्ति—"सर्वं खल्विदं ब्रह्म तज्जलानि" त्यादिरूपम् । अत्र हि तज्जलानिति कार्यकारणभावो जगद्ब्रह्माभेदहेतुतया श्रुत्योक्तः अनेन ब्रह्मसूत्रेण जीवस्य प्रकृत्यादेर्वा ब्रह्माभेदे दृष्टान्तेनोपन्यस्यते । तयोर्ब्रह्मवन्नित्यत्वेनाहिविकारकुण्डलतुल्यत्वाभावात् । किन्तु यथा सर्पचेतनः स्वशक्तीनामवयवकल्पानां स्वसंकल्पजसंयोगविशेषात् कुण्डलतां गच्छति, तथैव परमात्मा स्वशक्तीनामव-

---

[1] यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते ।

[2] यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते ।

[3] 'भेदाविरुद्धाभेदे विवक्षिते उभय' इति उ० ह० लि० पु० पाठः ।

यवकल्पानां प्रकृतिपुरुषादीनां स्वसंकल्पजसंयोगविशेषान्महदाद्यखिलविकाररूपतां गच्छति महामायित्वान्नटवदित्येवं कार्यकारणयोरविभागलक्षणाभेदे दृष्टान्त उपन्यस्त इति ॥

कार्यैः सहाभेदं परीदयाखिलजीवैः सह स परीदयते—

**प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८ ॥**

अत्रोत्तरसूत्रे च उभयव्यपदेशादिति सम्बध्यते। जीवैः सह तु ब्रह्म प्रकाशतदाश्रयवदभिन्नं प्रत्येतव्यम्। हि यस्मात् तथा लिङ्गम् अग्निविस्फुलिङ्गादिवच्चन्द्रसूर्यतत्किरणादिवच्चाभेदानुसापकं श्रुतौ स्मृतौ च वाक्यमस्ति "यथा सुदीप्तात् पावकाद् विस्फुलिङ्गा व्युच्चरन्ति, अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव एकस्तथा सर्वभूतान्तरात्मे" त्यादिरूपम्,

एकदेशस्थितस्येन्दोर्ज्योत्स्ना विस्तारिणी यथा।
परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत् ॥
यथार्ककरसंयोगाद् वह्निः सञ्जायते मणौ।
सत्त्वे ब्रह्मसमायोगात् क्षेत्रज्ञो जायते तथा ॥

इत्यादिरूपं चेति।

ननु भिन्नयोः प्रकाशतदाश्रययोः कथमभेदो घटतां, तत्सम्भवे वा भेदाभेदयोस्तुल्यत्वे श्रुतिस्मृत्युक्तमभेदस्यैव तात्त्विकत्वं कथं घटतां, तत्राह—तेजस्त्वादिति। तेजोमण्डलस्वरूपत्वादित्यर्थः। एकमेव हि तेजोमण्डलमविभागापन्नं सूर्यतत्प्रकाशरूपेण विभक्तं भूत्वा पुनरपि प्रकाशाख्यैः किरणैरविभक्तं भवत्यस्तसमये। अतोऽवगम्यते, अविभक्तस्वभावमभिन्नं भवति तत्स्वरूपम् विभागस्त्वन्तराले वाचारम्भणमात्रमिति। एवं जीवब्रह्मणोरप्यंशांशिनोः प्रकाशत्वसाम्यादनुमेयम्। तथा च स्मृतयः—

यथाग्निरग्नौ संक्षिप्तः समानत्वमनुव्रजेत्।
तदाख्यस्तन्मयो भूत्वा न गृह्येत विशेषतः ॥
तद्वदात्माक्षरेणासौ निष्कलेनैकतां व्रजेत्।
विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ॥
आत्मनो ब्रह्मणा भेदमसन्तं कः करिष्यति।

इत्याद्याः। विभेदो विभागः 'भिदिर् विदारण' इत्यनुशासनात्। तज्जनके तन्निमित्तभूतेऽज्ञान इत्यर्थः। मिथ्याज्ञाने सत्येव हि पापपुण्यद्वारा बुद्धिसंबन्धेन ब्रह्मणः सकाशाज्जीवस्य विभागो भवतीति। अनेन च तेजस्त्वादिति हेतुना सामान्याभेदोऽत्र न विवक्षितः जीवानामप्यन्योन्यं सामान्याभेदसत्त्वेन जीवव्यावृत्तब्रह्मैकात्म्यानिर्वाहकत्वात् प्रकरणिन उत्कर्षस्यैवापेक्षितत्वात्। तथा प्रकाशादिवच्चावैशेष्यमित्यनेनैव सामान्याभेदस्य लब्धत्वात् पूर्वोत्तरसूत्रयोरविभागलक्षणाभेदेन समभिव्याहाराच्चेति।

ननु जीवब्रह्मणोरवयवावयविभावशून्ययोरसङ्गयोः कथमविभागः स्यादिति चेन्न, अविभागो वचनादित्यागामिसूत्रेणाचार्यैरेव श्रुतिमूलकतयाऽस्य दोषस्य परिहर्तव्यत्वात् आकाशवाय्वोर्जलदुग्धयोरिवाविभागसम्भवाच्च । अविभागो हि लक्षणानन्यत्वम् अभिव्यक्तधर्मभेदाभाव इति यावत् । अथवाऽऽधाराधेयभाववदविभागोऽपि स्वरूपसम्बधविशेष एव । स चासङ्गिनोरवयवावयविभावशून्ययोरपि सम्भवति । एतत् सर्वम् "ईक्षतेर्नाशब्दमि" त्यत्र विस्तारितम् । एतेन तेजोवद् भेदाभेदसूत्रेण न जीवब्रह्मणोरखण्डत्वं सूत्रविरुद्धमिति द्रष्टव्यम् ॥

जीवब्रह्मणोरभेदं परीक्ष्य प्रकृतिकालादिभिर्नित्यैः सह ब्रह्मणोऽभेदः परीक्ष्यते—

## पूर्ववद् वा ॥२९॥

प्रकृत्यादिभिः सह ब्रह्मणः पूर्ववत् 'शरीररूपकविन्यस्तगृहीतेरि'ति प्रथमाध्यायस्थसूत्रोक्तशरीरशरीरिवत् शक्तिशक्तिमदभेदः प्रत्येतव्यः । हिं यस्मात् तथा लिङ्गं शक्तिशक्तिमदभेदानुमापकं श्रुतिवाक्यमस्ति "तदनुप्रविश्य सच्च त्यच्चाभवत्, यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येक" इत्यादिकमित्यर्थः । अस्मिंश्च सूत्रे शक्तिशक्तिमदभेदोपपादको हेतुः स्वयं नोक्तो देहात्मनोरविभागस्य सर्वलोकसिद्धतया शङ्कास्पदत्वाभावात् । अयं च शक्तिशक्तिमदभेदः पूर्वोक्तकार्यजीवयोः साधारण इति मन्तव्यम् । श्रुतिस्मृतिषु यथोक्ताविभागलक्षणाभेदप्रतिपादनस्य च ब्रह्मात्मताज्ञानमेव मुख्यं फलमित्यसकृदावेदितम् ॥

उभयव्यपदेशादित्यपेक्षायां हेत्वन्तरमाह—

## प्रतिषेधाच्च ॥३०॥

अयमपि साधारणो हेतुः । उभयस्येति प्रकृतत्वाल्लभ्यते "मनसैवानुद्रष्टव्यं, नेह नानास्ति किंचन, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति, अथ परा तस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवती" त्यादिभेदप्रतिषेधश्रवणात्, "तदेव ब्रह्म त्वं न, सर्वचा[1] (त्रा) निकेतस्थितिरेव यत्पूर्णानन्दैकबोध" इत्याश्र (द्य)[2]भेदप्रतिषेधश्रवणाच्च । यथोक्तव्यवस्थया सर्वपदार्थैः सह ब्रह्म अहिकुण्डलादिवदेवाविभागलक्षणाभेदवदित्यर्थः । अखण्डतालक्षणाभेदस्य श्रुत्यर्थत्वे तूभयप्रतिषेधानुपपत्तिविरोधादिति ।

उभयव्यपदेशादिति सूत्रे भेदव्यपदेशः आधाराधेयादिभावरूपोऽभिप्रेतो, अभेदव्यपदेशोऽपि संसर्गविधया अभिप्रेत इत्युभयप्रतिषेधवाक्याभ्यामुभयव्यपदेशवाक्ययोर्भेदादपौनरुक्त्यम् नाना भिन्नं विभक्तम्, अन्तरं भेदं विभागमित्यर्थः । तदेवं समस्तपदार्थैः सह यथायोग्य (ग्यं) ब्रह्मणि अविभागरूपस्त्रिविधोऽभेद उक्तः । तत्रेदमाशङ्क्यते—

ननु अभ्यर्हितत्वात् फलश्रवणाल् लाघवाच्चाखण्डतालक्षणाभेद एव श्रुत्यर्थो

[1] 'सर्वचानिकेत' इति उ० ह० लि० पु० अपि पाठः ।

[2] 'इत्याद्य' इति उ० ह० लि० पु० पाठः सम्यक् ।

युक्तः, न त्वहिकुण्डलादिवदमुख्योऽभेदः। उभयव्यपदेशादिवाक्यानि च मायिकभेदानुवादादिपरतया यथाकथञ्चिन् नेयानीति। तामिमामाशङ्कां परिहरति सूत्रजातेन—

परतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥३१॥

नात्यन्तमभेदो मन्तव्यः, ब्रह्म हि अतोऽनन्तपदार्थात् परं भिन्नं, कुतः? सेत्वादिव्यपदेशेभ्यः। तत्र सेतुव्यपदेशो यथा—"अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय, अमृतस्य परं सेतुं दग्धेन्धनमिवानलम्, यः सेतुरीजानानामक्षरं ब्रह्म तत्परमि" त्यादिः। उन्मानस्य आत्मान्तरापेक्षयोत्कृष्टपरिमाणस्य व्यपदेशो "एतावानस्य महिमा अतो ज्यायांश्च पूरुषः। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवी" त्यादिः। सर्ववस्तूनां ब्रह्मणि सम्बन्धव्यपदेशश्च यथा—"यः सर्वस्मिंस्तिष्ठन् सर्वस्यान्तरो य आत्मनि तिष्ठन्नात्मनोऽन्तरः, सति सम्पद्य न विदुः सति सम्पद्यामह" इत्यादिः। भेदव्यपदेशश्च पश्चा (यथा)—

"द्वा सुपर्णा सयुजा सखायौ समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति॥
नित्यो नित्यानां चेतनश्चेतनानां विश्वाधिको रुद्रो महर्षिः।
पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति॥
महतः परमव्यक्तमव्यक्तात् पुरुषः पर" इत्यादिरिति।

एतेभ्यः सेत्वादिव्यपदेशेभ्यो ब्रह्म ईशितव्यसर्वपदार्थेभ्यः परमित्यर्थः। अखण्डैक्ये किं कस्य सेतून्मानादिकं भवेदिति। एतेषां वाक्यानामौपाधिकादिभेदेनोपपादनं तु चतुर्थसूत्रमारभ्य निराकरिष्यति।

ननु प्रथमाध्याये प्रत्यधिकरणं भेदव्यपदेशादिहेतुभिर्ब्रह्म प्रकृतिपुरुषादिभ्यो भिन्नमिति प्रपञ्चितमिति किमर्थं पुनस्तदारम्भ इति चेत्, तेषु विषयवाक्येष्वौपाधिको भेदः स्वरूपभेदो वा सूत्रकाराभिप्रेत इति संशयः स्यादित्यतः स्वाभिप्रायं स्वतन्त्राधिकरणेन प्रकटीकरोतीत्यपौनरुक्त्यम्॥

शङ्कते—

सामान्यात्तु ॥३२॥

तु शब्द उक्तप्रतिषेधार्थः। यदुक्तं ब्रह्मजगती भिन्ने तत्र सामान्यात् अभेदसाधकानामप्यभेदव्यपदेशादीनां समानत्वात् तुल्यत्वात्। यथा "आत्मैवेदं सर्वं, त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी। त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः॥, स एव जीवः सुखदुःखभोक्ते" त्यादयोऽभेदव्यपदेशा इत्यर्थः॥

परिहरति—

बुद्ध्यर्थः पादवत् ॥३३॥

सत्यमभेदव्यपदेशोऽप्यस्ति, तथापि स बुद्ध्यर्थः उपासनार्थ एव पादवत्। यथा, 'चतुष्पाद् ब्रह्म षोडशकलमि" त्यादिना निरंशस्यापि ब्रह्मणः पादा उपासनार्थमेव शक्ति-

शक्तिमदभेदेनोपदिश्यन्ते, एवमविभागलक्षणाभेदेन प्रपञ्चे ब्रह्मत्वमुपदिश्यते उपासनार्थमित्यर्थः। बुद्ध्यर्थ इत्युपलक्षणं ब्रह्मणि सर्वेषामात्मत्वोपपादनार्थ इत्यपि बोध्यम् ॥

कुतः पुनरत्यन्ताभेदवाक्यानुरोधेन भेदवाक्यानामेवौपाधिकभेदपरत्वं न भवति ? तत्राह—

## स्थानविशेषात् प्रकाशादिवत् ॥३४॥

अभेदव्यपदेश एव बुद्ध्यर्थो न तु भेद एव व्यपदेशः, कुतः ? प्रकाशवाय्वादीनामिवात्मनां स्थानविशेषात् उपाधिरूपात् विशेषात्। कश्चिदुपाधिना बद्धः कश्चिच्च मुक्त इत्येवंरूपादित्यर्थः। ऐकात्म्ये हि सर्वे उपाधय एकस्यैवात्मनः स्युः, यथा गुहाकूपादय आकाशस्येत्युपाधित आत्मनां बन्धमोक्षव्यवस्था न स्यात् कश्चिन्मुक्तः कश्चिद्बद्धः कश्चिन्मोक्ष[1] (्य) त इत्येवंरूपा, एकोपाधिवियोगेऽपि उपाध्यन्तरेण बन्धात्। न ह्येकमात्रघटभङ्गेनाकाशस्योपाधिमुक्तिः, न चोपाधिविशिष्टस्य बन्धमोक्षौ सम्भवतः। मोक्षकाले उपाधिवियोगेन विशिष्टस्य बन्धः केवलस्य मोक्ष इत्यभ्युपगमे च बन्धमोक्षयोर्वैयधिकरण्यादयो दोषा इति भावः। तदेतत् कपिलाचार्येणाप्युक्तम्— "जन्मादिव्यवस्थातः पुरुषबहुत्वम्, उपाधिभेदेऽप्येकस्यैव नानायोग आकाशस्येव घटादिभिरि" ति सूत्राभ्यामिति। अस्माभिरप्ययं तर्कोऽन्याश्च श्रुतिस्मृतियुक्तयः पञ्चसूत्र्यामुक्ता इति ॥

इदानीं जडसाधारण्येनाभेदबाधकमाह—

## उपपत्तेश्च ॥३५॥

उपपत्तिर्युक्तिः। शास्त्रोक्तकूटस्थासंसारिचिन्मात्रत्वस्य जगज्जीवाख्यशक्तिभेदोपदेशो बुद्ध्यर्थ एव। किं च "तथाहि लिङ्गमि" त्यनेन प्रदर्शिता या श्रुत्युक्ता युक्तिरभेदोपपादिका कार्यकारणभावादिरूपा तस्या अपि भेदे सत्येवोपपत्तेश्चाभेदव्यपदेश एव बुद्ध्यर्थः इत्यर्थः। श्रुतीनामत्यन्ताभेदपरत्वे ह्यविभागसाधिकायाः कार्यकारणभावादिरूपयुक्तेः प्रदर्शनमर्थान्तरमनुपपन्नं च स्यात्, अत्यन्ताभेदे कार्यकारणानुपपत्तेरिति भावः॥

किं च—

## तथान्यप्रतिषेधाच्च ॥३६॥

ब्रह्मणि अन्येषां पदार्थानां तादात्म्येन प्रतिषेधात् ब्रह्मसमानसत्तया स्वरूपतोऽप्यन्येषां प्रतिषेधाच्च बुद्ध्यर्थ एवाभेदोपदेशो न तु अन्योन्याभावनिषेधार्थ इत्यर्थः। स च प्रतिषेधो यथा "अथात आदेशो नेति न ह्येतस्मादिति नेत्यन्यत् परमिति, त्रिषु धामसु यद् भोग्यं भोक्ता भोगश्च यद् भवेत्। तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः॥, तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते, अस्थूलमनण्व" त्यादिश्रुतिषु स्मृतिषु च।

---

[1] 'मोक्षत' इत्येकस्मिन् 'मोक्ष्यत' इत्यन्यस्मिन् ह० लि० पु० पाठः।

विष्णोः स्वरूपात् परतो हि तेऽन्ये, रूपे प्रधानं पुरुषश्च विप्र।

प्रधानपुरुषव्यक्तकालानां परमं हि यत् ।
पश्यन्ति सूरयः शुद्धं तद् विष्णोः परमं पदम् ॥

इत्यादिः ।

समानसत्तया स्वरूपतः प्रतिषेधस्तु यथा "वाचारम्भणं विकारो नामधेयम्, अनृतेन हि प्रत्यूढाः, यथा वृक्षो वनस्पतिस्तथैव पुरुषो मृषे" त्यादिश्रुतिषु, स्मृतिषु च—

परमार्थतस्त्वमेवैको नान्योऽस्ति जगतः पते ।

ज्ञानं यथा सत्यमसत्यमन्यदि" त्यादिः । न ह्येते प्रतिषेधा ब्रह्मजगतोरत्यन्तभेदे सम्भवन्ति ।

ननु भेदासत्त्वेऽपि ब्रह्मविवर्ततयैव ब्रह्मणि प्रपञ्चाभेदव्यपदेशो वाच्यः, शुक्तिरेव रजतमिति व्यपदेशवदिति चेन्न, सत्यानृतयोरभेदानुपपत्त्या शुक्तिरेव रजतत्वेन ज्ञातेत्येव दृष्टान्तवाक्यार्थत्वात् । अतो ब्रह्मप्रपञ्चाभेदवाक्यानामप्यस्माभिस्तद्दृष्टान्तेन प्रपञ्चो ब्रह्मैव ज्ञेय इत्यर्थो वाच्य इत्यस्माकमपि अभेदवाक्योपपत्तिः ।

वस्तुतस्तु शुक्लः पटस्तन्तुः पटः समुद्रस्तरङ्ग इत्यादिवाक्येष्विवाविभागार्थकतयाऽस्माकं ब्रह्माभेदवाक्येषु लक्षणैव नास्ति । लक्षणायामप्यभेदवाक्ये लक्षणोभयोरेव समाना । भवतां तु जीवब्रह्मभेदवाक्येऽप्यधिका लक्षणा उपाधिभेदेन भिन्नतया ज्ञायमानत्वार्थकत्वाद् भेदशब्दस्येति । तस्माद् ब्रह्मणि प्रधानपुरुषतत्कार्यरूपसकलपदार्थानां विवेकरूपभेदज्ञानमेव सम्यग् ज्ञानं, तज्ज्ञानमेव च साक्षान्मोक्षहेतुः, सर्वे च वेदान्ता विविक्तब्रह्मात्मपरा एव "अरूपवदेव हि तत्प्रधानत्वादि" ति सूत्रात्, "न ह्येतस्मादिति नेत्यन्यत् परमस्ती" ति श्रुतेः "पश्यन्ति सूरयः शुद्धमि" त्युक्तस्मृतेश्चेति सिद्धम्। अतश्च ब्रह्मप्रपञ्चयोर्भेदाभेदावेव वेदान्तसिद्धान्तः । न च भेदाभेदयोर्विरोधः[1] शङ्कनीयः भेदस्यान्योन्याभावरूपत्वात् अभेदस्य च विभागावैधर्म्यरूपत्वादिति । अविभागप्रतिपादनस्य च ब्रह्मात्मत्वज्ञापनं जीवादिषु अविभागगुणेन ब्रह्मोपासनं च फलमिति ॥

## अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥३७॥

अनेन व्यवस्थाप्यते न (व्यवस्थापितेन) सर्वभेदाभेदेन ब्रह्मणः सर्वगतत्वमप्युपपन्नम् । अत्यन्ताभेदे विभागे वा सर्वसम्बन्धानुपपत्तेः । सर्वगतत्वे प्रमाणमाह—आयामशब्दादिभ्यः । आयामः परिमाणं, तद्वाचकः शब्दः "आकाशवत् सर्वगतश्च नित्य" इत्यादिः । आदिशब्देन स्मृतिन्याया ग्राह्याः, तेभ्य इत्यर्थः ।

आधुनिकास्तु देशतः कालतो वस्तुतश्चापरिच्छिन्नत्वमेव व्यापकत्वम् इत्यभ्यु-

[1] 'न च भेदयोर्विशेष' इति मु०पु० एकस्मिन् ह०लि० पु० च पाठः । 'विशेष' स्थाने 'विरोध' इत्यन्यस्मिन् ह० लि० पु० पाठः । उभौ पाठावसम्यक् ।

पगम्य व्यापकत्वश्रवणादेव ब्रह्मणि सर्वपदार्थमये[1] ऽत्यन्ताभेदमाहुः। तन्न—आप्नोति सुखमित्यादिप्रयोगानुसारतः आप्लृधातोः सम्बन्धवाचितया व्यापकशब्दस्य सर्वसम्बन्धमात्रवाचित्वात्। तस्य च सम्बन्धस्योभयनिरूप्यत्वेनात्यन्ताभेदे प्रपञ्चसत्त्वे[2] (प्रपञ्चासत्त्वे) वानुपपत्त्या यथोक्तलक्षणस्याप्रामाणिकत्वात्। किं च तेषां विवर्तवादिनां जडवर्गस्य तुच्छतया कथं वस्तुतोऽपरिच्छिन्नत्वं ब्रह्मणि स्यात्? सत्यानृतयोरेकतानुपपत्तेः। अस्मन्मत एव तु वस्तुतो ऽपरिच्छिन्नत्वमप्युपपद्यते, जात्यादिष्वव्यविभागलक्षणाभेदादिति ॥

इदानीं जगज्जन्मादिकारणत्ववद् ब्रह्मणो गुणान्तरं परीक्ष्यते—

## फलमत उपपत्तेः ॥३८॥

अतो ब्रह्मणः सकाशाज्जीवस्य भोगापवर्गरूपं फलं भवति, कुतः? उपपत्तेः युक्तेः। दृष्टं लोके सेवादिना परितुष्टः क्रुद्धो वा चेतनविशेषो महाराजो लोकानां फलं ददाति न स्वतन्त्रः सेवादिरिति न[3] (च) दृष्टान्तेन कर्मनिमित्ततः परमेश्वरः प्रजाभ्यः फलं ददातीत्यनुमीयते इत्यर्थः। "स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानव" इत्यादिवाक्यानि वे[4] (चै) वमाहुः। ननु देवा एव चेतना यागादिना तुष्टाः क्रुद्धाश्च फलं दद्युः किमीश्वरस्य फलदातृत्वकल्पनेनेति चेन्न, देवानामनित्यैश्वर्यतया तेषां मोक्षादिना विलये परमेश्वरं विना अन्यस्य फलदातृत्वानुपपत्ते। किं च देवा अप्यस्मदादिवद्देवान्तर्यामिदत्तकर्मफलास्तत्प्रेरितास्तद्दत्तशक्तिविशेषैरेव फलं प्रयच्छन्तीति तैर्दत्तेष्वपि फलेषु ब्रह्मणो दातृत्वमवश्यमभ्युपगन्तव्यम्।

स तया श्रद्धया युक्तस्तस्याराधनमीहते।
लभते च ततः कामान् मयैव विहितान् हि तान् ॥

इत्यादिवाक्येभ्य इति ॥

न केवलं युक्त्यैवेश्वरात् फलमभ्युपगन्तव्यं किन्तु—

## श्रुतत्वाच्च ॥३९॥

"एको बहूनां यो विदधाति कामान् संसारमोक्षस्थितिबन्धहेतुः। तेनेशितं कर्म विवर्तते ह पृथिव्यप्तेजोऽनिलखानि नित्यमि" त्यादिना ब्रह्मण एव कर्मफलभूतबन्धमोक्षादिदातृत्वश्रवणादित्यर्थः ॥

## धर्मं जैमिनिरत एव ॥४०॥

जैमिनिराचार्योऽत एव फलोपपत्तिश्रवणाभ्यामेव धर्ममदृष्टसामान्यं फलकारणं

---

[1] 'सर्वपदार्थे भये' इति मु० पु० उ० ह० लि० पु० च पाठोऽसम्यक्।

[2] 'प्रपञ्चसत्त्वे वा' इति उ० ह० लि० पु० अपि पाठः।

[3] 'न' इति यथामुद्रितपाठ उ० ह० लि० पु० वर्तते।

[4] 'वे' इत्येकस्मिन् 'वै' इत्यन्यस्मिन् ह० लि० पु० पाठः। 'चै' इति सम्यक्।

मन्यते। तत्र केवलस्येश्वरस्य फलदातृत्वे वैषम्यनैर्घृण्यापत्तिः। धर्माधर्मयोश्च फलोत्पत्तौ नायं दोष इत्युपपत्तिः। "तं विद्याकर्मणी समन्वारभेते, पुण्यो वै पुण्येन कर्मणा भवति पापः पापेने" त्यादिश्च श्रुतिरित्यर्थः॥

नन्वेवं वैषम्यनैर्घृण्यादिकं व्यासमते स्यादित्याशङ्कामपाकरोति—

पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥४१॥

हेतुर्युक्तिः, पूर्वं तु ईश्वरं तु बादरायणो यत् फलहेतुं मन्यते तद् युक्तिव्यपदेशात्। तत्र हि वैषम्यनैर्घृण्ये न सापेक्षत्वादित्यनेन प्रागेव युक्तिर्व्यपदिष्टेत्यर्थः। तथा चोभयकारणतायामेव श्रुतियुक्तिपरमर्षिसूत्रसत्त्वादुभयोरेवेश्वरधर्मयोः फलहेतुत्वं मन्तव्यम्। यद्यपि च उभयोरेव फलहेतुत्वं तथापि सेवापराधरूपेण सर्वकर्म परमेश्वरशेषतयैव मन्तव्यम्। महाराजसेवादीनां फले निमित्तमात्रतादर्शनादिति।

अथवा सूत्रमेवैवं व्याख्येयम्—नन्वेवं किमीश्वरकर्मणोरुभयोर्दण्डचक्रादिवत् तुल्यभावेन सहकारित्वम् उत गुणप्रधानभावेनेति विमर्षे सिद्धान्तमाह—पूर्वं त्विति सूत्रेण। अस्यार्थः—पूर्वम् अग्र्यम् मुख्यमिति यावत्। मुख्यं तु फलकारणं बादरायण उक्तवान् "फलमत" इति सूत्रेण। कुतो मुख्यत्वं, तत्राह—हेतुव्यपदेशात्। "तेनेशितं कर्म विवर्तते ह, कर्माध्यक्षः सर्वभूताधिवास" इत्यादिश्रुतिभिरेव ब्रह्मणो मुख्यस्यैव हेतोर्व्यपदेशादिति। अत एव विष्णुपुराणादौ —

विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथापरा।
अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते॥

इत्यादिना प्रकृतिवदेव शक्तितामात्रं स्मर्यते कर्मणः। किं बहुना सर्वाण्येव कारणानि ब्रह्मापेक्षया कुठारादिवत् करणान्येव ब्रह्मैव ह्येकं कर्तृ स्वतन्त्रत्वादिति "स कारणं करणाधिपाधिपः समस्तशक्तिः परमेश्वरात्मा। स्वभावमेके कवयो वदन्ति कालं तथाऽन्ये परिमुह्यमानाः॥ देवस्यैष महिमा तु लोके येनेदं भ्राम्यते ब्रह्मचक्रमि" त्यादिवाक्येभ्यो मन्तव्यमिति॥

इति ब्रह्ममीमांसायां विज्ञानयतिविरचिते विज्ञानामृताख्य ऋजुभाष्ये
तृतीयाध्यायस्य द्वितीयः पादः॥



## तृतीयाध्याये तृतीयः पादः

तदेवं सार्धेनाध्यायद्वयेनाशेषविशेषैर्लक्षणगुणकर्मस्वरूपादिभिर्ब्रह्म परीक्षितम् । इदानीं सकलपुरुषार्थहेतुभूता तस्य विद्या परीक्ष्यते । ननु ब्रह्मणि निरूपितेऽर्थतस्तद्विद्यापि निरूपितैव, ज्ञानस्य विषयमात्राधीनविशेषत्वात्, तत् किमर्थं विद्यायाः पृथग् विचार इति चेन्न, गुणोपसंहारादिभिरेकस्मिन्नपि ब्रह्मणि प्रकारतो विद्यायाः (विद्यया) संशया[1](य) संभवात् इति । तत्रादौ ब्रह्मविद्याङ्गभूतानां गुणादीनां विचारार्थं तथा वेदविहितत्वं विना वक्ष्यमाणसर्वपापक्षयहेतुत्ववेध[2](वैध) कर्माङ्गकत्वादीनामनुपपत्तेश्च साक्षात्कारसाधारण्येन सकलब्रह्मविद्यासु विध्यादिकमस्तीत्याह—

**सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥१॥**

सर्वं गृहमश्वा इतिवदत्र व्याप्यकर्मणि द्वितीया । यथा[3](तथा) च सर्ववेदान्तस्थप्रत्ययं विद्यां व्याप्य चोदनादि वक्ष्यमाणविधिफलादिकं प्रत्येतव्यम् । अथवा सर्वे वेदान्तप्रत्यया विषयत्वेनास्य सन्तीति सर्ववेदान्तप्रत्ययम् । तथा च चोदनादिकं सर्ववेदान्तप्रत्ययविषयकमिति प्रतिज्ञा । यत्र यत्र विधिफलादिकं न श्रूयते तत्रापि कल्पनीयमिति यावत् । कुत एतत् ? अविशेषात् चोदनादिमत्या वेदान्तान्तरोक्तविद्यातोऽविशेषात् अवैलक्षण्यात् । सम्भवत्येकवाक्यत्वे वाक्यभेदानौचित्यादित्यर्थः । यथा छान्दोग्ये सद्विद्यायाम् "सदेव सोम्येदमग्र आसीत्" इत्यादिरूपायां विध्यश्रवणेऽपि तदविलक्षणया काण्वस्थाव्याकृतविद्यया "तद्धेदं तर्ह्यव्याकृतमासीदि" त्यादिरूपया सहैकवाक्यतया विधिः कल्प्यत इति । एवं कला[4](फला)दिकमपि श्रुत्यन्तरेषूदाहार्यम् । चोदनादीत्यादिशब्दग्राह्याश्च तृतीयसूत्रे वक्ष्यन्ते ॥

**भेदान्नेति चेन्नैकस्यामपि ॥२॥**

ननु अविशेष एव नास्ति, कुतः ? भेदात् वैलक्षण्यात् । छान्दोग्ये हि "सदेव सोम्येदमि" त्यादिना सदाकारा विद्या श्रूयते, काण्वे च "तद्धेदं तर्ह्यव्याकृतमासीदि" त्यादिना अव्याकृताकारा । एवमन्येष्वपि वेदान्तेषु "आत्मा वा इदमग्र आसीदि" त्यादिना आत्माद्याकारेति । अतो विद्यानामाकारवैषम्यात् कथमेकवाक्यतेति चेन्न, एकस्यामपि विद्यायामविरुद्धाऽनेकाकारतासम्भवादित्यर्थः । उपपादयिष्यते चेदम 'न्यथात्वं शब्दादिति चेन्ने' त्यादिसूत्रैरिति भावः ॥

---

[1] 'विद्याया संशयसंभवात्' इति उ० ह० लि० पु० पाठः ।
'विद्यया संशयसंभवात्' इति सम्यक् प्रतीयते ।

[2] 'वैध' इति उ० ह० लि० पु० पाठः ।

[3] ' तथा च' इति उ० ह० लि० पु० पाठः ।

[4] 'कलादिकम्' इत्येव उ० ह० लि० पु० पाठः, स चासम्यग् भाति ।

सर्वास्वेव विद्यासु शाखान्तरैकवाक्यतया विध्यादिकं कल्पनीयमित्युक्तम्। इदानीं युक्त्यन्तरेणापि तत्कल्प्यमित्याह—

**स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥३॥**

हिरवधारणे। तथात्वेन विद्यायाश्चोदनादिमत्त्वेनैव, स्वाध्यायस्य तत्प्रतिपादकवेदान्ताध्ययनस्य, समाचारेऽनुष्ठानेऽधिकाराच्च योग्यत्वाच्च, तन्नियमः चोदनादिनियम इत्यर्थः। वेदान्तार्थस्याविधेयत्वे हि वेदान्तानामध्ययनयोग्यतैव न स्यात् निष्प्रयोजनकत्वात् "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामि" ति न्यायात्। नन्वविधेयार्थकत्वाभावेऽपि तदध्ययनमदृष्टार्थकमेव स्यादिति चेन्न, दृष्टार्थकत्वस्यापि संभवे तत्परित्यागानौचित्यात्। कर्मकाण्डेऽप्येवं सुवचत्वाच्चेति। तन्नियमेऽनुमानमप्याह–सववच्चेति। सवो यागः। यागवच्च चोदनानियमो विद्यासु। यथा ह्यश्रुतचोदनादिषु यागेषु चोदना[1]दिः कल्प्यते तथैव तद्दृष्टान्तेनाश्रुतचोदनादिषु विद्यास्वपीत्यर्थः।

यदि कुत्रापि वेदान्ते चोदनादिकं तिष्ठति तदाऽविशेषादित्याद्यो हेतुर्घटत इति तदर्थं वेदान्तेषु चोदनादिकं प्रतिपादयति—

**दर्शयति च ॥४॥**

दर्शयति च शाखिगणो वेदान्तेषु चोदनादिकमित्यर्थः। तत्र "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः, तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः, तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा आत्मन्येवात्मानं पश्यती" त्यादिका चोदना। फलं च "ब्रह्मविदाप्नोति परं ब्रह्मविद् ब्रह्मैव भवति, तमेव विदित्वाऽतिमृत्युमेती" त्यादिश्रुत्युक्तो मोक्षादिः। तथा विद्याया रूपमपि "आत्मेत्येवोपासीत, अहं ब्रह्मास्मि, तत्त्वमसि, स म आत्मेति विद्यादि" त्यादिश्रुत्युक्तम्। एवं प्ररोचनादयोऽपि विध्यङ्गभूताः श्रुतिषु प्रदर्शनीयाः।

उक्तवाक्येषु "द्रष्टव्यः प्रज्ञां कुर्वीत पश्यती" त्यादिरूपः साक्षात्कारे मूलविधिः, श्रवणविज्ञानसमाधानादयस्त्वङ्गतया विधीयन्ते अवघातादिवदिति मन्तव्यम्। अत्र च दृश्यते चेति वक्तव्ये दर्शयति चेत्युक्तं गुरुपरम्पराद्वारावगतया[2] (गततया) चोदनादीनां प्रामाणिकत्वावधारणायेति द्रष्टव्यम्।

केचित्त्वाधुनिका निर्गुणब्रह्मविद्यासु विधिर्नास्तीति सिद्धान्तं परिकल्प्येमं समग्रं पादं प्राणादिविद्यापरतया लक्षणाध्याहारादिना यथाश्रुतार्थं परित्यज्य यथाकथञ्चित्

---

[1] ईदृशः पाठ एकस्मिन् ह० लि० पु० वर्तते, स च युक्तः।
'ह्यश्रुतचोदनादिः कल्प्यते' इत्यन्यस्मिन् ह० लि० पु० मु० पु० च पाठः, स चासम्यक् प्रतीयते।

[2] 'गततया' इत्येकस्मिन् 'गताय' इत्यन्यस्मिन् ह० लि० पु० पाठः।

स्वमनीषया स्वमीमांसकत्वं प्रकटयन्तो व्याचक्षते। तस्य च विशिष्य निराकरणे ग्रन्थबाहुल्यं स्यादिति सामान्यतः किञ्चिदुच्यते—

तत्तु समन्वयादिति सूत्रे निर्गुणब्रह्मसाक्षात्कारे विधेर्व्यवस्थापिततया प्रकृतां ब्रह्मविद्यां परित्यज्य सर्ववेदान्तेति प्रथमसूत्रे सर्वपदं च संकोच्य प्रकृतप्राणादिमात्रविद्यासु विध्यादिविचारो नोचितः, नोचितश्च शाखान्तरविरुद्धशब्दार्थपरम्परास्वादस्तत्त्वबुभुत्सूनामिति। तस्मादाग्रहं परित्यज्यास्माभिरुच्यमानामेतत्पादव्याख्यामवधार्य मायावादिकृतव्याख्यागुणदोषौ स्वयमेव बुधैर्बोद्धव्याविति।

यदर्थं सर्ववेदान्तेषु ब्रह्मविद्यायां विधिरस्तीति प्रसाधितं स विचार इदानीं प्रवर्तयिष्यते। सिद्धे हि प्रधानभूतायां विद्यायां विधौ तदङ्गाकाङ्क्षया गुणोपसंहारानुपसंहारादि विचार्यतां लभत इति॥

## उपसंहारोऽर्थाभेदाद् विधिशेषवत् समाने च ॥५॥

स्वशाखोक्तगुणैरेव ब्रह्मोपासनेति न नियमः, किन्तु शाखान्तरोक्तविज्ञाने श्रुतानां गुणानामन्यत्रापि शाखायां समाने समानविषयके विज्ञाने उपसंहारः कर्तव्यः। समान इति हेतुगर्भं विशेषणं समानत्वादित्यर्थः। तथा च प्रकृतिप्रतीकके ब्रह्मविज्ञाने वेदान्तान्तरोक्ताः प्रकृतिधर्मा एवानन्दसत्यसंकल्पसर्वोपादानत्वादयः समानविषयत्वादुपसंहर्तव्याः। एवं जीवादित्यमनआदिप्रतीकोपासनास्वपि यथायोग्यं कर्मफलभोक्तृत्वहिरण्यश्मश्रुत्वादय उपसंहर्तव्याः। अप्रतीकब्रह्मविद्यायां च यथेच्छम् अस्थूलानण्वादयो निषेधरूपाः पूर्णनित्यानन्दभोक्तृत्वसर्वाधिष्ठानचिन्मात्रत्वादिविधिरूपाश्च सर्वे गुणा उपसंहर्तव्याः। न च नेतीति विवेकरूपस्य निषेधस्य यथोक्तैः सत्यसंकल्पत्वादिभिर्जगद्रूपकत्वादिभिर्वा विरोधोऽस्ति येनान्योन्यमुपसंहारो न स्यात्। प्रतीकोपासनायां तु मनःप्रतीकधर्माणामादित्ये प्रतीके विरुद्धतया न परस्परोपसंहारः कर्तव्य इति समाने चेत्यस्य विशेषणस्य फलमिति।

अयं चोपसंहारः फलभूमार्थं चेच्छयैव न त्वावश्यक इत्याह—अर्थाभेदादिति। प्रयोजनाभेदे सति उपसंहर्तव्यगुणस्य यत्फलमुद्दिष्टं तच्चेदुपासकस्योद्देश्यं भवतीत्यर्थः। उपसंहारे दृष्टान्तमाह—विधिशेषवदिति। यथा, शाखान्तरोक्तानामग्निहोत्रादिधर्माणां शाखान्तरोक्ताग्निहोत्रादिषूपसंहारस्तद्वदित्यर्थः॥

ननु विज्ञानानां समानत्वं कुत्रापि वेदान्ते नास्ति शब्दभेदेन प्रकरणभेदेन संज्ञाभेदेन वा भवदभिमतसमानविज्ञानानामप्यन्योन्यं वैषम्यादिति सूत्रत्रयेण क्रमश आशङ्क्याशङ्क्य समाधत्ते—

## अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥६॥

ननु विज्ञानानामन्यथात्वं वैषम्यं न तु समानत्वमस्ति, कुतः? शब्दभेदात् वचनभेदात्। तथा हि दहरप्राजापत्यविज्ञानयोः छान्दोग्याष्टमस्थयोः समानत्वं भवद्भिरभिप्रेयते, तयोश्च वैषम्यमेव दृश्यते। दहरविद्यायामाकाशशब्दोक्ते वस्तुनि

द्यावापृथिव्यादीनां कामानामन्वेष्यत्वस्योपास्यत्वस्य वचनात् "दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यमि" ति। प्राजापत्यविद्यायां च कामादिमद्वस्तुन आत्मशब्दोक्तस्यैवोपास्यत्वमुच्यते "य आत्माऽपहतपाप्मा विरजो विमृत्युः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्य" इति। एवं श्रुत्यन्तरेष्वपि किंचित्प्रकारेण विज्ञानानां वचनभेदोऽस्ति ततो न समानत्वमिति चेन्न, अविशेषात् शब्दयोरित्यर्थः। दहरवाक्येऽपि हि प्राजापत्यवाक्यस्थात्मविशेष्यकोपासनायामेव तात्पर्यं न तु कामविशेष्यकोपासनायाम्, दहरवाक्यशेषे "अथ यद्दहात्मानमनुविद्य[1] ( य उ हात्मानमनुविद्य ) व्रजन्त्येतांश्च सत्यान् कामानि" त्यनेनात्मनोऽपि स्वातन्त्र्येण ज्ञेयत्ववचनात्। उपासनाद्वयकल्पने च वाक्यभेदः स्यात्। अतो द्वयोरेव वाक्ययोरेकवाक्यतया परमात्मविशेष्यकैकोपासनायां तात्पर्यं दहरवाक्योपक्रमे च दहरे कामान्वेषणस्यावश्यकत्वप्रतिपादनार्थमेव तु विशेष्यभाववैपरीत्येनोक्तिरिति भावः। एवं विद्यान्तरेऽपि समानत्वं बोध्यम्॥

## न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् ॥७॥

अविशेषादित्यनुवर्तते। न वा नापि परोवरीयस्त्वाभयादिविविधगुणवतीनामुद्गीथोपासनानामिवास्मदभिप्रेतब्रह्मविज्ञानानामन्यथात्वं प्रकरणभेदादपि न भवति। कुतः ? अविशेषादेवेत्यन्वयः। अयं चार्थः—उदाहृतयोर्दहरप्राजापत्यविज्ञानयोः प्रकरणभेदेऽप्यर्थाविशेषात् समानत्वम्। परोवरीयस्त्वगुणकोद्गीथोपासनायां चार्थभेद एवास्ति तत्पूर्वोक्ताभयगुणकोद्गीथोपासनातः। अभयगुणकोद्गीथोपासना हि उद्गीथावयवप्रणवद्वारिका "ॐ इत्येतदक्षरमुद्गीथमुपासीते" त्यनेनोपक्रमात्। परोवरीयस्त्वगुणकोपासना तु समस्तोद्गीथविशेष्यिकेति परोवरीयस्त्वादिषु विद्याविषययोर्भेदोऽस्ति। अतस्तयोरप्यर्थभेदादेव वैषम्यं प्रकरणभेदस्त्वप्रयोजक इति भावः। काश्चनोद्गीथोपासनाः छान्दोग्यप्रथमप्रपाठके "य एतदेवं विद्वान् परोवरीयांसमुद्गीथमुपास्त" इत्यनेनोक्ता विस्तरभयान्न लिख्यन्ते॥

## संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥८॥

ननु प्रतिविद्यं विज्ञेयस्याकाशात्मब्रह्मज्योतिःप्राणादिरूपसंज्ञाभेदाद् विज्ञानान्यथात्वं दहरप्राजापत्यादिवाक्येष्विति चेत्, तदुक्तम् तत्रोक्तम्। "अंशोऽर्थान्तरत्वादिव्यपदेशात्, ज्योतिर्दर्शनात्" इत्यादिसूत्रैराकाशज्योतिरादिशब्दा एकस्मिन्नपि ब्रह्मण्युपपादिता इत्यर्थः। नन्वेवं सर्वत्रब्रह्मविद्यानामेवैक्यसम्भवे किमर्थमुपसंहारसूत्रे "समाने चे" ति विशेषणमुक्तं त्वदुक्तरीत्या वैषम्यस्य क्वाप्यसम्भवादिति, तत्राह—अस्ति तु तदपीति। तदपि तत् अन्यथात्वं विज्ञानवैषम्यमपि कुत्रचित् कुत्रचिदस्ति तृतीयसूत्रवक्ष्यमाणविज्ञानेष्वित्यर्थः॥

संज्ञाभेदेऽपि विज्ञानसाम्ये हेत्वन्तरमाह—

## व्याप्तेश्च समञ्जसम् ॥९॥

[1] यथामुद्रितं पाठ उ० इ० लि० पु० वर्तते।

ब्रह्मणो व्यापकत्वेन सर्वशक्त्यभेदात् सर्वसंज्ञोपपत्त्या समानत्वं विज्ञानानां समञ्जसं युक्तमित्यर्थः ॥

अस्ति तु तदपीति यदुक्तं तस्योदाहरणमाह—

### सर्वाभेदादन्यत्रेमे ॥१०॥

इमे शब्दभेदप्रकरणभेदसंज्ञाभेदरूपाः सूत्रत्रयोक्ताः विज्ञानवैषम्यहेतवस्तु सर्वाभेदादन्यत्रैव द्रष्टव्याः। येषु ब्रह्मविज्ञानेषु विज्ञेयविशेष्यांशे सर्वजगदभेदो नास्ति, यथा "मनो ब्रह्मेत्युपासीत आदित्यो ब्रह्मेत्यादेशः" इत्यादिप्रतीकोपासनेषु तेषु मनआदिप्रतीकधर्माणामादित्यादिप्रतीकोपासनातः शब्दादिभेदैर्हेतुभिर्वैषम्यं भवत्यर्थ-विशेषादित्यर्थः। तत्र च न गुणोपसंहारः कर्तव्यः आदित्यादिषु मनआदिधर्मासंभ-वात्। यत्र च सर्वाभेदोऽस्ति तादृशब्रह्मविशेष्यिकायां तूपासनायामप्रतीकालम्बनायां स्वेच्छया फलभूमार्थिना सर्वगुणोपसंहारः कर्तव्यो ब्रह्मण्यौपाधिकसर्वधर्मसम्भवात्। नेति नेतीत्यादिविवेकरूपाणां गुणानामपि भावरूपैर्विधिगुणैरविरोधात्। तथा "सर्वं खल्विदं ब्रह्म तज्जलानि" त्यादिवाक्योक्तायां सर्वप्रतीकालम्बनब्रह्मोपासनायामप्युक्तहे-तुत्रयविषयत्वं नास्ति सर्वत्वावच्छिन्न उपासनाविशेष्ये सर्वगुणा[1](ण) सत्त्वेन सर्वपु[2]ण्यो(गुणो)पसंहारसम्भवादिति ॥

इदानीं प्रतीकधर्मान् विभजमानः प्रतीकरूपाण्यप्युपसंहारस्योदाहरणानि त्रि-सूत्र्या प्रदर्शयति—

### आनन्दादयः प्रधानस्य ॥११॥

ब्रह्मविद्यावाक्येषु आनन्दकामक्रत्यादयो गुणाः प्रधानस्य ब्रह्मप्रतीकस्य त्वेषामी-श्वरोपाधिधर्मत्वात्। अतस्ते प्रकृतिप्रतीकब्रह्मविद्यास्वन्योन्यमुपसंहर्तव्याः साम्या-दित्यर्थः। प्रधानं च त्रिगुणात्मिका जडशक्तिः "प्रधानं प्रकृतिः स्त्रियामि" त्यनुशास-नात्। प्रकृतिप्रतीकालम्बना ब्रह्मोपासना "आनन्दो ब्रह्मेति व्यजानात्" इत्यादि-श्रुत्युक्ता। "अन्नं ब्रह्मेति व्यजानात् प्राणो ब्रह्मेति व्यजानात्" इत्यादिभिः सह पाठेन "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" इत्यादिवचनेन च धर्मधर्म्यभेदत आनन्दशब्दस्य तत्र प्रकृतिवाचित्वात् ॥

ननु भवन्तु कामादयः प्रकृतिधर्मा आनन्दस्तु चैतन्यमिव ब्रह्मस्वरूपमेवोचितः "विज्ञानमानन्दं ब्रह्मे" त्यादिश्रुतिभ्यो अग्न्यौष्ण्यवदभेदौचित्यादित्याशङ्कायामाह—

### प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥१२॥

तैत्तिरीयके आनन्दमयस्य प्रियशिरस्त्वादिकं प्रदर्शितम् "तस्य प्रियमेव शिरः

---

[1] 'सर्वगुणसत्त्वेन' इति उ० ह० लि० पु० पाठः।

[2] सर्वपुण्योपसंहार' इत्येकस्मिन् ह० लि० पु० पाठः।

'सर्वगुणोपसंहार' इत्यन्यस्मिन् ह० लि० पु० पाठ एव सम्यक्।

मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्षः आनन्द आत्मा ब्रह्म पुच्छं प्रतिष्ठे'' त्यनेन। तेषां च प्रियशिरस्त्वादीनां ब्रह्मण्यप्राप्तिरसम्भवः, कुतः? उपचयापचयौ हि भेदे सम्भवत इति शेषः। प्रियमोदप्रमोदानन्दरूपेण सुखस्योपचयापचयौ बहुत्वाल्पत्वेऽन्योन्यं विरुद्धे सुखानां स्वरूपतोंऽशतो वा नानात्वे तस्य ब्रह्मस्वरूपत्वं न सम्भवति ब्रह्मण एकत्वान्निरवयवत्वादित्यर्थः। न च ज्ञानस्य उपचयापचयवदानन्दस्योपचयापचयावप्युपाधिवृत्त्यौपाधिकौ स्यातामिति वाच्यम्, परमात्मनि ज्ञानतारतम्यस्याप्यभावात्। एवं सति उपाधिवृत्तावेवानन्दौचित्याच्च। वृत्तेः कर्मकर्तृविरोधेन स्वज्ञेयत्वानुपपत्त्यैव तु वृत्तिविषयकं ज्ञानमन्यस्य कल्प्यत इति। यदि च सुखस्य ब्रह्मधर्मत्वं नानात्वं चेष्यते तदापि चिन्मात्रत्वश्रुतिस्मृतिविरोध इति भावः। आनन्दस्य प्रकृतिधर्मत्वे तु जीवसुखमादाय नानाविधत्वमुपपद्यत एव। नन्वेवमानन्दमयोऽभ्यासादिति सूत्रेणानन्दमयो ब्रह्मेति कथमुक्तमिति चेन्न, आध्यानायेत्यादिसूत्रैः समाधास्यमानत्वात्। प्रधानस्यानन्द इत्यत्र प्रमाणानि 'शिवस्य परमा शक्तिर्नित्यानन्दमयी ह्यहमि'ति प्रकृत्यभिमानिपार्वतीवाक्यादीनि पञ्चसूत्र्यामुक्तानि॥

## इतरे त्वर्थसामान्यात् ॥१३॥

एवमितरेऽपि हिरण्यश्मश्रुत्वादयो गुणा अर्थसामान्याद्, विद्याविषयस्य समानत्वं यथा भवति तथा आदित्याक्षिब्रह्मप्रतीकेषूपसंहर्तव्या इत्यर्थः॥

ननु आनन्दादयश्चेन्न ब्रह्मधर्मस्तर्हि[1] कथमानन्दमयाधिकरणे परमात्मानन्दमय इत्युक्तं कथं वा 'हिरण्मयः पुरुष एकहंस' इत्यादिपरमात्मप्रकरणस्थवाक्यैरादित्यादिधर्माः परमात्मन्युच्यन्ते, तत्त्वस्यैवोपदेश्यत्वादिति तत्राह—

## आध्यानाय प्रयोजनाभावात् ॥१४॥

ब्रह्मणि तु आनन्दहिरण्मयत्वादयः प्रधानादित्यादिधर्माः आध्यानाय सम्यग्ध्यानायैवोक्ताः श्रुतिषु। उपाधिगुणैर्हि स्थूलदृष्टिभिर्व्यक्ततया ध्यातुं शक्यत इति। ननु आध्यानायेति कथमुच्यते प्रकृतेरिव ब्रह्मणोऽपि पृथगानन्दादयः सन्तु श्रुतत्वादित्याशङ्कायामाह—प्रयोजनाभावात्। उपाध्यानन्द एव श्रुत्युक्तोपासनोपपत्तावानन्दविधाने श्रुतेः प्रयोजनाभावात्, आनन्दद्वयकल्पनस्य निरर्थकत्वात्। अन्यथा कामादीनामप्युपाध्यात्मनोर्द्वयतापत्तेरित्यर्थः॥

## आत्मशब्दाच्च ॥१५॥

ब्रह्मांशभूतजीवप्रतिपादकशब्दादप्यंशिन आनन्दादिकं नास्ति किं त्वाध्यानायैवेत्यवगम्यते अंशांशिनोरेकरूपत्वात्। जीवतत्त्वप्रतिपादिकाश्च श्रुतिस्मृतयो जीवानामानन्दस्वरूपत्वं प्रतिषेधन्ति "अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशतः, मनसः परिणामोऽयं सुखदुःखोपलक्षणः" इत्याद्या इत्यर्थः॥

---

[1] 'ब्रह्मधर्मस्तर्हि' इत्येव उ० ह० लि० पु० पाठः सम्यक्।
ब्रह्मचर्यमस्ति तर्हि' इति मु० पु० पाठोऽत्यन्तमयुक्तः।

नन्वेवमानन्दादिगुणानुरोधादानन्दमयादिवाक्येषु प्रधानादीनामेवोपास्यत्वमस्तु, किमिति परधर्मैः परस्योपास्यत्वमिष्यते ? तत्राह—

आत्मगृहीतिरितरवदुत्तरात् ॥१६॥

इतरवत् निर्णीतब्रह्मवाक्येष्विवानन्दमयादिवाक्येष्वपि परमात्मनः सर्वगृहीतिर्ग्रहणं, कुतः ? उत्तरात् । आनन्दमयाद्यधिकरणेष्वस्माभिर्दत्तात् प्रत्युत्तरादित्यर्थः । अथवा उत्तरात् तत्तत्प्रकरणस्थवाक्यशेषादित्यर्थः । प्रथमाध्याय एव तत्तद्वाक्यानां ब्रह्मपरत्वं युक्तिभिः साधितमिति भावः ॥

अन्वयादिति चेत् स्यादवधारणात् ॥१७॥

चेद् यदि अन्वयात् विशेषत्वेन प्रधानादिगृहीतिरानन्दमयादिवाक्येष्वित्युच्यते तदा स्यादेव सा तां न निराकुर्मः, कुतोऽवधारणात् । वैश्वानराधिकरणेऽस्माभिरपि ब्रह्मोपासनायां विशेषणतायाः शक्तिष्ववधृतत्वात् "शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न, तथा दृष्ट्युपदेशादिति" सूत्रेणेत्यर्थः । तथा दृष्टिर्वैश्वानरादिप्रकारेण दृष्टिरित्यर्थः ॥

ननु आनन्दादिमत्तया ब्रह्मोपदेश आध्यानाय चेत् तदा मिथ्याज्ञानत्वेन मोक्षहेतोराध्यानस्य किं फलं स्यादित्याकाङ्क्षायामाह—

कार्याख्यानादपूर्वम् ॥१८॥

आध्यानाच्च पूर्वं धर्मविशेषो भवति, कुतः ? कार्याख्यानात् विधिशब्देन कार्यस्यापूर्वस्य कथनादित्यर्थः ॥

उपासनावाक्येषु कार्याख्यानादपूर्वं च दृष्टान्तेन सिध्यतीत्याह —

समान एवं चाभेदात् ॥१९॥

उपासीतेत्यादिवाक्यैः समाने यजेतेत्यादिकर्मविधावेवं च यागविषयं कार्यमिति कार्याख्यानादपूर्वं चाभ्युपगम्यते । अतस्तदभेदात् तत्साधर्म्यादुपासनाविधावपि कार्याख्यानादपूर्वमनुमीयते । ननु लोके गच्छेदित्यादिवाक्यैः कार्यं यदाख्यायते तद्धात्वर्थ एव न त्वपूर्वमिति चेत् , सत्यं, तत्र गमनादाविष्टसाधनत्वसम्भवेन कार्यत्वान्वयसम्भवात् । यागादौ तु कालान्तरभाविस्वर्गादिसाधनत्वासंभवेन यागशब्दे यागविषयकं किंचिद् वस्तु लक्षयित्वा तत्र कार्यतान्वयस्यागत्येष्टत्वात् । स च कार्यविशेषोऽदृष्टरूपो यागादिसाध्यतया यागादिविषयक उच्यत इति ॥

एवं सगुणविद्यातोऽपूर्वोत्पत्तिमुक्त्वा निर्गुणविद्याप्रतीकविद्याप्राणादिविद्याभ्योऽपि तदुत्पत्तिमतिदिशति—

सम्बधादेवमन्यत्रापि ॥२०॥

विद्यासामान्येऽपूर्वं मन्तव्यम् , कुतः ? सम्बन्धात् । अपूर्वाख्ये कार्ये शक्ति-

रूपसम्बन्धादित्यर्थः। "तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मण" इत्यादिश्च निर्गुणविद्याविधिः तमेवेत्येवकारेणोपाधितद्गुणादिविषयत्वस्य ज्ञाने प्रतिषेधादिति वोध्यम्॥

विधेरपूर्वाख्यकार्ये शक्त्यनङ्गीकारेऽपि विद्यातोऽपूर्वोत्पत्तौ हेतुमाह—

न वा ऽविशेषात्॥२१॥

गार्हस्थ्यं क्रियताम् न वा संन्यस्यतामित्यादिवदत्र न वा शब्दस्य नो चेदित्यर्थः। नो चेत् यदि कार्याख्यातं नाभ्युपगम्यते तथापि अविशेषात् कालान्तरभाविफलकत्वेन वेदविहितत्वेन च यागादिभ्योऽविशेषात् तद्दृष्टान्तेन सकलविद्यानां व्यापारतया अपूर्वमनुमेयमित्यर्थः।

स्यादेतत्, सगुणब्रह्मविद्यायां प्राणादिदेवताविद्यादौ च कालान्तरभाविसत्यलोकाद्यदृष्टफलकतया अपूर्वं व्यापारः कल्प्यतां निर्गुणब्रह्मात्मविद्यायां जीवात्मतत्त्वज्ञाने च किमर्थमपूर्वं कल्पनीयं, तयोरात्मतत्त्वज्ञानत्वेन देहाद्यभिमाननिवृत्तिरूपदृष्टद्वारैव मोक्षाख्यकालान्तरभाविफलहेतुत्वसम्भवादिति।

उच्यते—मिथ्याज्ञाननिवृत्तेरपि न साक्षान्मोक्षहेतुत्वं किं तु कर्मनिवृत्तिवैराग्याभ्यां द्वाराभ्यामेव। तत्र यद्यपि वैराग्यद्वारा ब्रह्मात्मताजीवतत्त्वज्ञानयोर्मोक्षहेतुत्वेऽदृष्टापेक्षा नास्ति, तथापि कर्मक्षयद्वारा झटिति मोक्षाय तयोरप्यदृष्टमपि द्वारं वक्तव्यं विद्याया धर्माधर्मनाशकत्वे लौकिकद्वाराऽभावात्। गौतमाद्याचार्यैश्च कर्मकारणीभूतमिथ्याज्ञानस्य निवृत्तिद्वारा कर्मानुत्पाद एव तत्त्वज्ञानजन्यत्वाभिधानात् "दुखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" इत्यादिभिः न तु कर्मनाशेऽपीति। अपि च दृष्टकारणे सत्यपि अविद्यानिवृत्तौ पापादिप्रतिबन्धः सम्भवति, अतः पापक्षयार्थमपि तत्त्वज्ञानजन्यापूर्वं सिध्यति।

अथैवपि प्रायश्चित्तादिभिरिवाव्यवहितक्षण एव तत्त्वज्ञानेन प्राचीनकर्मविनाशसंभवादपूर्वेणालमिति चेन्न, दृष्टान्तासिद्धेः। प्रायश्चित्तेऽप्युत्तराङ्गसाफल्याय फलशिरस्कापूर्वस्यावश्यं वाच्यत्वात्। एवं तत्त्वज्ञानस्यापि यमनियमादिशमदमादिरूपपूर्वोत्तराङ्गपरम्परासाफल्याय प्राचीनकर्मक्षयार्थं फलशिरस्कापूर्वमवश्यं कल्पनीयमिति। किं च वेदविहितत्वावच्छेदेनैव लाघवाद् धर्मजनकत्वकल्पनादपि तत्त्वज्ञान[1] (ज्ञाने) जनकत्वं (अपूर्वजनकत्वं) सिध्यति। अत एव जैमिनिसूत्रम्—"चोदनालक्षणाऽर्थो धर्म" इति। अत एव च ज्ञानस्यैव परमधर्मत्वमभिप्रेत्य कणादेनाप्युक्तम्—"अथातो धर्मं व्याख्यास्याम" इति। "अयं तु परमो धर्मो यद् योगेनात्मदर्शनम्" इति स्मृत्याद्यनुसारादिति।

अपि च तत्त्वज्ञानस्य मोक्षहेतुत्वं शास्त्रेपूक्तं न तु दृष्टमात्रद्वारकत्वमप्युक्तम्। तथा च यथा यागादेः पुत्राद्युत्पत्तौ दृष्टादृष्टसकलकारणसंपादकत्वं तथैव तत्त्वज्ञानस्य

---

[1] यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते।

मोक्षोत्पत्तौ स्वीकार्यम् । तथा चानेकजन्मसाध्यस्य ब्रह्महत्यादिजन्यप्रारब्धकर्मभोगस्य कायव्यूहादिना झटिति समापनमप्यपूर्वं विना न सम्भवतीति मोक्षार्थं तत्त्वज्ञानजन्यापूर्वमभ्युपगम्यते । अन्यच्च ब्रह्मतत्त्वजीवतत्त्वज्ञानयोरपि सिद्धिहेतुत्वात् कालान्तरभाविसिद्ध्यर्थमपि अपूर्वं स्वीकार्यमिति । तत्रेच्छाश्रुतेः[1] सर्वान् कामान् सह ब्रह्मज्ञानात् सिद्धिरुक्ता । जीवतत्त्वज्ञानस्य सिद्धिहेतुत्वं च पातञ्जले स्पष्टम् "सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं चे" ति सूत्रे । अत एव श्रुतावध्यात्मज्ञानस्येदं फलं श्रूयते "आत्मनि वा अरे दृष्टे श्रुते मते इदं सर्वं दृष्टं श्रुतं मतं भवती" ति । अस्याश्च फलश्रुतेर्यथाश्रुतार्थं परित्यज्य गौणवृत्त्या स्वातन्त्र्येण व्याख्यानं निर्मूलत्वादुपेक्षणीयम् ।

इदं त्ववधेयम्—यद्यपि तत्त्वज्ञानस्यापूर्वजनकत्वं तद्द्वारा मोक्षहेतुत्वं चास्ति, तथापि ज्ञानं मोक्षमदृष्टद्वारैव जनयतीति न नियमः, परवैराग्ये कर्मानुत्पादरूपदृष्टमात्रद्वारेणापि गौतमोक्तरीत्या मोक्षसंभवात् । विशेषस्त्वयम्—अदृष्टं विना प्राचीनकर्मणा प्रारब्धकर्मणा च मोक्षे कालविलम्बोऽपि कदाचिद् भवतीति । अतो मुमुक्षुभिः सत्यां शक्तौ वेदोक्तैः शमदमादिभिः स्वाश्रय ( म ) धर्मादिभिश्च सहैव तत्त्वज्ञानमभ्यसनीयम् । अशक्तौ तु केवलतत्त्वज्ञानमप्यभ्यसनीयम् दृष्टवैराग्यादिमात्रद्वाराऽपि झटिति विलम्बेन वा मोक्षसम्भवादिति । एतच्च चतुर्थाध्याये "अतस्त्वितरज्ज्याय" इत्यादिसूत्रैः स्पष्टीभविष्यतीति दिक् ।

यत्तु तत्त्वज्ञानस्य नादृष्टजनकत्वं प्राचीनकर्मनाशस्तूपादानकारणस्याविद्याया नाशादिति दृष्टद्वारक एव कर्मनाशोऽपीत्याधुनिकानां प्रलपनं तत् पञ्चसूत्र्यां निराकृतं निराकरिष्यते च । किं च तत्त्वज्ञानेन मिथ्याज्ञाननाश एव लोके दृष्टो न तु मिथ्याज्ञानोपादाननाशः शुक्तितत्त्वज्ञानेऽपि पुनर्मिथ्याज्ञानान्तरदर्शनात् प्रारब्धकर्मणोऽव्यवस्थानासंभवाच्चेति ॥

न केवलं सगुणनिर्गुणविद्यासाधारण्येनापूर्वहेतुत्वं तर्कत एवाभ्युपगम्यते किं तु श्रुतितोऽपीत्याह—

## दर्शयति च ॥२२॥

दर्शयति च शाखिगणो विद्यातोऽपूर्वमित्यर्थः । यथा कठवल्ल्याम् "एतत् श्रुत्वा संपरिगृह्य मर्त्यः प्रवृह्य धर्म्यमणुमेतमाप्ये" त्यादिना । धर्म्यं धर्मकारणमित्यर्थः । तथा स्मृतिरपि "प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम्, अयं च परमो धर्मो यद्योगेनात्मदर्शनमि" त्यादिना । धर्मो धर्महेतुः । पतञ्जलिरपि "सर्वथा विवेकख्यातेर्धर्ममेघः समाधिरि" त्यनेन । धर्मं मेहतीति वर्षतीति धर्ममेघः समाधिर्विवेकसा-

---

[1] यथामुद्रितं पाठ एकस्मिन् ह० लि० पुस्तके वर्तते ।
'तत्रेना(च्छा)श्रुते (:) सर्वान् कामान् सह ब्रह्मणा विपश्चितेत्यादिश्रुतिषु ब्रह्मज्ञानात् सिद्धिरुक्ता' इत्यन्यस्मिन् ह० लि० पु० पाठः सम्यग् भाति ।

क्षात्कारसन्तानरूपः सम्प्रज्ञातः ज्ञानस्यैव परा काष्ठेत्यादिभाष्यव्याख्यानादिभ्य इत्याध्यानादिसकलविद्यास्वपूर्वं प्रसाधितम् ॥

इदानीमाध्यानादिक्रमेणैवापूर्वद्वारकं कालान्तरभाविफलजातं विद्यानां परीक्ष्यते, सर्ववेदान्तप्रत्ययं चोदनादीत्युपक्रमसूत्रस्थादिशब्दगृहीतस्य विद्याफलादेर्वक्तव्यत्वात्। एवं च पूर्वसूत्रोक्तो विशेषरूपो हेतुरपि सेत्स्यतीत्याशयः।

## संभृतिद्युव्याप्त्यपि चातः ॥२३॥

अत आध्यानजादपूर्वाच्च द्युव्याप्ती अपि फले भवत इत्यर्थः। अपिशब्दः पापक्षयरूपसत्त्वशुद्ध्यपेक्षया। संभृतिः सम्भरो विविधविभूतिः "स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ती"त्यादिश्रुत्युक्तेत्यर्थः। तत्साधनभूता द्युव्याप्तिश्चार्चिरादिक्रमेण ब्रह्मलोकपर्यन्तसकलदेवलोकव्याप्तिः। एते फले सगुणब्रह्मविद्यातः आध्याननाम्ना अदृष्टद्वारैव भवतः कालान्तरभावित्वाद् यागजन्यस्वर्गवदिति भावः।

ननु मोक्षफलकत्वश्रवणान्मोक्षोऽपि साक्षादेवाध्यानापूर्वात् कथं न स्यात्? तत्राह—

## पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥२४॥

पुरुष आत्मा "क्षेत्रज्ञ आत्मा पुरुष" इत्यनुशासनादिभ्यः। स च परमात्मा जीवश्चेत्यंशांशिरूपेण द्विविधः "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः" इत्यादिवाक्येभ्यः। आत्मैक्यं तु ब्रह्मात्मताभिप्रायेणांशांश्यभेदेन वेत्युक्तम् वक्ष्यते च। तयोर्विद्या च लयावधिभूतं विविक्तब्रह्मैवाहमिति, सुखादिभोक्ताहं सुखादिशून्य इति च द्विविधा ब्रह्ममीमांसासांख्याभ्यां विशेषतो निर्णीता। तस्यां विद्यायां तत्त्वज्ञानरूपतया यथा साक्षान्मोक्षाम्नानं "तमेव विदित्वातिमृत्युमेति, सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यमि" त्यादिरूपमस्ति, इतरेषां विज्ञानानां तथाऽनाम्नानात् पूर्वसूत्रोक्ते एवाध्यानस्य फले भवतः, न साक्षान्मोक्ष इत्यर्थः। सत्त्वशुद्धिभगवत्परितोषादिद्वारा तु मोक्षोऽप्याध्यानाद् भवतीति तत्र (तन्न) निराक्रियते "उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्तन्ति धीराः। तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्" इत्यादिश्रुतिस्मृतिभ्य इति मन्तव्यम् ॥

आध्यानपुरुषविद्ययोः फलभेदे युक्त्यन्तरमाह—

## वेधाद्यर्थभेदात् ॥२५॥

वेधो ब्रह्मनाडीभेदः, तदादिर्यो ब्रह्मलोकगतिपर्यन्तोऽर्थभेदः व्यापारस्य भेदः परिपक्वपुरुषविद्यापेक्षया, स च विशिष्य चतुर्थाध्याये वक्ष्यमाणः। तस्मात् तच्छ्रवणात् पुरुषविद्यातुल्यं फलं न आध्यानस्य भवति पुरुषविद्यायामुत्क्रमणप्रतिषेधादित्यर्थः।

ननु "ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा" इत्यादिवचनात् कथं तत्त्वज्ञानस्यापूर्वजनकत्वं घटते, विरोधात्। किं च ब्रह्मविद्यया त्यक्तदेहस्यापि सत्यलोकादिगतिः कषायशेषादिवशाद् वक्ष्यते, तस्याश्च कथं विद्यापूर्वजन्यत्वं वक्तुं शक्यते "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं ब्रह्मयोनिं तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैती" त्यादिश्रुतौ ब्रह्मविदुषोऽविशेषेण सर्वापूर्वक्षयश्रवणात्। न च तद् वाक्यं सद्योमुक्तिपरमेवास्त्विति वाच्यम् "ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वत" इत्युत्तरवाक्येन क्रममुक्त्यवगमादित्याशङ्कां निराकरोति—

**हानौ तूपायनशब्दशेषत्वात् कुशाछन्दःस्तुत्युपगानवत्तदुक्तम् ॥२६॥**

हानौ तु विदुषः सर्वकर्महानिवाक्ये तु कुशाछन्दःस्तुत्युपगानवद् विशिष्टमेव तदपूर्वम् उक्तं न त्वपूर्वसामान्यं, कुतः ? उपायनशब्दशेषत्वादिति योजना। अयमर्थः—यथा कुशाः वानस्पत्या इत्येकस्यां शाखायां कुशानां वनस्पतिसामान्ययोनित्वलाभेऽप्यौदुम्बराः कुशा इति शाखान्तरे विशेषवचनादौदुम्बरा एव कुशा अवधार्यन्ते न वनस्पत्यन्तरीयाः। यथा वा एकस्यां शाखायां श्रुतानां देवासुरच्छन्दसां पौर्वापर्यसामान्यप्रसक्तौ शाखान्तरे च छन्दांसि पूर्वाणीति विशेषात् छन्दःपाठे क्रमविशेषोऽवधार्यते। यथा वा षोडशिसत्रे एकस्यां शाखायां कालविशेषाश्रवणेऽपि समयाध्युषिते सूर्य इति शाखान्तरात् कालविशेषोऽवधार्यते, तथैव चैकस्यां शाखायां सामान्यत उपगानश्रवणेऽपि शाखान्तरादुपगानगतः स्वरादिविशेषोऽवधार्यते। एवमेवोदाहृतवाक्ये सामान्यतोऽदृष्टहानश्रवणेऽपि श्रुत्यन्तरत्वादुपायनशब्दशेषत्वात् अदृष्टविशेषो विद्याजन्यातिरिक्तापूर्वरूप एवावधार्यते इति। उपायनं चोपगमनम्। तत्रोपायनशब्दो यथा कौषीतकिनां "तत्सुकृतदुष्कृते विधूनुते तस्य प्रियाः ज्ञातयः सुकृतमुपयन्ति अप्रियाः दुष्कृतमिति"। अत्र वाक्ये सुकृतदुष्कृतयोर्हानं प्रियाप्रियज्ञात्युपायनवाक्यशेषत्वेन वर्तते। तथा च ये पुण्यापुण्ये मित्रामित्राभ्यां प्राप्य[1](प्ये) तयोरेव हानं विधूननाख्यं भवतीति गम्यते, तच्छेषत्वेनैव विधूननकथनात्।

न च ब्रह्मविद्याजन्यं मोक्षसत्यलोकयोः प्रापकमपि सुकृतं मित्रेषु गच्छतीति युज्यते, तथा सति विदुषो मोक्षसत्यलोकप्राप्त्यसम्भवात्। प्रिया अप्रियाश्च सुकृतदुष्कृते उपयन्तीत्यस्य च विदुषां पुण्यपापे प्रियाप्रिययोः सजातीयपुण्यपापे जनयित्वा नश्यत इत्यर्थः।

तथा चैतत् श्रुत्येकवाक्यतया क्रममुक्तौ सर्वाण्येव विदुषः कर्मक्षयवाक्यानि विद्याजन्यसुकृतातिरिक्तकर्मपराणीति सूत्रमहावाक्यार्थः ॥

तदेवमाध्यानाख्यायाः सगुणब्रह्मविद्यायाः फलं परीक्षितम्। इदानीमाध्यानवैषम्योपपादनमुखेनैव द्विविधपुरुषविद्यायाः फलं परीक्ष्यते, तत्त्वनिर्गुणब्रह्मविद्याजन्या-

---

[1] 'पित्रामित्राभ्यां प्राप्ये' इत्येकस्मिन् ह० लि० पु० पाठः।
'मित्रामित्राभ्यां प्राप्ये' इत्यन्यस्मिन् ह० लि० पु० पाठः।

दपूर्वात् कर्मक्षयादौ जाते सति तदपूर्वं स्वयमपि नश्यतीत्येवंरूपा सद्योमुक्तिः, सगुणविद्याऽव्यावृत्तां तामाह—

साम्पराये तर्तव्याभावात् तथा ह्यन्ये ॥२७॥

पुरुषविद्यायामिव चेतरेषामनाम्नानामित्यत्र हेतुताबोधकोऽत्र हिशब्दः। तथा च हि यस्मादन्ये पुरुषवधाज्जन्याधर्मास्तथा उपायनशब्दशेषसुकृतवदिहैव हीयन्ते, अतो न इतरविद्यानां पुरुषविद्यातुल्यत्वमित्यर्थः। कुतः पुनरिहैव हीयन्ते ? तत्राह— सांपराये तर्तव्याभावादिति। सांपराये परलोके भोगेन तर्तव्यो हि कायो निर्गुणात्मद्वयविदुषां नास्ति आत्मतत्त्वज्ञानेन परवैराग्यात् यस्य तरणार्थं सत्यलोकभोगहेतुतया विद्याजन्यापूर्वे (र्वं) तिष्ठेदित्यर्थः। इत्थञ्च,

"ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा" इत्यादिवाक्यं तत्त्वज्ञानप्रकरणस्थतयाऽसङ्कुचितसर्वकर्मनाशपरतयाऽभ्युपपद्यते, तत्त्वज्ञानजन्यधर्मेण कर्मान्तरं नाशयित्वाऽस्यापि नाशनात् दग्धेन्धनानलवदेति बोध्यम् ॥

नन्वेवं निर्गुणात्मविद्यात इहैव सर्वकर्मक्षये कथं निर्गुणब्रह्मात्मविद्याप्रकरणेऽपि कुत्रचित् श्रूयमाणा ब्रह्मलोकगतिरुपपद्येत ? यथा "यदा पश्य" इत्याद्युपदर्शितं मुण्डकादिष्वित्याशङ्कायामाह—

छन्दत उभयथा विरोधात् ॥२८॥

छन्दत उपासकस्य कामजः (तः) कषायत इति यावत् कषा[१]यं(य) सत्त्वासत्त्वनिमित्ततस्तत्त्वज्ञस्यापि उभयोर्विद्याजन्यधर्मसत्त्वतन्नाशयोरविरोधान्नोक्तशङ्केति शेषः। न चैवं तत्त्वज्ञानस्य मुक्तिहेतुत्वे व्यभिचारः, प्रारब्धभोगार्थं कायव्यूहादिकमिव कषायक्षयार्थं ब्रह्मलोकभोगं सम्पाद्य कामप्रतिबन्धनिरासानन्तरं परिपक्वेन तेनैव ज्ञानेन विदेहकैवल्यजननादिति। न चैवमप्यैहिकमोक्षाविश्वास इति वाच्यम्, कषायक्षयस्य स्वानुभववेद्यत्वेन तन्निर्णयसम्भवात्। अत एव च गीतायां रागादिकषायनिमित्तकाद् योगभ्रंशादुत्तमा गतिरुक्ता, सापि सत्यलोकान्ता बोध्येति ॥

गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥२९॥

एवं सकामाकामभेदेनोभयथा तत्त्वज्ञानफलाभ्युपगमे सति गतेर्ब्रह्मलोकगतिवाक्यस्य निर्गुणात्मविद्याप्रकरणस्थस्यार्थवत्त्वम् अबाधितार्थकत्वं भवति। अन्यथा हि सद्योमुक्तिक्रममुक्तिवाक्ययोरेकविधज्ञानप्रकरणस्थयोर्विरोध एव स्यात् "न तस्य प्राणा उत्क्रामन्ति तेऽर्चिषमभिसंविशन्ती" त्यादिरूपयोरित्यर्थः ॥

इदानीं कामप्रतिबन्धनिवृत्तये ब्रह्मलोक गतस्यात्मतत्त्वविदुषः आत्यन्तिकमोक्ष-(क्षः)[२]श्रवणादिबाह्यसाधननैरपेक्ष्येणैव भवतीत्याह—

---

[१] 'कषायं' इति उ० ह० लि० पु० पाठः।

[२] 'मोक्षश्रवणादि' इति उ० ; ० लि० पु० पाठः

उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥३०॥

तल्लक्षणानां कामलक्षणानां कामविषयाणामर्थानां ब्रह्मलोके उपलब्धेर्भोगाद्धेतोर्विद्यानिवृत्तप्रतिबन्धः संस्तेनैव परिपाकमात्रापेक्षेण ज्ञानेनैव ब्रह्मण्युपपन्नः सम्पन्नः, समुद्रे जलबिन्दुवदुपगतो विलीनो भवतीत्यर्थः। लोकवदिति। यथा लोका विषयकामैर्विक्षिप्तचित्तास्तत्काम्यार्थभोगेनोपशान्ता भवन्ति तद्वदित्यर्थः। ननु—

न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते॥

इति वचनात् भोगेन नोपशान्तिर्घटत इति चेन्न, भोगमात्रोपशाम्यत्वस्यैव तादृशवाक्यैः प्रतिषेधात्। ज्ञानेन ब्रह्मलोकगतस्य तु विशेषोऽस्ति यत् अज्ञचित्तस्य वासनावशात् पुनः कामोत्थानं भवति, ज्ञचित्तस्य तु वासनानुत्पत्तेः। प्रारब्धकर्मवद् वलवत्तरस्य च सर्वकामावधौ ब्रह्मलोके भोगेनोपशान्ते न[1] (र्न) पुनः कामोत्थानमिति सिद्ध आत्यन्तिको मोक्षाख्यो लय इति॥

इदानीं ब्रह्मलोकगतानां मोक्षे विशेषमाह—

अनियमः सर्वासामविरोधःशब्दानुमानाभ्याम् ॥३१॥

ब्रह्मलोकसाधनभूतानां सर्वासां विद्यानामयं नियमो नास्ति आत्यन्तिमोक्षमवश्यं ददातीत्येवंरूपः, हिरण्यगर्भपञ्चाग्न्यादिविद्याभिर्ब्रह्मलोकगतानां मोक्षानियमात् अविद्यासत्त्वसम्भवात्। ब्रह्मलोकादनावृत्तिप्रतिपादकानां "न स पुनरावर्तत" इत्यादिवाक्यानां चोत्सर्गाभिप्रायकत्वात्। ब्रह्मलोकं गता हि तत्रैव ज्ञानोपरता हि तत्रैव ज्ञानोत्पत्त्यापि प्रायशो मुच्यन्त इति। कुत एतत् अविरोधः? शब्दानुमानाभ्याम्। एवं हि सति अनावृत्तिश्रुत्या "आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुने" त्यादिस्मृत्या चान्योन्यं विरोधो न स्यादित्यर्थः। तथा च सांख्यसूत्रम्—"तत्राप्राप्तविवेकस्यानावृत्तिश्रुतिरि"ति॥

इदानीमनियमस्योदाहरणं प्रदर्शयन्नेव ब्रह्मविष्णुरुद्राग्निप्राणादिविद्यानामपि फलस्य व्यवस्थामाह, वेदान्तोक्तसकलविद्याया एव क[2](फ)लादीनां ब्रह्मात्मविद्योत्कर्षप्रतिपादनाय विवक्षितत्वादिति—

यावदधिकारमवस्थितिराधिकारिकाणाम् ॥३२॥

अधिकारिणः सृष्टिस्थितिसंहारादिषु ब्रह्मविष्णुहरादयस्तेषामुपासकाश्चाधिकारिकास्तेषां तत्तद्देवताविदुषां तत्तद्देवताधिकारकालपर्यन्तमेव ब्रह्मलोकादिषु स्वोपास्यदेवैः सहावस्थानं फलं न सर्वदा न वा तदन्ते मोक्षनियम इत्यर्थः। तथा च श्वेत-

---

[1] यथामुद्रितं पाठ एकस्मिन् ह० लि० पु० वर्तते।
'भोगेनोपशान्तेर्न पुनः' इति अन्यस्मिन् ह० लि० पु० पाठः सम्यग् भाति।

[2] 'फलादीनाम्' इति उ० ह० लि० पु० पाठः।

केतोर्यमं प्रति वचनं कठवल्ल्याम् "ईशिष्यामो यावदीशिष्यसि त्वमि" ति। ब्रह्मलोकादिषु च ये विष्ण्वाद्युपासकाः प्रकृष्टज्ञाना भवन्ति, तेषां तैः सहैव प्राकृतप्रलये मोक्षो भवति, यथा नारदादीनाम्। "ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदमि" त्यादिवाक्येभ्यः। कृतात्मानः कृतबुद्धयः, ये पुनरकृतबुद्धयस्ते सर्गान्तरे देवादिरूपेण पुनरुद्भवन्ति। न[1] चैवं (नन्वेवं) "मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यत" इत्यादिविष्णुदेवतावचनविरोध इति चेन्न, विष्णुदेवतायाः पारमार्थिकात्मनो ब्रह्मण एवास्मच्छब्देन वचनात्, विष्णोर्विशुद्धसत्त्वस्योपासकानां तल्लोक एव तत्सान्निध्येन ज्ञानोत्पत्तिनियमतो मोक्षनियमसम्भवाच्च। ब्रह्मविष्णुहराश्च परमात्मनोंऽशा एव न साक्षात्परमेश्वर इति प्रतिपादितमीक्षतेर्नाशब्दमित्यत्रेति दिक्।

आधुनिकास्तु निर्गुणब्रह्मविदुषो वर्तमानदेहातिरिक्तं देहान्तरमुत्पद्यते न वेति संशये निर्णयार्थमिदं सूत्रम्। अयमर्थः—आधिकारिकाणामधिकारिणां देवानामुत्पन्नज्ञानानामपि स्वाधिकारमध्ये स्वेच्छया नानादेहरूपेणावस्थितिर्भवत्येव, सनत्कुमारादीनां स्कन्दादिरूपेण पुनर्जन्मश्रवणात्। सनत्कुमारं प्रकृत्य तं स्कन्द इत्याचक्षत इति श्रुतिरित्याहुः। तन्न—विचारस्य काकदन्तान्वेषणतुल्यत्वात्, "अनारब्धकार्ये एव तु पूर्वे तदवधेरि" त्यागाम्यध्यायस्थसूत्रेणैवैतदाशङ्काया निराकरणेन पौनरुक्त्यापत्तेश्च। ज्ञानिनां विविधदेहोत्पत्तेरपि प्रारब्धकर्मफलत्वात्।

किं चावस्थितिशब्दो न देहोत्पत्तिवाचको न वा सर्वेऽधिकारिणो ज्ञानिनो, नाप्ययं विचार आधुनिकानामत्रोचितः, तैर्गुणोपसंहारपरतयैव पूर्वोत्तरसकलसूत्राणां व्याख्याततयाऽस्य विचारस्याप्रवृत्तविषयत्वात् इति। तस्मादितरसूत्रव्याख्यानवदेतत् सूत्रव्याख्यानमपि तेषामुपेक्षणीयम्।

ब्रह्मात्मत्वविद्यायाः साक्षान्मोक्षरूपं फलं "साम्पराये तर्तव्याभावात्तथा ह्यन्य" इत्यनेनोक्तम्। इदानीं तटस्थनिर्गुणब्रह्मविद्यायाः साक्षान्मोक्षाहेतोः फलमाह—

**अक्षरधियां त्ववबोधः[2] (त्ववरोधः) सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥३३॥**

अक्षरं कूटस्थनित्यं निर्गुणं चिन्मात्रं ब्रह्म "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वम्" इति "अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमि" ति च श्रुतेः, "अक्षरं परमं ब्रह्मे"त्यादिस्मृतेश्च। प्रधाने च परिणामिनित्ये धर्मरूपेण क्षयिण्यक्षरशब्दस्यापेक्षिकत्वात् तस्याक्षरस्य धीर्नेति नेतीत्यस्थूलमनण्वित्यादितत्त्वज्ञानरूपा, तद्वतां पुंसां फलमवबोधः स्वज्ञानमहमर्थतत्त्वज्ञानमिति यावत्। कुतः पुनर्ब्रह्मस्वरूपावधारणेनाहंपदार्थतत्त्वज्ञानं स्यात्? तत्राह—सामान्यतद्भावाभ्या-

[1] यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते।

[2] 'अवबोध' इति पाठ उ० ह० लि० पु० वर्तते।

मिति। आत्मानौ हि व्यावहारिकपारमार्थिकभेदेन जीवेश्वरौ भवतस्तत्र व्यावहारिकात्मावबोधो ब्रह्मसमानत्वात् पारमार्थिकात्मतत्त्वावबोधकस्तु तद्भावात्=पारमार्थिकात्मनोऽक्षरस्वरूपत्वादित्यर्थः। तदेतदात्मद्वयतत्त्वज्ञानं जीवस्य साक्षान्मोक्षहेतुस्तटस्थविविक्तब्रह्मज्ञानस्य दृष्टं फलमुक्तम्, अदृष्टन्तु प्रतिबन्धनिवृत्तिरूपं पश्चाद् वक्ष्यति। सामान्यतद्भावयोर्दृष्टान्तमाह–औपसदवदिति। उपसत्–परिषत् महाराजामात्यवर्गस्य यथा महाराजेन सह सामान्यं तुल्यं वेषादिकं महाराजात्मत्वं च करचरणादिवत् तत्करणत्वात् तथैवेत्यर्थः।

ननु जीवानां ब्रह्मसाम्यतदात्मकत्वयोः किं प्रमाणम्? तत्राह–तदुक्तमिति=उदाहरिष्यमाणश्रुतिभिरित्यर्थः। अवरोध इति पाठे तु अक्षरधिया[1] (यां) सामान्यतद्भावाभ्यां फलाभ्यामवरोधः सम्बन्ध इत्यर्थः। सामान्यतद्भावाभ्यां च तयोर्ज्ञानमुपलक्ष्यत इति। शेषं समानम्॥

कुत्रोक्तं तदाह सूत्राभ्याम्—

इयदामननात् ॥३४॥

इयत्ता एतावत्ता अक्षरस्वरूपतेति यावत्। "यथा सुदीप्तात् पावकाद् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः" इत्यादिश्रुतौ ब्रह्मसमानरूपस्य जीवस्यामननात् सामान्यमुक्तमित्यर्थः॥

अन्तरा भूतग्रामवत् स्वात्मनः ॥३५॥

आमननादित्यनुवर्तते। पृथिव्यादिभूतग्रामस्येव स्वात्मनोऽप्यन्तरा तद्ब्रह्मण आमननाज्जीवस्य ब्रह्मात्मकत्वमुक्तम्, देहस्येव जीवात्मकत्वमित्यर्थः। अन्तराऽऽमननं च यथा–"यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यस्य पृथिवी शरीरम्, य आत्मनि तिष्ठन्नात्मनोऽन्तरो यस्यात्मा शरीरम्" इत्यादि। नन्वेष त आत्मेत्यादिकं ब्रह्मात्मत्वामननं स्पष्टं परित्यज्य कथमन्तःस्थत्वब्रह्मात्मत्वे लिङ्गमुपन्यस्तं सूत्रकारेणेति चेत्–आत्मशब्दस्य मृदात्मको घट इतिवत् कारणविधया केवलस्वरूपात्मकत्वेनाप्युपपत्त्या देहदेहिवदात्मात्मीयभावासिद्धेरिति॥

ये तु अन्तर्यामित्वं विनापि जीवानामात्मा ब्रह्म घटाद्याकाशानामिव महाकाशमिति मन्यन्त, तन्मतमाशङ्क्यापाकरोति शास्त्रार्थपरिशुद्धये—

अन्यथाभेदानुपपत्तेरिति चेन्न उपदेशान्तरवत् ॥३६॥

अन्यथा अन्तःस्थत्वं विनाऽपि तद्भावो ब्रह्मात्मत्वं जीवानामस्ति घटाकाशमहाकाशयोरिवाखण्डत्वेनेति यावत्, कुतः? "स एव मायापरिमोहितात्मा शरीरमास्थाय करोति सर्वमि"त्याद्यभेदवाक्यान्यथाऽनुपपत्तेः। 'एष त आत्मे'त्यादिवाक्यानां च स्वरूपाभेदेऽप्यौपाधिकभेदेन युष्मच्छब्दस्य देहपरत्वेन वाप्युपपत्तेः। तथा चोभयथैव

[1] 'यां' इति पाठः उ० ह० लि० पु० वर्तते।

जीवानां ब्रह्मात्मत्वमिति चेन्न—उपदेशान्तरवत्। यतः पृथिव्यादिभूतानां ब्रह्मात्मत्वोपदेशवदेव जीवानामपि ब्रह्मात्मत्वोपदेश उचितः। सह पाठात्, पृथिव्यादीनां च नाहं वउतया[1] ( स्वरूपतया ) आत्मा ब्रह्म किं त्वन्तःस्थत्वेनेति जीवेष्वपि तथोचितम्। अन्यथाऽर्धजरतीयन्यायापत्तेरिति तत्राप्ययमेव सिद्धान्त उपदेशान्तरवदिति। यथा "ब्रह्मैवेदं सर्वम् आत्मैवेदं सर्वम्" इत्यादयो जडसाधारण्येन जीवेषु ब्रह्माभेदोपदेशाः शक्तिशक्तिमदाद्यभेदपरतयैव व्याख्येयाः। एकवाक्यतया तत्त्वात् तदेकवाक्यतया तथैव "स एवे"त्याद्यभेदोपदेशा अपि शक्तिशक्तिमदाद्यभेदपरा एव युज्यन्ते, नाखण्डतापराः। संभवत्येकवाक्यत्वे वाक्यभेदानौचित्यादित्यर्थः। अन्यथा जडवर्गेणापि ब्रह्मणोऽखण्डतापत्तिश्च, अभेदश्रुतिसाम्यात्। भेदश्रुतिविकारित्वाभ्यां नैवमिति चेत्, तुल्यं जीवैः सह ब्रह्मणोऽखण्डत्वेऽपि भेदश्रुतिदुःखभोगापत्त्या बाधकत्वमिति।

"तत्त्वमस्यादि" वाक्यानि च नाभेदपराणि किन्तु ब्रह्मात्मत्वपराण्येव, भो ब्राह्मण! "चेतनस्त्वमसि न देहादिरिति वाक्यवदिति पञ्चसूत्र्यां प्रतिपादितमिति। यदि चाभेदानुपपत्तिरिति पाठः सूत्रे स्यात् तदापि हेतु हेतुमद्भावेन वाक्यद्वयं कृत्वा वार्थो व्याख्येयः, धर्मं चर नरकं गमिष्यसीति वाक्यद्वयवदिति। जीवब्रह्मात्यन्ताभेदस्य निराकृतत्वादेवाखण्डैकात्म्यमपि पूर्वपादे निराकृतं तथापि प्रकारभेदेन पूर्वानुक्तहेतुप्रदर्शनेन च पुनर्वचनं शिष्यबुद्धिवैशद्यायेति मन्तव्यम्" ॥

बाधकमप्याह—

**व्यतिहारो विंशिषन्ति हीतरवत् ॥३७॥**

नाखण्डतया जीवस्य ब्रह्मात्मत्वं, यतो व्यतिहारो परस्परव्यत्ययेनाभेदोपदेशोऽस्ति। यथा ऐतरेयके—"तद् योऽहं सोऽसौ योऽसौ सोऽहम्" इति, जाबाले च—"त्वं वा अहमस्मि भगवो देवतेऽहं वै त्वमसि" इति, एवं श्रुत्यन्तरेष्वपि। स चायं व्यतिहारोऽत्यन्ताभेदे सत्ययुक्तः स्यात्। कुतः? हि यस्मात् इतरवदस्तु इतरेण श्रुतयः सर्वाः विशिंषन्ति। यथा—"यो वै प्राणः सा प्रज्ञा स प्राणः सह ह्येतावस्मिन् शरीरे वसतः सहोत्क्रामतः" इति, तथा "अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथः" इति च तद्दृष्टान्तः। न च जीवब्रह्मव्यतिहारवाक्यान्यपीतरवदेवेतरेण विशिंषन्ति इति निर्णीयत इत्यर्थः। व्यतिहारस्य च प्रयोजनं जीवे ब्रह्मसाम्यप्रतिपादनद्वारा ब्रह्मोपासनं जीवस्यासंसारित्वप्रतिपादनं चेति।

यत्तु व्यतिहारवैयर्थ्यनिरासायात्यन्तमभेदो व्यतिहारस्यार्थ इति तन्न, अन्योन्याभावस्याभावे अत्यन्तानत्यन्तत्वविभागासंभवात्। अस्मदभिप्रेते वैधर्म्यलक्षणभेदाभावे तत्संभवात्। ननु व्यतिहारवाक्यस्य साम्यपरत्वेन लक्षणा भवतां स्यादिति चेन्न, अखण्डतावादिनामपि भेदघटितसाम्यबोधकश्रुतिषु अखण्डलक्षणायाः समानत्वात्। यथा—"निरञ्जनः परमं साम्यमुपैति, यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव

---

[1] यथामुद्रितं पाठ ड० ह० लि० पु० वर्तते।

भवति एवं मुनेर्विजानत आत्मा भवति गौतमे" त्यादिषु। न च साम्यवाक्येषु नास्माकं लक्षणास्ति सादृश्यलक्षणे भेदमात्रपरित्यागेन तद्गतभूयोधर्मवत्त्वरूपविशेष्यांशवचनादिति वाच्यम्, अस्माकमप्येवं सति व्यतिहाराद्यभेदवाक्येषु विशेष्याभेदं परित्यज्य विशेषणाभेदवचनेन लक्षणापरिहारसंभवादित्यादि समानम्।

वस्तुतस्तु व्यतिहारवाक्येऽस्माकं लक्षणैव नास्ति, अवैधर्म्यस्याप्यभेदाख्यसंसर्गरूपत्वात्। किं वा[1]ऽ(चा)खण्डताप्रतिपादनेऽप्यवच्छेदभेदेन जीवस्य संसारधीसंभवात् निष्फलमेवाखण्डताप्रतिपादनं स्यादतो व्यतिहाराद्यात्मैक्यवाक्यानां जीवब्रह्मैकरूपतायामवश्यं तात्पर्यं परैरपि वक्तव्यं, तथा चावश्यकत्वात् साम्यश्रुत्यैकवाक्यत्वाच्च ऐकरूप्याख्यं साम्यमेव वाक्यार्थो युक्तः, यत्परः शब्दः स शब्दार्थ इति न्यायात्। किमर्थं पुनरखण्डतामर्थं परिकल्प्य तद्द्वारैकरूप्यपरत्वं कल्पनीयं शिरोवेष्टनेनाङ्गुल्या नासिकाप्रवेश[2] (स्पर्श) वदित्यादिकं पञ्चसूत्र्यां प्रतिपादितम्॥

इतश्चाखण्डात्मैक्यं न व्यतिहाराद्यभेदवाक्यार्थ इत्याह—

### सैव हि सत्यादयः॥३८॥

सैवेति तच्छब्देन पूर्वसूत्रस्था अनुपपत्तिः परामृश्यते। अत्यन्ताभेदे सैव अनुपपत्तिरेव। कुतः? हि यस्मात् सत्यादयो जीवविलक्षणधर्माः ब्रह्मणि सन्ति सत्यकामसत्यसंकल्पापहतपाप्मत्वाजरामरत्वादयस्तच्छ्रुत्युक्ता इत्यर्थः। न हि वैधर्म्ये सत्यखण्डत्वं संभवतीति॥

ननु सत्यकामत्वादीनामुपाधिधर्मत्वान्न वैधर्म्यमित्याशङ्क्याह—

### कामादितरत्र तत्र चायतनादिभ्यः॥३९॥

कामादिकमितरत्र उपाधौ गुणरूपेण श्रुतिष्वितीति प्रागेव साधितम्। आयतनादिश्रुतिभ्यस्तु तत्र च तत्रापि ब्रह्मण्यपि कामादिकं तिष्ठति सादृश्यत्वेन स्वत्वेन चेति शेषः। अन्यथा अस्थूलत्वादिना निर्गुणं ब्रह्म प्रकृत्य "तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृ, एतस्मिन्नु खल्वक्षरेण गार्ग्याकाश ओतश्च प्रोतश्च, एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादिना तत्राकाशादिसकलप्रपञ्चायतनत्वोपदेशानुपपत्तेरित्यर्थः। आदिशब्देन च "कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्चे" त्यादिश्रुत्युक्तानां कर्माध्यक्षत्वादीनामनुपपत्तिर्विवक्षितेति। तथा च साक्ष्यत्वस्वत्वाभ्यां स्वोपाधिकामादयः सर्वे ब्रह्मणि सन्ति, जीवे तु ताभ्यामपि सत्यादयो न सन्तीति वैधर्म्यान्नाखण्डैकात्म्यमिति भावः। अस्माभिस्तु समवायेन वैधर्म्यमेव व्यतिहारवाक्येन निराक्रियत इति।

न चैवं घटाकाशमहाकाशयोरपि औपाधिकमालिन्यामालिन्यरूपाद् वैधर्म्याद-

---

[1] 'वा' इत्येकस्मिन् 'चा' इत्यन्यस्मिन् ह० लि० पु० पाठः।

[2] 'प्रवेश' इति उ० ह० लि० पु० पाठः।

त्यन्ताभेदो न स्यादिति वाच्यम्, तत्रावच्छेदभेदेनैकत्राकाशे विद्वद्भिरुभयसामानाधिकरण्यानुभवाद् वैधर्म्यत्वासिद्धेः। प्रकृते तु "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीती" त्यादिश्रुतिभ्य एव जीवब्रह्मधर्मयोर्वैधर्म्यरूपतासिद्धेः। न च श्रुतयो लोकभेदभ्रमानुवादिका इति वाच्यम्, स्वपरत्वे संभवत्यपि ह्यनुवादकल्पने लोकसिद्धांशांश्यात्मैक्यभ्रमानुवादपरत्वमभेदवाक्यानां किमित्युपेक्ष्यत इति।

नन्वात्मनानात्वाभेदवाक्ययोरेकतरस्मिन्ननुवादकत्वे किं नियामकमिति चेत्, बन्धमोक्षादिव्यवस्थाश्रुत्यनुपपत्तिरेवाखण्डैकात्म्यश्रुतीनामनुवादकत्वे नियामिका। प्रामाणिकत्वेन चात्मनानात्वगौरवस्यैवादर्तव्यत्वाल्लाघवतर्कोऽप्रयोजक इति। वस्तुतस्तु ऐकात्म्यवाक्यानि परमात्मपरतया व्याख्येयानीति न तेषामप्यनुवादकत्वमित्यादिक पञ्चसूत्र्यां द्रष्टव्यम्॥

नन्वात्मनानात्वं कथमुच्यते? यतो "नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञातैष त आत्मा अन्तर्याम्यमृतोऽतोऽन्यदार्तम्" इत्यादिश्रुतिभिः पारमार्थिकात्मपराभिरन्तर्याम्यतिरिक्तचेतनाभावोऽवधार्यत इत्याशङ्कां निराकरोति—

## आदरादलोपः॥४०॥

"नान्योऽतोऽस्ति द्रष्टे" त्यादिश्रुतिभिरीश्वरादरस्यैव करणाच्चेतनान्तरस्यालोपोऽप्रतिषेध इत्यर्थः। आदरो भक्तिः, स चोपाधिनावधारणम्। ननु कथमादरोत्पादनम्? उच्यते, एतादृशं तदक्षरमन्तर्यामि यतोऽतिरिक्ता जीवादयः सर्वे अन्धा एव प्रलये, जीवानामपि प्रकृत्यादिवच्चैतन्यफलोपधानाभावात्। ईश्वरदत्तस्य सृष्टिकालीनस्य चैतन्यफलोपधानस्यापि कादाचित्कत्वेन वाचारम्भणमात्रत्वात्। किं च जीवदर्शनश्रवणमननविज्ञानानामप्यन्तर्याम्यायत्ततया अन्तर्यामिण एव तानि भवन्ति तत्स्वामिकत्वात् तत्कर्तृकत्वाद् येन तु करणस्थानीयस्य जीवस्येति महिमोत्कीर्तनादिति॥

कथं पुनश्चेतनान्तरप्रतिषेधार्थतैव न भवत्युक्तवाक्यस्येत्याशङ्कायामाह—

## उपस्थितेऽतस्तद्वचनात्॥४१॥

पूर्ववाक्यादुपस्थितेऽपि ब्रह्मणि सति अतो ब्रह्मणः सकाशात् द्रष्ट्रन्तरलेप (लोप) वचनादादरार्थकता लभ्यत इत्यर्थः। अयं भावः—यदि सर्वथैव द्रष्ट्रन्तरप्रतिषेधकमिदं वाक्यं स्यात् तदा "नान्योऽतोऽस्ति द्रष्टे" त्यत्रातःशब्दो व्यर्थः स्यात्। "अदृष्टो द्रष्टे" त्यादिपूर्ववाक्यात् प्रतियोगिन उपस्थित्यर्थं शब्दान्तराकाङ्क्षाया अभावात् "नान्योऽस्ति द्रष्टे" त्येवोच्येत। आदरार्थकत्वे तु नातःशब्दो व्यर्थो भवति, 'अतोऽधिको द्रष्टा नास्ती' त्याधिक्यावधिप्रदर्शकत्वेनातःशब्दसाफल्यात्। यद्यपि अधिक इति शब्दो नास्ति तथापि अतःशब्दसमभिव्याहारमर्यादाबलान् निरूढलक्षणादिनाधिक इति लभ्यते। "नान्योऽतोऽधार्मिकः नान्यो (ऽतो)ऽस्ति पापिष्ठ इत्यादिषु तत्प्रतीतेः। न हि क्षुद्रधार्मिकपापिष्ठावप्यत्र प्रतिषिध्येते प्रत्यक्षबाधात्, तथाऽनवद्यो-

धाच्चेति। तस्मादन्तर्यामिणोऽधिको द्रष्टा नास्तीति श्रुत्या तस्यैव पारमार्थिकात्मत्व-मित्येव दर्शितम्, ननु[1] (न तु) व्यावहारिकमप्यात्मान्तरं निषिद्धम्। अतो भक्तिश्रद्धो-त्पादनार्थ एव चेतनान्तरप्रतिषेध इति सिद्धम्। अन्यथा "नित्यो नित्यानां चेतनश्चे-तनानामि" त्यदिवाक्यानां यथाश्रुतार्थकत्वापत्तेश्चेति। एतेन "नान्योऽस्ति द्रष्टा श्रोते" त्यादिमाध्यन्दिने अतःशब्दाभावेऽपि काण्वेकवाक्यतया नान्यः पारमार्थिक आत्मास्तीत्येवार्थः, व्यावहारिकपारमार्किकभेदेन सत्ताद्वैविध्यात् आत्मनो द्वैविध्य-स्यापि श्रुतिस्मृत्यभिप्रेतत्वादिति।

प्रसङ्गागत आत्मैक्यविचारः पर्याप्तः, इदानीं प्रकृतां विद्यामेव पुनर्विचारयति—

**तन्निर्धारणानियमस्तद्दृष्टेः पृथग् ह्यप्रतिबन्धः फलम् ॥४२॥**

तस्य ब्रह्मणो निर्णयस्य मोक्षयत्नहेतुत्वे नियमो नास्ति, कुतः ? तद्दृष्टेः, ब्रह्म-ज्ञानं विना केवलजीवात्मत्वज्ञानादपि मोक्षस्य श्रुतिस्मृतिन्यायसिद्धत्वात्। यथा जीवप्रकरणे मैत्रेयीब्राह्मणे "एतावदरे खल्वमृतत्वमि" ति श्रुतिः। अमृतत्वममृतत्व-साधनमित्यर्थः। "येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान् वेद तदेव मे ब्रूही" त्युपक्रमात्। स्मृतिश्च सांख्ययोगाद्या। न्यायश्च श्रुतावेवोक्तः—"आत्मानं चेद् विजानीयादयमस्मीति पूरुषः किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत्॥ योऽकामो न तस्य प्राणा उत्क्रामन्ती"त्यादिः। न्यायाचार्यैरप्ययमेव न्यायो "दुःखज-न्मे" त्यादिसूत्रेण "वीतरागजन्मादर्शनादि" ति सूत्रेण च निबद्ध इति। अतएव पतञ्जलिना विकल्पेनैव ब्रह्मज्ञानस्य मोक्षहेतुत्वं प्रोक्तम् "ईश्वरप्रणिधानाद्वा" इति सूत्रेण, व्यासाचार्यैरपि तत्र तथैव व्याख्यातमिति।

नन्वेवं जीवतत्त्वज्ञानादेव मोक्षसंभवे ब्रह्मज्ञानानर्थक्यं स्यात्। न च वैक-ल्पिकत्वाज्जीवज्ञानाभावेऽपि मोक्षो ब्रह्मज्ञानस्य फलं स्यादिति वाच्यम्, ब्रह्मतत्त्वज्ञाने ब्रह्मशक्तिजीवतत्त्वज्ञानस्याप्यावश्यकत्वात्। "ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामि" ति श्रुतेः, "यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यत" इत्यादिस्मृतिभ्यो युक्तिभ्यश्च। न हि जीवतत्त्वज्ञानं विना तस्माद् विवेकेन ब्रह्मतत्त्वज्ञानं संभवति। शास्त्रे च प्रकृ-तिपुरुषादिविवेकेन च ब्रह्मतत्त्वज्ञानं मोक्षहेतुतया वेद्यत इति। तामिमाशङ्कां परि-हर्तुमाह-पृथग् ह्यप्रतिबन्धः फलमिति न ब्रह्मज्ञानवैयर्थ्यम्। हि यस्माद् ब्रह्मनिर्धार-णस्य पृथग्-जीवतत्त्वज्ञानाद् व्यावृत्तं फलमस्ति मोक्षप्रतिबन्धनिवृत्तिरूपमित्यर्थः। तथा च पातञ्जलसूत्रम् 'ततः प्रत्यक्चेतनाधिगमोऽन्तरायाभावश्चे' ति।

एवं च सति मुख्यकल्पानुकल्परूपेणैव ब्रह्मात्मज्ञानजीवतत्त्वज्ञानयोर्मोक्षहेतुत्वम्। विकल्पोऽप्यत्र न शास्त्रीयो येनोभयोरशास्त्रार्थत्वं स्यात्, किन्तु शक्ताशक्तभेदेन व्यव-स्थितविकल्प एव। अत उभयोरनुष्ठानेऽपि न क्षतिः। "नान्यः पन्था विद्यतेऽयनाये" त्यादिश्रुतयश्च मुख्यकल्पपराः। यथाहि अमुकदेशगमनेऽयमेव पन्था नान्य इति निरुपद्रवशीघ्रादिरूपैः प्रकृष्टः पन्थाः स्तूयते मुख्यत्वाभिप्रायेण, न तु सोपद्रववक्रादि-

[1] 'ननु' इत्येकस्मिन् 'न तु' इत्यन्यस्मिन् ह० लि पु० पाठः।

वर्त्मान्तरं प्रतिषिद्ध्यते। तथैव निष्प्रतिबन्धाद्यशेषगुणैर्मोक्षवर्त्मतया स्तूयते ब्रह्मज्ञानं मुख्यत्वाभिप्रायेण, न तु सप्रतिबन्धादिरूपतया मन्दो मोक्षपन्थाः केवलजीवतत्त्वज्ञानरूपः प्रतिषिध्यत इति ॥

एतदेव सूत्रकारोऽप्याह—

**प्रदानवदेव तदुक्तम् ॥४३॥**

शास्त्रेषु मोक्षसाधनतया तद् ब्रह्मनिर्धारणं यदुक्तं तत् प्रदानवदेव मन्तव्यम्। यथा प्रकृष्टं दानं स्वर्णशृङ्गादियुक्तगोदानं मुख्यः कल्पः, केवलगोदानं चाधमः कल्पः। एवमेव ब्रह्मज्ञानं मुख्यकल्पः, केवलजीवतत्त्वज्ञानं चाधमः कल्प इत्यर्थः। ब्रह्मज्ञाने जीवज्ञानस्याप्यन्तर्भावाद् दृष्टान्तसाम्यम् ॥

मुख्यकल्पानुकल्पभावे केवलप्रतिबन्धनिवृत्तिहेतुः पूर्वमुक्तः, इदानीं मुख्यकल्पानुकल्पभावे च तान्येव लिङ्गानि सन्तीत्याह—

**लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥४४॥**

प्रदानवदेव तद्-उक्तं, हि-यस्मात्, तदपि-तदापि, अनियमेऽपि तद् ब्रह्मज्ञानं बलीयः श्रेष्ठं मुख्यं मोक्षसाधनम्, कुतः? लिङ्गभूयस्त्वात्-ब्रह्मज्ञानश्रेष्ठत्वानुभावकश्रौतहेतुबाहुल्यात्। "तस्य तावदेव चिरं यावन्न विमोक्ष्ये, तस्य ह न देवाश्च नाभूत्या ईषते[1] (ईशते), भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इत्यादिश्रुत्युक्तफलोत्कर्षपरम्परा जीवज्ञानापेक्षया ब्रह्मात्मज्ञानस्य मुख्यकल्पत्वे लिङ्गानीति। स्मार्तानि च लिङ्गानि—

> कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति।
> सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज॥
> योगिनामपि सर्वेषां मद्गतेनान्तरात्मना।
> श्रद्धावान् भजते यो मां स मे युक्ततमो मतः॥
> सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः।
> सर्वथा वर्तमानोऽपि स योगी मयि वर्तते॥

इत्यादिवाक्योत्कर्षजातानि ब्रह्मज्ञानस्य मुख्यकल्पत्वानुमापकानि॥

नन्वेवं ब्रह्मजीवज्ञानयोर्विकल्पेन मोक्षहेतुत्ववत् सगुणनिर्गुणज्ञानयोरपि विकल्पेनैव मोक्षहेतुत्वमस्त्वित्याशङ्कते—

**पूर्वविकल्पप्रकरणात् स्यात् क्रियामानसवत् ॥४५॥**

नन्वेवं पूर्वयोः पूर्वविचारितयोराध्याननिर्गुणब्रह्मज्ञानयोरप्येकस्मिन् मोक्षे हेतुतया[2] विकल्पः स्यात्, कुतः? प्रकरणात्। एकस्मिन्नेव मोक्षप्रकरणे द्वयोरेव पाठात्,

---

[1] 'ईषते' इत्येकस्मिन् 'ईषंते' इत्यन्यस्मिन् ह० लि० पु० पाठः।

[2] "मोक्षहेतुतया" इति उ० ह० लि० पु० मु० पु० च पाठः।

क्रियामानसवत् । यथा बाह्यक्रियामानसक्रिययोरेकप्रकरणस्थयोरेकस्मिन्नेव स्वर्गादि-फले विकल्पस्तद्वदित्यर्थः । बाह्यक्रियया सह मानसं च कर्म मनुनैकप्रकरणे पठितं यथा द्रव्यमयपञ्चयज्ञविधानानन्तरम्—

ज्ञानेनैवापरे विप्रा यजन्त्येतैर्मखैः सदा ।
ज्ञानमूलां क्रियामेषां पश्यन्तो ज्ञानचक्षुषेति ॥

ध्यानोपहारोऽत्र ज्ञानशब्दार्थः ।

हृदि सङ्कल्प्य यद्रूपं समर्चन्ति दिवौकसः ।
ध्यानपुष्पादिभिर्नाथ सोऽर्च्यते वा कथं मया ॥
बाह्यं बहिः क्रियाभिश्च यत्तद्विहितसाधनैः ।
आभ्यन्तरन्तु मनसा विध्यनुष्ठानमात्मनि ॥

इति पराशरवशिष्ठवाक्यादिभ्य इत्यतस्तयोर्विकल्प इति भावः ॥

## अतिदेशाच्च ॥४६॥

"यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते" इत्यादिवाक्यैः सांख्यशब्दोक्त-तत्त्वज्ञानफलस्य मोक्षस्य योगे सगुणादिसाधारणेऽतिदेशाच्च विकल्पः स्यादित्यर्थः । तथा—

एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥

इत्यर्जुनप्रश्नस्य प्रत्युत्तरे भगवता निर्गुणब्रह्मविद्याफलं मोक्षः सगुणविद्या यैर[1]पि(धि)-गम्यते तेषामुपदिष्टोऽस्ति ।

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥
तेषामहं समुद्धर्ता मृत्युसंसारसागरात् । इति ।

अतोऽपि विकल्पो युक्तः ॥

सिद्धान्तमाह—

## विद्यैव तु निर्धारणात् ॥४७॥

विद्या—तत्त्वज्ञानमेव मोक्षस्तु[2] (मोक्षस्य तु) हेतुः, न तु भ्रमरूपा सगुणोपासना । कुतः ? निर्धारणात् "तमेव विदित्वाऽतिमृत्युमेती" ति निर्धारणात् । अत्र ह्येवकारेण मोक्षहेतुज्ञानकर्मणि अनात्मसम्भेदो निषिध्यत इति । सगुणोपासनायां चोपाधितद्धर्मसंभेदोऽस्तीत्यर्थः ॥

---

[1] 'यैरपि' इति उ० ह० लि० पु० पाठः ।

[2] यथामुद्रितम् उ० ह० लि० पु० पाठः ।

## दर्शनाच्च ॥४८॥

न केवलमवधारणादेवाध्यानरूपमिथ्याज्ञानस्य मोक्षाहेतुत्वम्, अपि तु दर्शनात् साक्षात् श्रुतेरपीत्यर्थः। साक्षात् श्रुतिश्च यथा—"अनृतेनात्मानमन्तर्ध्याय परशुं तप्तं प्रतिगृह्णाति स दह्यते अथ हन्यते, सत्येनात्मानमन्तर्ध्याय परशुं तप्तं प्रतिगृह्णाति स न दह्यते अथ मुच्यते स पन्था न दह्यते" इत्यादिमिथ्याभिसन्धस्य मोक्षं प्रतिषेधति। तथा "सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग् ज्ञानेन ब्रह्मचर्येण नित्यमि"ति, तथा "दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाते"त्यादि च। दूरं विभिन्नफलके, विषूची सर्वजीवस्थापिके, ज्ञाता प्रसिद्धेत्यर्थः। विद्याशब्दश्चोपासनायां गौणः मोक्षशब्दवद् ब्रह्मलोक इति बोध्यम् ॥

ननूक्तेन प्रकरणैक्यहेतुना त्वदुक्तश्रुतिलिङ्गे बाध्येतामिति तत्राह—

## श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥४९॥

प्रकरणापेक्षया श्रुतिलिङ्गयोर्बलवत्त्वात् प्रकरणेन तयोर्बाधनं विषयापहारो न संभवतीत्यर्थः। "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" इति सूत्रेणेति ॥

न केवलं निर्धारणमेव सगुणनिर्गुणविद्ययोः पृथक्फलत्वे लिङ्गमस्ति, अपि तु अनुबन्धादिभेदोऽपीत्याह—

## अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम् ॥५०॥

अनुबन्धः फलार्थमारम्भः। स च सगुणविद्यायाम् उत्तराध्यायवक्ष्यमाणः मृत्युपक्रमो मूर्धन्यनाडीभेदादिक्रमेणार्चिरादि[१] यथा गतिः। आदिशब्देन च ब्रह्मलोकस्थविभूत्यादयो ग्राह्याः। निर्गुणविद्यायां चानुबन्धो लयमात्ररूपः "न तस्य प्राणा उत्क्रामन्ति अत्रैव समवलीयन्त" इत्यादिश्रुत्युक्तः। आदिशब्देन च "अशरीरं वा व सन्तं प्रियाप्रिये न स्पृशत" इत्यादिश्रुत्युक्तफलादयो ग्राह्याः। एतेभ्योऽन्योन्यव्यावृत्तेभ्योऽनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववत् प्राणाऽग्न्यादिविद्यापृथक्त्ववद्, दृष्टश्चावधारितश्च सगुणनिर्गुणविद्ययोः पृथग्भाव इति वाक्यशेषः। पृथक् च भिन्नफलकत्वं तदुक्तमिति। "संभृति द्युव्याप्त्यपि चातः, सांपराये तर्तव्याभावात्तथा ह्यन्य" इति सूत्राभ्यामन्योन्यभिन्नमनुबन्धादिकं सगुणनिर्गुणविद्ययोः संक्षेपादुक्तमित्यर्थः ॥

यदि च सगुणविद्याया अपि परममुक्तिहेतुत्वमिष्यते तथापि न विकल्प इत्याह—

## न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥५१॥

न सामान्यादपि—मोक्षहेतुत्वसाम्याभ्युपगमपक्षेऽपि सगुणनिर्गुणविद्ययोर्विकल्पः, कुतः ? उपलब्धेर्मृत्युवन्न हि लोकापत्तिः। हि यस्मात् उपलब्धेस्तत्त्वज्ञानात्

[१] यथामुद्रितं उ० ह० लि० पु० पाठः।

मृत्युवदेवात्यन्तिकप्रलयरूपं फलं न तु लोकापत्तिः सत्यलोकप्राप्तिरिति। तथा च सगुणविद्यायाः ब्रह्मलोकप्राप्तिपूर्वकमोक्षत्वेन कार्यता निर्गुणविद्यायास्तु मोक्षत्वेनैव कार्यतेति कार्यतावच्छेदकभेदान्न विकल्प इत्यर्थः॥

ननु निर्गुणविद्याप्रकरणेऽपि कषायादौ "तयोदूर्ध्वमायन्नमृतत्वमेती" त्यादिना गतिपूर्वकमुक्तिश्रवणान्न कार्यतावच्छेदकभेद इत्याशङ्कायामाह—

**परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः॥५२॥**

परेण मोक्षादन्येन फलेन शब्दस्य ताद्विध्यं श्रुतिसाम्यमिति योजना। मोक्षातिरिक्तं ब्रह्मलोकाख्यं फलमादायैव फलश्रुत्योः साम्यं न तु मोक्षाख्यं फलमादायेत्यर्थः। ब्रह्मलोकाख्यफले च सगुणनिर्गुणविद्ययोर्विकल्पः स्वीक्रियत एव, मुक्त्याख्यफल एव कार्यतावच्छेदकभेदेन विकल्पप्रतिषेधादिति भावः। तर्हि कथं निर्गुणविद्यायाः सद्योमुक्तिहेतुत्वे तत्प्रकरणेष्वपि प्रायेण गतिरूपानुबन्ध उपपद्यते? तत्राह—भूयस्त्वात्त्वनुबन्ध इति। निर्गुणविद्वांसोऽपि हि कषायाशेषदोषाद् भूयांसोऽर्चिरादिगतिभाजो भवन्ति। अतो निर्गुणविद्यायामपि गतेर्भूयस्त्वात् प्रायिकत्वादेवागतिरूपानुबन्धो निर्गुणप्रकरणेष्वपि समानो गतिरूप इति शेषः। ननु[1] (न तु) गतेरावश्यकत्वमित्यर्थः॥

ये तु मन्यन्ते ब्रह्मलोकगतिपूर्वक एव मोक्षो भवति न तु तं विनेति तन्मतमपाकर्तुमुत्थापयति—

**एक आत्मनः शरीरे भावात्॥५३॥**

अनुबन्ध इत्यनुवर्तते। अस्माभिरनुबन्धो भूयस्त्वेनोपपादितः। एके तु अन्ये तु एवमाहुः—सर्वेषामेव मोक्षभाजामवश्यं गतिरूपोऽनुबन्धो भवति, कुतः? आत्मनः शरीरे भावात् सत्त्वात्, शरीरं विना असत्त्वादिति यावत्। यथा काष्ठं विनाऽग्निर्न तिष्ठति तथैव सूक्ष्मशरीरं विनाऽऽत्मा कदापि न तिष्ठति। तथा च सूक्ष्मदेहस्य पूर्णतयैव स्थूलदेहविनियोगमात्रं मुक्तिः सूक्ष्मदेहपूर्णतां च ब्रह्मलोकप्राप्त्यैव श्रूयते "स वै वाचमेव प्रथमामत्यवहत् सा यदा मृत्युमत्यमुच्यत सोऽग्निरभवत्, सोऽयमग्निः परेण मृत्युमतिक्रान्तो दीप्यत" इत्यादिश्रुतिभिर्ब्रह्मलोकप्राप्त्यैव सर्वेन्द्रियाणां समष्टिरूपेण पूर्णतालाभादिति। तस्मान्मोक्षसामान्येऽनुबन्धनियम इति पूर्वपक्षः॥

सिद्धान्तमाह—

**व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत्॥५४॥**

भवेदेवं यदि पृथिवीघटादीनामिव शरीरात्मनोरव्यतिरेकः स्यात्, न त्वेवम्। अपि तु घटाकाशयोरिव व्यतिरेक एव। कुतः? तद्भावाभावित्वात्। आत्मनित्यत्वस्य सूक्ष्मदेहोत्पत्तेश्च प्रसाधितत्वेनात्मसत्त्वेऽपि शरीरस्यासत्त्वादित्यर्थः। अग्न्यवयवी तु काष्ठ एवोत्पद्यते, सूक्ष्माग्निः पुनः काष्ठं विनापि तिष्ठतीति दृष्टान्तो विषम इति

[1] 'न तु' इति उ० ह० लि० पु० पाठः।

भावः। न तूपलब्धिवदिति। यथा आत्मना सह उपलब्धिनियमेनोपलब्धेरात्मा-व्यतिरेको (ऽव्यतिरेको) ऽग्न्यौष्ण्यवत्, नैवं शरीरस्य, तथा सति शरीरस्य विका-रेणात्मनोऽपि विकारापत्त्या पूर्वापरसाक्षित्वाद्यनुपपत्तिरित्यर्थः। तस्माद् यथा घटं विना आकाशं तिष्ठति जलाहरणादिव्यवहारशून्यं तथैवात्माप्युपाधिं विना मोक्षे तिष्ठ-तीति न मोक्षेऽपीति नियमः। ततश्च मोक्षफले वैषम्यान्न सगुणनिर्गुणविद्ययोर्विकल्प इति सिद्धम्॥

ब्रह्मविद्यागतो विचारः पर्याप्तः, इदानीं ब्रह्मविद्याप्रसङ्गेनैवेतरविद्या अपि विचार्यन्ते सकलवेदान्तविद्यापरिशुद्धये—

अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्॥५५॥

हिरवधारणे। "ॐ इत्येदक्षरमुद्गीथमुपासीत, लोकेषु पञ्चविधं सामोपा-सीत" इत्येवमाद्योपाया[1] (या या) उपासना उद्गीथसाध्यस्य कर्मणो अङ्गेष्ववबद्धाः सम्बद्धाः, ताः स्वशाखास्वेव न प्रत्येतव्याः, किन्तु प्रतिवेदं प्रतिशाखञ्चेत्यर्थः। उद्-गीथसाध्यस्य कर्मणः सकलवेदेष्वविशिष्टत्वादिति भावः। अत्र चाङ्गभूतास्विति सामान्योपन्यास एव यद्यप्युचितः तथापि कर्माङ्गोपासना प्रायशो अङ्गावबद्धैव भव-तीत्याशयेनावबद्धेति न त्वनङ्गव्यावृत्तय इति बोध्यम्। तथा चाङ्गभूतोपासनासा-मान्योपलक्षणमेवाङ्गावबद्धेति वचनमतो न न्यूनता।

अथवा इदं सूत्रमारभ्य पादसमाप्तिपर्यन्तानि सूत्राणि प्रकरणानुरोधेन ब्रह्मविद्या-विशेषपरतयैव व्याख्येयानि। तथा च प्रकृतायां ब्रह्मविद्यायामङ्गेषु कर्मसु अवबद्धा-स्तदङ्गभूता इति यावत्। एवंभूता ब्रह्मविद्या स्वस्वशाखाभ्योऽन्यशाखास्वपि प्रत्ये-तव्या इति सूत्रार्थः। अस्मिन् पक्षे अन्यान्यसूत्राण्येवमेव तदनुसारेण व्याख्येयानि।

मन्त्रादिवद् वाऽविरोधः॥५६॥

वाशब्दोऽप्यर्थे। यथा शाखान्तरोक्तास्तत्तत्कर्मसम्बद्धाः मन्त्रद्रव्यादयः शाखान्तरेष्वनुक्ता अपि तत्तद्धर्मश्रवणात् समुच्चीयन्ते तथा तदुपासना अपीत्यत्र नास्ति विरोध इत्यर्थः॥

नन्वङ्गावबद्धायामेकोपासनायां सत्यां तस्मिन्नेवाङ्गे उपासनान्तरमुपसंहर्तव्यं न वेति संशये सिद्धान्तमाह—

भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति॥५७॥

भूम्न उपासनारूपगुणबहुलस्य ज्यायस्त्वं श्रेष्ठत्वं क्रतुवत्। यथा क्रतुबाहुल्यं श्रेष्ठं फलातिशयात् तद्वदित्यर्थः। तथाहीति। हि यस्मात् तथा दर्शयति श्रुतिः "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इत्यादिः। तथा मायापि भूय इतीत्यर्थः॥

---

[1] 'या या' इति द्विः सर्वनामपाठ ऊ० ह० लि० पु० वर्तते।

इदानीमङ्गावबद्धोपासनानामुपसंहारे विशेषानाह सूत्रजातेन—

नाना शब्दादिभेदात् ॥५८॥

शब्दादिभेदात् पूर्वोक्तात् शब्दप्रकरणसंज्ञाभेदात् क्वचित् क्वचिन्नाना असमुच्चिता अपि उक्तोपासना भवन्ति। यथा बृहदारण्यके अश्वमेधाङ्गस्याश्वस्योपासना, पुरुषसूक्ते च पुरुषमेधाङ्गस्य पुरुषस्योपासना श्रूयते। तयोश्चैकत्रोक्ता उपासना नान्यत्र समुच्चेया, उक्तिभेदात् प्रकरणभेदात् अश्वपुरुषरूपसंज्ञाभेदाच्च। एवमन्यत्रापीत्यर्थः ॥

अङ्गोपासनास्वेव प्रधानफलातिरिक्तफलाभावेन तत्सत्त्वेन च विशेषमाह सूत्रद्वयेन—

विकल्पोऽविशिष्टफलत्वात् ॥५९॥

अविशिष्टफलत्वात् अविशिष्टफलत्वेन प्रधानफलातिरिक्तफलाभावे सति अङ्गावबद्धोपासनानामनेकासां व्रीहियववद् विकल्पो मन्तव्य इत्यर्थः। स्वतन्त्रफलाभावे हि एकस्यामुपासनायामुक्तायामुपासनान्तराकाङ्क्षा न संभवतीति व्रीहियववत् शास्त्रीय एव विकल्प इति भावः। अतश्च तथाविधोपासनयोरशास्त्रार्थत्वमिति बोध्यम्। स्वतन्त्रोपासनास्वेवेच्छाविकल्प एव[1] (वं) पूर्वं व्याख्यात इति मन्तव्यम्। काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात्। काम्यास्त्वङ्गावबद्धोपासनाः कामनानुसारेण समुच्चीयेरन्न वाह्ये (स्वे)च्छाविकल्पतः, कुतः? पूर्वहेत्वभावात् पूर्वोक्तस्य शास्त्रीयविकल्पहेतोरविशिष्टफलत्वस्याभावादित्यर्थः। अकाम्येषु त्वाकाङ्क्षाविरहेणैकोपासनावरुद्धेऽङ्गे उपासनान्तरवचनं शास्त्रीयविकल्पं विना न संभवति। काम्येषु फलान्तरसाधनतयोपासनान्तरवचने निराकाङ्क्षत्वं नास्तीति भावः ॥

अङ्गावबद्धास्वेवोपासनासु परं विशेषमाह —

अङ्गेषु यथाश्रयभावः ॥६०॥

अङ्गेष्विति पुनरुपादानं हेतुगर्भविशेषणतया सार्थकम्। अङ्गावबद्धेषूपासनेषु यश्चाश्रयभावः[2] (यथाश्रयभावः) आश्रयस्य अङ्गःस्वभावानुसारेण (अङ्गस्वभावानुसारेण) भावः सत्ता प्रत्येतव्या। यत्र यजमाने वा क्रताविति वा अङ्गं तत्रैवाङ्गावबद्धस्योपासनस्यापि सत्ता भवेत्, अङ्गाङ्गिनोः समानाश्रयत्वस्यौत्सर्गिकत्वान्न तु उपासनादिनियम इत्यर्थः ॥

शिष्टेश्च ॥६१॥

गुरुपरम्पराभिस्तथानुशासनाच्चेत्यर्थः ॥ अपि च—

समाहारात् ॥६२॥

---

[1] 'विकल्प एव पूर्वं' इत्युभय ह० लि० पु० पाठः।

[2] यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते।

समाहारशब्देनात्र श्रुतिविरोध एव हेतुत्वेनोपन्यस्तः। समाहारश्च बहूनां पिण्डीकृत्य वचनम्। समाहारवाक्यञ्च यथा छान्दोग्यद्वितीये—"अमृतत्वं देवेभ्य आगायानीत्यागायेत्, स्वधां पितृभ्य आशां मनुष्येभ्यस्तृणोदकं पशुभ्यः स्वर्गं लोकं यजमानायान्नमात्मन आगायतीत्येतानि मनसा ध्यायन्नप्रमत्तः स्तुवीते"ति। अत्र बहूनां ध्येयानामेतानीत्यनेन पिण्डीकरणात्। अत्र च वाक्ये स्तुत्यङ्गभूतस्योपासनस्य स्तुति-सामानाधिकरण्यमेव श्रूयते ध्यायंस्तुवीतेति। अतो न यजमाननिष्ठत्वनियमः, यजमा-नायेत्युक्तात् यजमानाद् भेदेनात्मन इत्यनेन ध्यायतः स्तोतुर्निर्देशात्॥

इतश्चाङ्गोपासनायाम[1]ङ्ग(ङ्गि)सामानाधिकरण्यं न तु यजमानादिनिष्ठत्वनियम इत्याह—

## गुणसाधारण्यश्रुतेश्च ॥६३॥

गुणानामङ्गान्तराणां यजमानर्त्विगादिसाधारण्येन श्रवणाद् गुणत्वसाम्येनोपा-सनस्यापि साधारण्यौचित्यमित्यर्थः। इदं वा (चा)ङ्गावबद्धोपासनस्याङ्गिसामानाधि-करण्यमौत्सर्गिकमेव॥

क्वचिच्च वाक्यबलादन्यथापि भवतीत्याह—

## न वा तत्सहभावाश्रुतेः ॥६४॥

क्वचिच्च यथाश्रयभावो न भवत्यपि। अत्र हेतुमुदाहरणं चोत्तरसूत्रेण वक्ष्यति। ननूक्तयुक्तिविरोधात् कथमेवं स्यादिति तत्राह "तत्सहभावाश्रुतेः" आश्रयसहभावे श्रुत्यभावात्। यदि ह्यङ्गोपासनस्याङ्गिसहभावे विधायिका श्रुतिः स्यात्तदा तद्विरोधो न संभवेत्। युक्तिबाधस्तु वक्ष्यमाणश्रुत्या स्वविषये संभवेदेवेत्यर्थः॥

उक्तप्रतिज्ञायां बाधकं निरस्य साधकमाह—

## दर्शनाच्च ॥६५॥

श्रुतेश्चाश्रयसहभावो न भवत्यपि क्वचित्। सा च श्रुतिः "एवं विद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिशस्ती"त्याद्या। अत्र ब्रह्मनिष्ठो विद्याविशेषो यजमान-र्त्विगाश्रितयज्ञाङ्गविषयक उक्त इति।

कुतर्को(र्कायोमला)यो ऽमलाकीर्णं श्रीविद्यापदहाटकम्।
विज्ञानानलसंशुद्धं विदुषामस्तु भूषणम्॥

इति ब्रह्ममीमांसायां विज्ञानयतिकृते विज्ञानामृताख्य ऋजुभाष्ये
तृतीयाध्यायस्य तृतीयः पादः।

—→:←—

[1] 'अङ्गसामानाधिकरण्यं' इति ड० इ० लि० पु० पाठः।

## तृतीयाध्याये चतुर्थः पादः

पूर्वस्मिन् विद्यापादे विद्यायाः पुरुषार्थफलकत्वं यदुक्तं तत्किं स्वातन्त्र्येणापि किं वा कर्मशेषतयैवेति विचारणीयम्। तथा विषयत्वेन विद्यायाः शरीरनिर्वाहकाणि गुणरूपाण्यन्तरङ्गाणि पूर्वपादे विचारितानि। इदानीं विद्याया बाह्यानि साधनान्यप्यवान्तरभेदेनान्तरङ्गबहिरङ्गरूपाणि विचार्य्याणीत्येतदर्थं पादः प्रवर्तते। तत्रादौ विद्यायाः स्वातन्त्र्यं सिद्धान्तयति—

### पुरुषार्थोऽतः शब्दादिति बादरायणः ॥१॥

अत सर्ववेदान्तप्रत्ययमिति पूर्वपादप्रक्रान्तात् वेदान्तविहितप्रत्ययात् स्वातन्त्र्येण पूर्वपादोक्तपुरुषार्थगणो भवति, न पुनः कर्मशेषतयैव तस्य फलश्रुतिरर्थवादः। कुतः? शब्दात्—"ब्रह्मविद् ब्रह्मैव भवति, तरति शोकमात्मविदि" त्यादिश्रुतेरिति बादरायणाचार्यो मन्यत इत्यर्थः॥

विरोधपरिहाराय जैमिनिमतमुत्थापयति—

### शेषत्वात् पुरुषार्थवादो यथा ह्यन्येष्विति जैमिनिः ॥२॥

जैमिनिराचार्य एवं मन्यते—शेषत्वात् कर्मशेषत्वेन विद्यायां पुरुषार्थवचनम्। कर्तृत्वोपास्यत्वाभ्यां ह्यात्मब्रह्मणी कर्माङ्गेऽतस्तद्विषयकं विज्ञानमपि व्रीहिप्रोक्षणादिवदात्मोपास्ययोः संस्काररूपेण कर्माङ्गमेव। क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमायता[1] (परमार्थता) "ब्रह्मण्याधाय कर्माणि, गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः। यज्ञायाचरतः कर्म समग्रं प्रविलीयत" इत्यादिवाक्येभ्यः। अतस्तस्मिन् पुरुषार्थवादः तत्साधनत्ववचनम् अर्थवादमात्रमिति शेषं[2] (शेषः)। यथान्येष्वङ्गेषु "यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोती" त्यादिफलवादस्तद्वदित्यर्थः।

अतश्च कर्मैव विद्याप्रकरणस्थेऽपि पुरुषार्थहेतुः—

### आचारदर्शनात् ॥३॥

"जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेज" इत्यादिना ब्रह्मविदां जनकादीनामपि कर्माचरणदर्शनात् कर्मशेषो ज्ञानमित्यनुमीयत इत्यर्थः॥

नन्वङ्गत्वेन कर्मानुष्ठानेऽप्याचार उपपद्यत इत्यत आह—

### तत् श्रुतेश्च ॥४॥

---

[1] 'परमायता' इत्येकस्मिन् 'परमा मता' इत्यन्यस्मिन् ह० लि० पु० पाठः।

[2] 'शेषं' इति ड०-ह० लि० पु० पाठः।

"यदेव विद्यया करोति तदेव वीर्यवत्तरं भवती" त्यादिना विद्यायाः कर्मशेषत्व-श्रवणाच्चेत्यर्थः ॥

किंच विद्यायाः पुरुषार्थहेतुत्वपक्षेऽपि कर्मणोऽपि तत्पुरुषार्थसाधनत्वमस्त्ये-वेत्याह—

**समन्वारम्भणात् ॥५॥**

विद्यायाः पुरुषार्थवादः समन्वारम्भणवाक्यादुपपादनीयोऽर्थात् कर्मसाहित्येने-त्यर्थः। समन्वारम्भणश्रुतिश्च "तं विद्याकर्मणी समन्वारभेते" (इति)। तथा च समुच्चयोऽपि पाक्षिक इति भावः। "विद्यां चाविद्यां च यस्तद्वेदोभयं सह" त्यादि-श्रुतरपीति बोध्यम् ॥

ननु कर्मसु प्रवर्तमानस्य नात्मज्ञानावसर इत्यर्थात् ज्ञानस्य स्वातन्त्र्यं स्यादि-त्याशङ्कामपाकुर्वन् हेत्वन्तरमाह—

**तद्वतो विधानात् ॥६॥**

"आचार्यकुलाद् वेदमधीत्य यथाविधानं गुरोः कर्माभिसमावृत्त्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयान" इति श्रुत्या समस्तवेदार्थविज्ञानवतोऽपि कर्मविधानाच्च विज्ञानस्य कर्मशेषत्वं समुच्चयो वेति नात्र कुतर्कावकाश इत्यर्थः ॥

**नियमाच्च ॥७॥**

"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः, एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे। एतद् वै जरामर्यं सत्रं यदग्निहोत्रं" जरया ह्येवास्मान्मुच्यते मृत्युना वा" इत्यादिनियमादपि विद्यायाः कर्मशेषत्वं तत्समुच्चयो वेत्यर्थः ॥

इदानीमुभयोराचार्ययोः विषयभेदेनाविरोधं कुर्वन् शास्त्रार्थं परिशोधयति—

**अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥८॥**

जैमिन्युक्ताभ्यां कर्माङ्गकर्मसमुच्चितविद्याभ्यामधिकायाः स्वतन्त्रविद्याया उप-देशोऽधिकोपदेशः। बादरायणस्यैवाबाधकविद्यापदेष्टृत्वात्, तु—पुनस्तन्मतद्वयमेव युक्तं भवति, कुतः ? दर्शनात् श्रुतेः, मतद्वयस्यैव श्रौतत्वादित्यर्थः। एवकारेण जैमिनि-मतस्य स्वतन्त्रविद्यागोचरत्वं नास्तीत्युक्तम्।

अथवा, एवकारोऽयोगव्यवच्छेदे। तथा च अधिकोपदेशात् विरोधाभावेन बादरायणस्यापि तत् जैमिन्युक्तं सम्मतम्, उभयत्रैव श्रुतेरित्यर्थः। तथा च विषय-भेदात्त्वविरोधः। तथाहि, योगारुरुक्षुयुञ्जमान(युञ्जान) योगारूढरूपाधिकारिभेदात् त्रिविधा विद्या भवति, कर्माङ्गभूता कर्मसमुच्चिता प्रधाना चेति। एतासु चाद्ये विद्याभूमी परोक्षरूपत्वेनापरोक्षद्वारा पुरुषार्थहेतू। तृतीया च साक्षादेव तद्धेतुः, सा हि साक्षात्काररूपा। प्रथमं कोमलकण्टकवदुत्पन्ना अभ्यासेन निष्ठां प्राप्यान्यन्नापे-

क्षते। अस्मिंश्च विभागे प्रमाणं वक्ष्यामः। आदौ मतद्वये श्रुतिः प्रदर्श्यते। तत्र कर्मकाण्डविचारप्रवृत्तेन जैमिनिना "यदेव विद्यया करोति, विद्यां चाविद्यां च यस्तद्वेदोभयं सह" इत्यादिश्रुत्यनुसारत आद्यविद्याद्वयस्यैव स्वातन्त्र्येण फलहेतुत्वं निराकृतमुक्तं हेतुभिः।

बादरायणेन च केवलविद्याविचारप्रवृत्तेन "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय, न कर्मणा न प्रजया न धनेन त्यागेनैके अमृतत्वमानशुः, एतद्धै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहुवाञ्चक्रिरे" इत्यादिश्रुत्यनुसारतः उत्तरविद्यायाः स्वातन्त्र्येण फलहेतुत्वमुक्तमिति विषयभेदादविरोध इति।

इदानीमारुरुक्षुत्वाद्यधिकारित्रयभेदेन यथोक्तविद्यात्रैविध्ये प्रमाणमुच्यते, यथा विष्णुपुराणम् —

"कर्मभावात्मिका ह्येका ब्रह्मभावात्मिका परा।
उभयात्मिका तथैवान्या त्रिविधा भावभावना॥
सनन्दनादयो ब्रह्मभावभावनया युताः।
कर्मभावनया चान्ये देवाद्याः स्थावराश्चराः॥
हिरण्यगर्भादिषु च कर्मब्रह्मोभयात्मिका।" इति।

अत्र सनन्दनादीनां योगारूढानां केवला ब्रह्मभावना प्रोक्ता, देवादीनां चारुरुक्षूणां कर्मभावना विद्यासु शेषभूतेति पृथङ्नोक्ता, युञ्जमानादीनां हिरण्यगर्भादीनां च ज्ञानकर्मणोः समसमुच्चय उक्त इति। अत्र चर्याकर्द्धिभावना[1] (च या कर्मर्द्धिभावना) देवादीनां प्रोक्ता, सा द्विविधा बोध्या—

"प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम्।
इह वाऽमुत्र वा काम्यं प्रवृत्तं कर्म कीर्त्यते॥
निष्कामं ज्ञानपूर्वं तु निवृत्तमिति चोच्यते।"

इति मनुवाक्यादिति सर्वशास्त्राविरोधः।

एवमेव योगभूमिभेदेन ज्ञानकर्मानुष्ठानभेदाः। गारुडादावप्युक्तम्—

"आरुरुक्षुयतीनां च कर्मज्ञाने उदाहृते।
आरूढयोगवृक्षाणां ज्ञानत्यागौ परौ मतौ॥" इत्यादिना।

अत्र आरुरुक्षौ युञ्जमानस्य[2] (युञ्जानस्य) प्रवेशः। आरुरुक्षुत्वादित्रयस्य लक्षणं चोच्यते तत्र गीतायाम्—

"यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते।
सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते॥" इति।

---

[1] यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते।

[2] यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते।

विष्णुपुराणे—"योगयुक् प्रथमं योगी युञ्जमानोऽभिधीयते।" इति। आभ्यां वाक्याभ्यां युञ्जमानयोगारूढयोर्लक्षिततत्वादेतदुभयभिन्नो योगार्थी आरुरुक्षुरिति। या चान्या—

"ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः।
युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः॥"

इति गीतायां चतुर्थी युक्ताख्यावस्थोक्ता, सा न साधनावस्था, किन्तु जीवन्मुक्तिरूपतया फलावस्थैवेति विभागः।

अन्ये त्विदं सूत्रमन्यथा व्याचक्षते—अधिकोपदेशात्—कर्मशेषभूतविद्याविषयस्यासंसारिणोऽकर्तुः परमात्मनो वेदान्तेषूपदेशाद्, बादरायणस्यैव मतं सम्यक्, श्रुतिषु तद्दर्शनात्। समस्तप्रपञ्चबाधेन हि परमात्मोपदेशः श्रुतिषु दृश्यते। तादृशी च विद्या कर्मविरोधितया [1]न कर्मशेषो भवितुमर्हतीति, तत्र—समाधिनैव सह कर्मणां विरोधो न तु ज्ञानेन। ज्ञानेन च सह कर्माभिमानस्यैव विरोध इत्युक्तत्वात् पञ्चसूत्र्याम्। समाधिना च विरोधे निर्गुणात्मविषयत्वमप्रयोजकं सगुणब्रह्मप्राणादीनां समाधेरपि कर्मविरोधात्। समाधिना सह विरोधेऽपि च व्युत्थानदशायां कर्म सम्भवत्येव। बोधश्च पारमार्थिकसत्त्वाभावनिश्चयः, स च परिणामित्वज्ञानं लयवत्त्वज्ञानं वा। अतो न तेन सह व्यावहारिकसत्ताज्ञानजन्यस्य व्यवहारस्य विरोधः। अन्यथा वृत्तिरूपज्ञानतत्फलयोरपि बाधितत्वेन ज्ञानिनामुपदेष्टृत्वाभ्युपगमोऽपि तेषां न घटत इति।

किं च "एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभि" रित्यादिवाक्येभ्यो निर्गुणात्मज्ञानस्यापि कर्मशेषत्वमवगम्यते, तथा जनकादीनां ज्ञानिनामपि कर्म श्रूयते, अन्यथा भिक्षादिकमपि जडभरतादीनां नोपपद्येत। अथ वासनाशेषमात्राद् भिक्षादिकं स्यादिति चेद्, वैदिककर्मवासनावशाद् वैदिककर्मोपपत्तिरपि समा[2]नेति नास्ति विरोधः। तस्मात् ज्ञानकर्मविरोधोऽप्रामाणिक इति॥

इदानीं जैमिन्युक्तहेतूनां बादरायणमतेऽपि क्रमेण साम्यमविरोधं चाह सूत्रैः। तत्र यदुक्तमाचारदर्शनादिति तत्राह—

## तुल्यं तु दर्शनम् ॥९॥

विद्यायाः प्राधान्येऽप्याचारदर्शनं तुल्यमेव जडभरतदत्तात्रेयऋषभदेवादीनां विद्याप्राधान्यदर्शनात्। "परमहंसा नाम संवर्तकारुणिश्वेतकेतुदुर्वासऋभुनिदाघभरतदत्तात्रेयरैवतकप्रभृतयोऽव्यक्तलिङ्गा अव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरन्त"

---

[1] उ० ह० लि० पु० सम्मतोऽयं पाठः।
"च विद्या कर्मविरोधी तया" इति मु० पु० पाठोऽयुक्तः।
[2] यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते। समाता सम्प्राप्तेत्यर्थः।

इत्यादिश्रुतिभ्यिस्त्यर्थः । कर्मणः प्रधानत्वे बाह्यकर्मत्यागस्यानौचित्यादित्यर्थः । ननु तेषां कर्मैव मास्तु "एतद्ध वै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहुवाञ्चक्रिरे" इत्यादिश्रुतिप्रामाण्यादिति कथं विद्यायाः प्राधान्यमित्युच्यत इति चेन्न, तेषामभ्यन्तराग्निहोत्रस्य ज्ञानाङ्गस्य वक्ष्यमाणत्वात् बाह्यकर्मण एव परमहंसादिषु प्रतिषेधस्य वक्ष्यमाणत्वादिति । तथा चाधिकारिभेदेनाचारद्वयमुपपादनीयमिति भावः ॥

तत् श्रुतेरिति यदुक्तं, तत्राप्याह—

## असार्वत्रिकी ॥१०॥

"यदेव विद्यया करोति तं विद्याकर्मणी समन्वारभेते" इत्यादिका कर्मशेषत्वतत्समुच्चयश्रुतिर्न सर्वभूमिकासाधारणो "आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः" इति विद्याप्रकरणस्थश्रुत्या विद्यायां कर्माङ्गकत्वस्याप्यवगमात्, उपदर्शयितव्य इति विरोधाच्चेत्यर्थः ॥

नन्वेकस्या एव विद्यायाः कथमङ्गत्वं वा स्यादित्याशङ्कायामाह—

## विभागः शतवत् ॥११॥

यथा "शतं दीयताम्" इत्येकवाक्योपात्तस्यैकस्यैव शतस्य सम्प्रदानभेदेनानेकधा विभागो भवति, तथैव "तरति शोकमात्मवित्" इत्याद्येकवाक्योपात्ताया एकरूपाया अपि विद्यायाः अधिकारिभेदेन फलभेदेन चाङ्गत्वप्रधानत्वसमुच्चितत्वविभाग इत्यर्थः । एतेन समन्वारम्भणादिति सूत्रस्य प्रत्युत्तरमपि दत्तम्, अधिकारिभेदेन समुच्चयस्यापि भावादिति ॥

तद्वतो विधानादिति यदुक्तं तत्राह—

## अध्ययनमात्रवतः ॥१२॥

विधानादिति जैमिनिसूत्रादनुषज्यते । गुरोः सकाशादर्थैः सह वेदग्रहणमध्ययनं, तन्मात्रवतः पुरुषस्यैवोदाहृतश्रुत्या कर्मशेषतया विद्याविधानात्, न तूत्पन्नसाक्षात्काराङ्कुरस्य तन्निष्ठाधिकारिणो योगारूढस्येत्यर्थः ।

अपरे तु अध्ययनं शब्दमात्रग्रहणम्, तथा च वेदान्तशब्दमात्रग्रहणायेत[1] (ग्रहणवतः) एव कर्म विहितं, न तु तदर्थज्ञानवत इति सूत्रं व्याचक्षते, तन्न, कर्माङ्गविद्यानामपि ब्रह्मविद्यामध्ये वेदान्तवर्गेषु पठितत्वेन सम्यक्कर्मिभिः कर्मकाण्डवत् समग्रवेदान्तस्यापि मीमांस्यत्वात् । "ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः" इत्यादिवाक्यैर्विशुद्धजीवब्रह्मविद्ययोरपि कर्माङ्गताश्रवणेन ब्रह्मकाण्डविचारस्याप्यावश्यकत्वाच्च । यत्तु [2]ब्रह्मकाण्ड(ण्डं)विदुषः कर्म, तत् त्वशक्ताविधमकल्प इति ॥

---

[1] यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते ।

[2] 'ब्रह्मकाण्डविदुषः कर्मतरत्त्वशक्ताविधम' इत्येकस्मिन् ह० लि० पु० पाठः ।

'ब्रह्मकाण्डविदुषः कर्मतत्त्व शक्ताविधम' इत्यन्यस्मिन् ह० लि० पु० पाठः ।

यदप्युक्तं नियमाच्चेति तत्राप्याह—

## नाविशेषात् ॥१३॥

नियमाच्चेति नोत्तरं, कुतः ? अविशेषात् । विद्यायाः पुरुषार्थहेतुतामभ्युपगच्छतामस्माकमपि विद्याङ्गतया कर्मनियमाविशेषात् "सर्वापेक्षा च यज्ञादिश्रुते"रिति वक्ष्यमाणसूत्रादित्यर्थः ॥

## स्तुतयेऽनुमतिर्वा ॥१४॥

यद्वा "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः, एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे" इत्यादिश्रुतिर्विद्यास्तुत्यर्थमनुमतिरेव । यावज्जीवं कर्म करोतु भवान् तथापि एवं पूर्ववाक्योक्तविघण[1] (विधया) वर्तमाने त्वयि नरेऽपि न कर्म लिप्यते, विद्यासामर्थ्यात् । इतो अन्यथा कर्मलेपो नास्तीत्येवं विद्यास्तुतिपरेयमनुज्ञा श्रुतिर्न-नियमपरेत्यर्थः, न कर्म लिप्यते नरे इति लिङ्गात्, विद्याप्रकरणे कर्मविधानानौचित्याच्च । प्रयोजनान्तरसंभवे नियमविधिपरत्वकल्पने गौरवादागामिसूत्रवक्ष्यमाणहेतुभ्यश्चेति भावः ॥

इतश्च स्तुत्यर्था कर्मनियमश्रुतिर्न नियमविधिरित्याह—

## कामकारेण चैके ॥१५॥

एके विद्वांसो मन्वादयः कामकारेणैव भोगापवर्गकामनयैव कर्म न तु निष्कामानां जीवन्मुक्तानामिति वदन्ति । यथा मनुः—

> कामात्मता न प्रशस्ता न चैवेहास्त्यकामता ।
> काम्यो हि वेदाधिगमः कर्मयोगश्च वैदिकः ॥ इति ।

एवमन्यवाक्यान्युदाहार्याणि ॥

एकेषां मते हेतुमाह—

## उपमर्दम् च ॥१६॥

यतः कर्मोपमर्दमपि एके शाखिन आहुः "एतद्ध वै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहुवाञ्चक्रिरे" इत्यादिना विद्वांसो जीवन्मुक्ताः, तस्मान् न कर्मनियमविधिरित्यर्थः ।

अथवा इदं सूत्रद्वयमित्थं व्याचक्षणीयम् । विद्यायाः स्वातन्त्र्ये हेतूनाह—"कामकारेण चैके" अपि च एके शाखिनः कामकारेण कर्तुः स्वेच्छयैवानियमं परित्यागं कर्मणः प्रतिपादयन्ति "एतद्ध स्म वै तद् विद्वांस आहुः ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे, एतद् ब्रह्म वै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहुवाञ्चक्रिरे" इत्यादिकाः । तथा जडभरतादयोऽपि कामकारेणैव कर्मानियमं कृतवन्त इत्यर्थः । तस्मात् स्वतन्त्रापि विद्यास्तीति शेषः । ननु जडभरतादीनामन्तरग्निहोत्रादिकमस्तीत्युक्तं वक्ष्यते च, तत्कथं कर्माभाव उच्यत इति चेन्न, तेषामग्नीन्धनाद्यभावेन बाह्य-

---

[1] यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते ।

कर्माभावस्यैवोक्तत्वात् । कर्मणः स्वातन्त्र्ये समुच्चितत्वे वा विद्याङ्गशमदमाद्यनुरोधेन ब्रह्मकर्माग्नीन्धनादित्यागो न स्यात् शमादिभिः साम्यादिति ।

एवं सूत्रान्तरेऽपि । उपमर्दं चैके शाखिनो विदधति "यच्छेद् वाङ्मनसी प्राज्ञस्तद्यच्छेत् ज्ञानमात्मनि, महति नियच्छेन्न यच्छेच्छान्त आत्मनि, तमक्रुतः[1] (क्रतुः) पश्यति वीतशोकः" इत्यादिनेत्यतोऽपि विद्यैव प्रधानं पूर्वसूत्रोक्तरीत्येत्यर्थः ॥

ऊर्ध्वरेतःसु च शब्दे हि ॥१७॥

उर्ध्वरेतःसु चाश्रमेषु कर्मोपमर्दस्तत्संकोचोऽस्ति बाह्ययज्ञाद्यभावात् । कर्मणः प्राधान्ये वा तत्संकोचे फलासंभवादित्यर्थः । ननूर्ध्वरेतसः आश्रमाः कुत्र श्रूयन्ते गृहस्थाश्रमस्यैव वेदेषु श्रवणादिति तत्राह—'शब्दे हीति । हि यस्मात् तत्रोर्ध्वरेतसो योगिनो नैष्ठिकब्रह्मचारिवानप्रस्थसंन्यासिनः, तेषां स्त्रीसंभोगाभावेन योगाभ्यासेन च रेतसामस्खलनेनोर्ध्वमेवावस्थानात् । तथाविधाश्रमाः, शब्दे—वेदे तिष्ठन्ति । यथा, "त्रयो धर्मस्कन्धाः यज्ञोऽध्ययनं दानमिति प्रथमः तप एव, द्वितीयो ब्रह्मचार्य्याचार्यकुलवासी, तृतीयो योऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्, सर्वे एते पुण्यश्लोका भवन्ति, ब्रह्मसंस्थोऽमृतत्वमेति, तपःश्रद्धे येपूपवसन्त्यरण्ये शान्ता विद्वांसो भैक्ष्यचर्यां चरन्त एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ती" त्यादिषु वेद एवोर्ध्वरेतसोऽप्याश्रमाः सन्तीत्यर्थः । तस्माद् विद्यायां स्वातन्त्र्यमस्तीति ॥

परामर्शं जैमिनिरचोदना चापवदति हि ॥१८॥

त्रयो धर्मस्कन्धा इत्यादिशब्देषु गृहस्थातिरिक्ताश्रमाणां परामर्शमनुवादमात्रं जैमिनिराचार्यो मन्यते न विधिम् । हि—यस्मात् एतेषु चोदना—विधिशब्दो नास्ति, तथा अपवदति च श्रुतिराश्रमान्तरम् "वीरहा वा एष देवानां योऽग्निमुद्वासयते, आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीर्नापुत्रस्य लोकोऽस्ति" इत्यादिरूपेत्यर्थः । आश्रमान्तरानुवादश्चानधिकृतविषय इति भावः ॥

अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥१९॥

बादरायणस्त्वाचार्यः परामर्षमात्रेणाप्यनुष्ठेयमाश्रमान्तरं मन्यते, कुतः ? साम्यश्रुतेः, गार्हस्थ्येन सह समानत्वेनाश्रमान्तराणां श्रुतेः "त्रयो धर्मस्कन्धाः, ब्रह्मसंस्थोऽमृतत्वमेती" त्यादावित्यर्थः । तथा च गार्हस्थ्यसहपाठेन श्रुतिप्रामाण्येन चाश्रमान्तरविधिरनुमेय इति भावः ॥

विधिर्वा धारणवत् ॥२०॥

प्रव्रजन्तीत्यादिवाक्यं स्वत एव वा विधिः, अपूर्वत्वात् प्रमाणान्तरानधिगतत्वात्, धारणवत् । यथा "अधस्तात् समिधं धारयन्ननुद्रवेत् उपरि हि देवेभ्यो धारयती" त्यत्र उपरि धारणस्य परामर्षमात्रेणापि विधिरिष्यते, तद्वदित्यर्थः ।

---

[1] 'तमक्रतुः' इति उ० ह० लि० पु० पाठः ।

इदं त्ववधेयम्—अनेन सूत्रेण कर्मत्यागे विधिर्नाभ्युगम्यते "सर्वापेक्षा च यज्ञादिश्रुतेः, सहकारित्वेन च" त्यागामिसूत्रविरोधात्, वैधस्य प्रतिषेधासंभवाच्च।

"कर्मणां नियतानां च त्यागो नैव विधीयते।
तेषां कर्मफलत्यागः संन्यास इति कथ्यते॥"

इति योगियाज्ञवल्क्यादिवाक्यात्। किन्तु आश्रमान्तरविधिरेवाभ्युपगम्यते। बाह्यकर्मत्यागश्चान्तरङ्गशमादिविरोधेन न्यायप्राप्त एवेति वक्ष्यामः।

नन्वेवं संन्यासाश्रमशब्दार्थः क इति चेत्,

"प्राजापत्यां निरूप्येष्टिं सर्ववेदसदक्षिणाम्।
आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद् गृहात्॥"

इत्यादिमन्वादिवाक्येभ्योऽवगतं स्वदेहेऽग्न्याद्यारोपणपूर्वकं पुत्रादिकुटुम्बाभिमानसत्यलोकादिपर्यन्तकर्मफलकामनात्यागपूर्वकं च गृहादिभ्यः प्रव्रजनमिति। केवलकर्मफलत्यागरूपो गौणसंन्यासश्च गृहस्थादिसाधारणो गीतायाज्ञवल्क्यादावुक्त इति विभाग इति।

ननु संन्यासे विधिर्भवतु तथापि सोऽन्धपङ्ग्वादिरूपकर्मानधिकारिविषय एवोचितः, अन्यथोक्तानामपवादश्रुतीनां विरोधादिति चेन्न, जाबालोपनिषदि "अथ परिव्राट् विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षाणां ब्रह्मभूयाय भवति यद्यातुरः स्यान्मनसा वाचा वा संन्यसेदेष पन्था ब्रह्मणा हानुचित्त" इत्यत्र सामान्यसंन्यासमादौ विधाय पश्चात् पृथगेवानधिकारिणां संन्यासविधानात्। या च "वीरहा वे" त्यपवादश्रुतिः सा स्वात्मन्यग्न्यारोपणात् तत्रान्तर्यागाच्चाविरुद्धैव। अत एव गौतमाचार्यैः समारोपणादात्मन्यप्रतिषेध" इति सूत्रेण योगिनामणित्व[1] (मृणित्व) दोषोऽपहृत इति। अथवा तथाविधाः श्रुतयो वृथाकर्मत्यागपराः, विष्णुपुराणादिमूलश्रुत्येकवाक्यत्वात्। यथा विष्णुपुराणम्—

पुंसां जटाधरणमौढ्यवतां वृथैव,
मोघाशिनामखिलशौचबहिष्कृतानाम्।
तोयप्रदानपितृपिण्डविवर्जितानाम्,
सम्भाषणादपि नरा नरकं प्रयान्ति॥

वृथा एकाग्रताप्रयोजनं विना मोघाशिनाम् अन्तर्यागादिकं विनैव भुञ्जताम्। गीतायाञ्च—

एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति॥ इति।

[1] यथामुद्रितं पाठ एकस्मिन् ह० लि० पु० वर्तते।
'योगिनामृणित्वदोष' इत्यन्यस्मिन् ह० लि० पु० पाठः।

यदेव हि स्ववाक्योपक्रमादौ श्रुतं विद्यादिकं तत्पराण्येवाख्यानानि याज्ञवल्क्यमैत्रेय्यादिसम्बन्धीनि न तु परवाक्यस्थाः पारिप्लवशब्दा इत्यर्थः ॥

यदर्थं विद्यायाः स्वातन्त्र्यं प्रसाधितं तदिदानीं प्रतिपाद्यते—

**अत एव चाग्नीन्धनाद्यनपेक्षा ॥२५॥**

यत एव विद्या पुरुषार्थसिद्धौ प्रधाना अत एव विद्या बाह्याग्नीन्धनादिनिरपेक्षा, तानि विनापि फलं ददातीत्यर्थः । गुणलोपो न गुणिन इति न्यायेनानुष्ठीयमानायाः केवलविद्याया अन्तरङ्गशमाद्यनुरोधेन बहिरङ्गकर्माङ्गाग्न्यादिवैगुण्येऽपि फलसंभवात्, योगिनामङ्गवैगुण्येऽपि कर्मसम्पूर्णतावगमाच्च,

"उत्तान आस्येन हविर्जुहोति, लोकस्य नाभिर्जगतः प्रतिष्ठा ।
तस्याङ्गमङ्गानि कृताकृतं च वैश्वानरः सर्वमिदं प्रपेदे ॥"

इति मोक्षधर्मादिभ्यः । सूत्रे चादिशब्देन शिखासूत्रमन्त्रादयो ग्राह्या इति ॥

ननु परि[1] ( यदि ) अग्न्याद्यपेक्षा नास्ति तर्हि कथं लोकः अग्नीनुदराग्नौ समारोपयेत् ?

"सशिखवपनं कृत्वा बहिः सूत्रं त्यजेद् बुधः ।
एदक्षरं[2] (यदक्षरं) परं ब्रह्म तत्सूत्रमिति धारयेदि ॥" त्यादिभिः
"आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद् गृहादि ।" त्यादि—

स्मृतिभिश्चात्मन्यग्न्याद्यारोपणं विधीयते, तत्राह—

**सर्वापेक्षा यज्ञादिश्रुतेरश्ववत् ॥२६॥**

विद्या सर्वापेक्षा च भवति, सर्वानग्न्यादीन् यागाङ्गभूतानपेक्षतेऽपि । कुतः ? यज्ञादिश्रुतेः, "विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने" त्यादिश्रुतेः । यज्ञाद्यपेक्षया हि तदङ्गानामग्न्यादीनामप्यपेक्षा सिध्यतीत्यर्थः । नन्वग्नीन्धनाद्यनपेक्षेत्युक्तं तत्कथं तस्यापेक्षा सम्भवेत् ? तत्राह—अश्ववदिति । यथा "उषा वा अश्वस्य मेध्यस्य शिर" इत्यश्वमेधोपासने संवत्सरे समारोपिताश्वोऽङ्गतयाऽपेक्षते[3] (ऽपेक्ष्यते) तथैव स्वशरीरब्रह्मप्रणवादौ समारोपितोऽग्न्युपवीतमन्त्रादिर्यज्ञाद्यङ्गतयाऽपेक्षते (ऽपेक्ष्यते), बाह्याग्न्यादिकं च नापेक्षत (नापेक्ष्यत) इत्यविरोध इत्यर्थः ।

तथा चोक्तं विष्णुपुराणे—

"कृत्वाग्निहोत्रं स्वशरीरसंस्थं शारीरमग्निं स्वमुखे जुहोती" ति ।

---

[1] 'परि' इत्येकस्मिन् 'यदि' इत्यन्यस्मिन् ह० लि० पु० पाठः ।

[2] 'यदक्षरं' इति उ० ह० लि० पु० पाठः ।

[3] इह अग्रे च 'अपेक्षते' इति उ० ह० लि० पु० पाठः ।

मोक्षधर्मे च—

"प्रादेशमात्रो हृदि निष्ठितं यत्तस्मिन् प्राणानात्मयाजी जुहोती"ति ।

मनौ च—

"सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति ॥"

इत्यनेनात्मयागसमुच्चितं ज्ञानमुक्तम् । आत्मनि स्वदेहे सर्वान् देवान् यजतीत्यात्मयाजी । स्वशरीरे सर्वदेवारोपश्चोक्तो मनुयाज्ञवल्क्याभ्याम्—

सर्वमात्मनि सम्पश्येत् सच्चासच्च समाहितः ।
सर्वं ह्यात्मनि सम्पश्येन्नाधर्मे कुरुते मतिम् ॥
आत्मैव देवताः सर्वाः सर्वमात्मन्यवस्थितम् ।
आत्मा हि जनयत्येषां कर्मयोगं शरीरिणाम् ॥
ख सन्निवेशयेत् खेषु चेष्टनस्पर्शनेऽनिलम् ।
पक्तिदृष्ट्योः परं तेजःस्नेहे योगं[1](ऽपो गां) च मूर्तिषु ॥
मनसीन्दुर्दिशःश्रोत्रे कान्ते विष्णुं वले हरम् ।
वाच्यग्नि[2](ग्निं)मित्रमुत्सर्गे प्रजने च प्रजापतिम् ॥
प्रशासितारं सर्वेषामणीयांसमणोरपि ।
रुक्माभं स्वप्नधीगम्यं विद्यात्तं पुरुषं परम् ॥
एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम् ।
इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम् ॥
एष सर्वाणि भूतानि पञ्चभिर्व्याप्य मूर्तिभिः ।
जन्मवृद्धिक्षयैर्नित्यं संसारयति चक्रवत् ॥
एवं यः सर्वभूतेषु पश्यत्यात्मानमात्मना ।
स सर्वसमतामेत्य ब्रह्माभ्येति परं पदम् ॥ इत्यनेन ।

ननु स्वशरीरेऽग्न्यादयो देवास्तिष्ठन्त्येव, तेषामारोपणं किमर्थं श्रुत्यादिभिरुच्यते "लोकाग्नीनुदराग्नौ समारोपये" दित्यादिना, "खं सन्निवेशयेत् खेष्वि" त्यादिना चेति चेन्न, बाह्ये वासनात्यागदोषपरिहारार्थत्वात् । बाह्यानामप्यन्तरारोपणं हि समष्टिव्यष्टिभेदेन बाह्याभ्यन्तरुभययाग एव स्यादिति ।

यत्तु "अत एव चाग्नीन्धनाद्यनपेक्षे" ति सूत्रेण मोक्षाख्ये फले सर्वकर्मापेक्षा

---

[1] 'स्नेहेऽपो गां च' इति उ० ह० लि० पु० पाठः सम्यक् ।
[2] 'वाच्यग्नि' इति पाठ उ० ह० लि० पु० वर्तते ।

प्रतिषिद्धा, अनेन सूत्रेण विद्यायाः स्वोत्पत्तौ विविदिषामात्रद्वारा सर्वकर्मापेक्षोच्यत इत्यविरोध इति प्रलपनं, तन्न,

बाह्यमाभ्यन्तरं चेति द्विविधं मुक्तिसाधनम् ।
बाह्यं बहिः क्रियाभिश्च यत्तद् विहितसाधनैः ॥
आभ्यन्तरं च मनसा विध्यनुष्ठानमात्मनि ।
तयोरन्यतमं कुर्यान्नित्यं कर्म यथाविधि ॥
ज्ञानिनाऽज्ञानिना वापि यावद् देहस्य धारणम् ।
तावद् वर्णाश्रमप्रोक्तं कर्तव्यं कर्म मुक्तये ॥

इति वशिष्ठादिवाक्यैर्ज्ञानोत्तरमपि कर्मविधानेन फलनिष्पत्त्यर्थमपि विद्यायाः कर्मापेक्षावगमात्, उक्तविभागे प्रमाणाभावाच्च, तथा "सहकारित्वेने" त्यागामिसूत्रविरोधाच्च । किं चैवं सति पूर्वसूत्रे "कर्मानपेक्षे" त्येवोच्येत, तथोत्तराध्याये "अग्निहोत्रादि तु तत्कार्यायैवे" ति सूत्रे कार्यपदमपि व्यर्थं स्यात् "तस्मादि" त्युक्त्यैव ज्ञानहेतुत्वलाभसम्भवादिति । एतच्च पञ्चसूत्र्यां विस्तरेण दूषितमिति दिक् ॥

ननु यदि विद्यायाः सहकार्य्यङ्गकर्म तदा कथं बाह्यकर्म त्यक्तव्यं, तत्राह—

**शमदमाद्युपेतः स्यात्तथापि तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥२७॥**

यद्यपि विद्यायां यज्ञाद्यपेक्षास्ति तथापि विद्याभ्यासी यज्ञाङ्गभूताग्न्यादिपरित्यागेनापि शमदमाद्युपेत एव स्यात्, कुतः ? तद्विधेस्तदङ्गत्वात्, "तस्मादेवंवित् शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येदि" ति शमादिविधेः शमादीनां विद्याङ्गत्वात् ।

नन्वग्न्यादीनां शमादीनां च विद्याङ्गत्वाविशेषात् कथं शमाद्यनुरोधेनाग्न्यादीनामेव त्यागो न पुनर्वैपरीत्यमिति ? तत्राह—तेषामवश्यानुष्ठेयत्वादिति । एकाग्रतायामन्तरङ्गत्वेन शमादीनामवश्यानुष्ठेयतया तदनुरोधेन विक्षेपकस्याङ्गाङ्गभूतस्याग्न्यादेरेव त्यागो न शमादीनामित्यर्थः । गुणलोपो न गुणिन इति चात्र न्यायो मूलमिति भावः । स्वकीयस्नानपानाहारादिषु चात्मयागः कर्तव्य एव विक्षेपकदोषाभावादावश्यकत्वाच्च । तथा च गौतमीयतन्त्रे—

केवलं सततं श्रीमच्चरणाम्भोजभाजिनाम् ।
संन्यासिनां मुमुक्षूणां मानसः कथितो विधिः ॥ इति ।

एतेन मानसोपचारैरीश्वरपूजा यतीनां चतुर्विधानामप्यस्तीति मन्तव्यम् ।

कर्मत्यागस्त्वहं न कर्तेति चिन्तनमेव "नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित्" "कुर्यात् कर्मसन्न्यासचिन्तनमिति" गीतायोगियाज्ञवल्क्यादिभ्य इति बोध्यम् ।

यत्तु सर्वकर्माणि बाह्याभ्यन्तराण्यविशेषेण संन्यस्य सर्वथैव त्यक्त्वा श्रवणं कुर्या-दित्याधुनिका विधिं कल्पयन्ति तत्, पञ्चसूत्र्यामतिविस्तरेण निराकृतम्। तस्मात् कोमलकण्टकन्यायेनोत्पन्नज्ञानेनैव विरक्तेन मुमुक्षुणा योगारूढेन ज्ञाननिष्ठार्थं शमदमा-दिरक्षायै विक्षेपकाणि कर्माङ्गानि न्यायतः परित्यज्य समाधिना परवैराग्यपर्यन्त आत्म-साक्षात्कारः कर्तव्य इत्येव शास्त्रार्थः। न पुनरज्ञेनायोगारूढेन वा कर्माणि त्याज्यानि, वृथा कर्मत्यागे पातित्यात्। तेन चापरवैराग्ये सति त्रिदण्डसंन्यास एव कर्तव्यः, स चाश्रममात्रमिति।

तदेवं विद्यां यानि[1] (विद्याङ्गानि) सन्न्यासाग्न्यादित्यागयज्ञादीनि शमदमादीनि च विचारितानि। इदानीं योगिनां देहधारणाय भिक्षा विचार्यते—

## सर्वान्नानुमतिः प्राणात्यये तद्दर्शनात् ॥२८॥

"न ह वा एवंविदि किंचनानन्नं भवति, न वा अस्यानन्नं जग्धं भवति, नानन्नं प्रतिगृहीतं भवति, श्वपाकेष्वपि भुञ्जानो ध्यानी नैव तु लिप्यते" इत्यादिश्रुतिस्मृत्योर्यो-गिनां या सर्वान्नानुमतिः सा प्राणात्यय एव योगाभ्यासासामर्थ्यकाल एव प्रत्येतव्या न तु शक्तिकाले, कुतः? तद्दर्शनात्। "मटचीहतेष्वि" त्यादिच्छान्दोग्ये दुर्भिक्षोपद्रवाच्चाक्रायणस्य प्राणात्ययदशायामेव हस्तिपकोच्छिष्टकुल्माषभक्षणश्रवणात् सुलभत्वेन च तस्यैव हस्तिपकोच्छिष्टजलाभक्षणं वेत्यर्थः॥

## अबाधाच्च ॥२९॥

"आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः, स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष" इत्यादिवाक्यानां शक्तिसत्त्वे बाधायोगाच्चेत्यर्थः। शक्ताशक्तभेदेन वाक्य-द्वयोपपत्तिरिति भावः॥

## अपि च स्मर्यते ॥३०॥

स्मर्य्यतेऽपि च सर्वान्नानुमतिः प्राणात्यय एव विद्वदविद्वत्साधारण्येन, यथा—

"जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा॥"

इत्यादिभिरित्यर्थः। नन्वेवं "श्वपाकेष्वपि भुञ्जानो ध्यानी नैव तु लिप्यते" इत्या-दिवाक्ये ध्यानीत्यादिविशेषणं व्यर्थं प्राणात्यये सर्वेषामेव दोषाभावादिति चेन्न, ध्यानी-त्यादिविशेषणानां योगिनः प्राणात्ययवत् वान्त्या[2] नवधानादिनिमित्तकस्य दुर्भोजनस्यापि पापाजनकत्वप्रतिपादनेन साफल्यात्। तथा हि लिङ्गम्—

---

[1] यथामुद्रितं पाठ एकस्मिन् 'विद्याङ्गानि' इत्यन्यस्मिन् ह० लि० पु० पाठः।

[2] यथामुद्रितं पाठ एकस्मिन ह० लि० पु० वर्तते।
'वान्त्या' इत्यन्यस्मिन् ह० लि० पु० पाठः।

नास्ति विद्याविशुद्धानां प्रायश्चित्तादिकल्पना ।
विशुद्धा विद्यया सर्वे ब्रह्मविद्यापरायणाः ॥ इति ।

अयोगिनां तु प्राणात्ययेऽपि उद्योगाभावानवधानादिनिमित्तकदुर्भोजनात् पापं भवत्येव । अयोगिनामनुद्योगे पापश्रवणात् अज्ञानकृतपापानामपि प्रायश्चित्तश्रवणाच्चेति ॥

## शब्दश्चातोऽकामकारे ॥३१॥

कामकारप्रतिषेधे शब्दः श्रुतिरप्यस्ति । यथा कठानां विद्याप्रकरणे "तस्माद् ब्राह्मणः सुरां न पिबेदि" ति ॥

विद्याया अङ्गान्तरं विचार्यते—

## विहितत्वाच्चाश्रमकर्मापि ॥३२॥

'स ह्याश्रमैर्विजिज्ञास्य' इत्यादिभिर्विद्यासाधनतया विहितत्वाच्चाश्रमकर्मापि विद्ययाऽपेक्ष्यत इति शेषः । "सर्वापेक्षा च यज्ञादिश्रुते"रिति सूत्रेणाश्रमविशेषायन्त्रितसामान्यकर्माण्यनित्यानि वा विचारितानि इत्यपौनरुक्त्यम् । आश्रमकर्माणि च मन्वादिषु द्रष्टव्यानि ॥

ननु विद्याया यदाश्रमकर्मापेक्षणं यज्ञाद्यपेक्षणं चोक्तमेतत् किं स्वनिष्पत्त्यर्थमेव उत मोक्षफलार्थमिति संशये निर्णीयते—

## सहकारित्वेन च ॥३३॥

कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः ।
कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते ॥

इत्यादिवाक्येभ्यो विद्यया स्वनिष्पत्त्यर्थं कर्मापेक्षते[1] (पेक्ष्यते) । किन्तु सहकारित्वेन च स्वफलोपकार्य्यङ्गतया चापेक्ष्यते "विद्यां चाविद्यां च यस्तद्वेदोभयं सह", "उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः । तथैव ज्ञानकर्मभ्यां लभ्यते परमं पदम् ॥" इत्यादिवाक्येभ्य इत्यर्थः । फलं प्रति च कर्मणामुपकारविशेषं स्वयं तृतीयसूत्रेण वक्ष्यति ।

आधुनिकास्तु 'सहकारित्वेन चे'त्यस्य स्वकारणत्वेन चेत्यर्थः । तथा च यज्ञादीनि विद्योत्पत्तावेव कारणानि, न तु मोक्षेऽपि "न कर्मणा न प्रजया न धनेन त्यागेनैकेऽमृतत्वमानशु" रित्यादिवाक्यैर्मोक्षस्य कर्मजन्यताप्रतिषेधादित्याहुः, तन्न—परमर्षिसूत्रे त्वत्कल्पितसिद्धान्तानुसारेण सहकारिशब्दस्य स्वकारणे लक्षणानौचित्यात् चकारवैयर्थ्याच्च । फलवत्सन्निधावफलं तदङ्गमित्यङ्गलक्षणादङ्गभूतस्य कर्मणो मोक्षफलप्रतिषेधश्चोपकारकत्वेऽप्यविरुद्ध एवेति ॥

स्वोत्पत्तये स्वफलाय च विद्ययाऽवश्यं कर्मापेक्ष्यत इत्युक्तम् । तत्र किं विदुषां

[1] 'अपेक्षते' इत्येकस्मिन् 'अपेक्ष्यते' इत्यन्यस्मिन् ह० लि० पु० पाठः ।

योगिनां त एव श्रुतिस्मृतिप्रसिद्धाश्चत्वार आश्रमाः ? उत पञ्चम आश्रमोऽस्ति योगिनामिति संशयः। तत्र "अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यग् ऋषिसङ्घजुष्टम्, अविमुक्तमाश्रितो भवत्यत्याश्रमी" त्यादिश्रुतिभ्यो योगाश्रमोऽतिरिक्त इति पूर्वपक्षे सिद्धान्तमाह—

## सर्वथापि त एवोभयलिङ्गात् ॥३४॥

सर्वथा योगेऽयोगे वा त एव प्रसिद्धाश्चत्वार एवाश्रमाः प्रत्येतव्याः, कुतः ? उभयलिङ्गात् श्रुतिलिङ्गात् स्मृतिलिङ्गाच्च। श्रुतौ हि "त्रयो धर्मस्कन्धा" इत्यादिनाऽऽश्रमत्रयमुक्त्वा पश्चाच्चतुर्थ उक्तो "ब्रह्मसंस्थोऽमृतत्वमेती" ति। ब्रह्मसंस्थश्च योगीति योगिनश्चतुर्थ एवाश्रमोऽनुमीयते। मन्वादिस्मृतौ चाश्रमचतुष्कस्यैव कथनात् 'पञ्चमो नोपपद्यत" इति वचनाच्च योगिनामप्येत एवाश्रमा इत्युन्नीयत इत्यर्थः। स्पष्टतश्चैतदुक्तं कूर्मपुराणे। ऋषय उचुः—

भगवन् देवताविघ्न हिरण्याक्षनिषूदन।
चत्वारो ह्याश्रमाः प्रोक्ता योगिनां तु क उच्यते ॥

कूर्म उवाच—

सर्वकर्माणि संन्यस्य समाधिमचलं स्थितः।
य आस्ते निश्चलो योगी समाधिमचलं स्थितः ॥

आसीनः पञ्चम इति।

अतो योगिनां चतुर्थ एवाश्रमो निर्णीयते। योगाश्रमे चात्याश्रमशब्दो नातिरिक्ताश्रमाभिप्रायेण, किन्त्वतिशयिताश्रमाभिप्रायेणैव, योगाश्रमस्य परमहंसस्य सर्वाश्रमश्रेष्ठत्वात्। अथ योगिनां परमहंसानां कोऽयं मार्ग इत्यादिश्रुतेरपि परमहंसरूपाः संन्यासिन एव योगिनो नातिरिक्ता इति।

सहकारित्वेन चेत्युक्तं, तत्राह—केनोपकारेण[1] मोक्षे विद्यामुपकरोति कर्मेत्याकाङ्क्षायामाह—

## अनभिभवं च दर्शयति ॥३५॥

कर्मणामुपकारं च विघ्नानभिभवं श्रुतिर्दर्शयति "एष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दते, विद्यां चाविद्यां च यस्तद्वेदोभयं सह अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुत" इत्यादिरित्यर्थः। न नश्यति विघ्नविहतो न भवति। अविद्यया कर्मणा मृत्युं-पुरुषार्थघातकं विघ्नं तीर्त्वा विद्यया मोक्षं प्राप्नोतीति श्रुत्यर्थः।

ननूत्पन्नज्ञाननिष्ठस्य कीदृशः प्रतिबन्धः कर्मणा परिह्रियत इति चेत्, नित्यकर्माकरणजप्रत्यवायेन मिथ्याज्ञानवासनाक्षये प्रारब्धभोगसमाप्त्यादौ च प्रतिबन्धो नित्यकर्मणा परिह्रियते तत्प्रतिबन्धकप्रत्यवायानुत्पादात्। न च ज्ञानिनां प्रत्यवायः

---

[1] 'केनोपकारेण' इत्येव पाठ उ० ह० लि० पु० अपि वर्तते।

कथं स्यादिति वाच्यम्, ज्ञानिनामपि वृथा स्वाच्छन्द्यात् प्रत्यवायोत्पत्तेः कर्मविध्यनुमेयत्वात्।

य: शास्त्रविधिमुत्सृज्य वर्तते कामकारतः।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम्॥
यस्तु विद्याभिमानेन वेदमार्गप्रवर्तनम्।
छलजात्यादिभिर्जह्यात् स महापातकी भवेत्॥

इत्यादिवाक्येभ्यश्चेति॥

इदानीमनाश्रमाणां विधुरादीनां विद्यायामधिकारोऽस्ति न वेति विचार्यते—

## अन्तरा चापि तु तद्दृष्टेः॥३६॥

अन्तरा आश्रमयोरन्तरालवर्तिनां विधुरादीनामपि तु तद् विज्ञानं मन्तव्यम्, कुतः? दृष्टेः, रैक्ववाचक्नवीप्रभृतीनामनाश्रमिणामपि विद्याभ्यासदर्शनादित्यर्थः॥

## अपि च स्मर्यते॥३७॥

स तमुत्सृज्य देहं स्वं धारयन् ब्रह्म केवलम्।
आत्मानमालोकयति मनसा प्रहसन्निव॥
इमं धर्मं समास्थाय येऽपि स्युः पापयोनयः।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्॥
सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते॥

इत्यनुगीतादौ दैवादशक्त्या वा सर्वथा आश्रमधर्मादिराहित्येन वर्तमानस्याप्यैकात्म्यविद्या स्मर्य्यतेऽपीत्यर्थ॥

आश्रमधर्मकर्तव्यस्योपकारस्य चान्यत एव संभव इत्याह—

## विशेषानुग्रहश्च॥३८॥

स्मर्यत इत्यनुमीयते। विधुरादीनामपि तीर्थसेवाजपादिभिर्विशेषधर्मैर्विद्याया अनुग्रहश्च उपकारः प्रतिबन्धनिवृत्तिरूपः स्मर्यत इत्यर्थः।

[1]प्रकर्तुमसमर्थश्च जुहोतियजतिक्रियाः।
स्नानध्यानजपैर्होमैरात्मानं पावयेद् बुधः॥
जप्येनैव तु संसिध्येद् ब्राह्मणो नात्र संशयः।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते॥

---

[1] 'प्रकर्तुम्' इति उ० ह० लि० पु० पाठः। 'अकर्तुम्' इति मु० पु० पाठोऽयुक्तः।

इत्यादिवाक्येभ्य इति भावः। होमैरात्मयोगैः[1](यागैः) मैत्रोऽहिंसक इति। तस्माद् विधुरादिभिः स्वधर्मचरणाक्षमैरपि यथाशक्ति स्नानजपनमस्कारभगवन्नामग्रहणादिधर्मैर्विशेषानुगृहीता विद्याऽनुष्ठेया गुणलोपो न गुणिन इति न्यायादिति सिद्धम्। वस्तुतस्तु यथाश्रुत एव सूत्रस्यायमर्थः। अन्तरालवर्तिष्वपि परमेश्वरस्य विशेषानुग्रहोऽतिशयानुग्रहोऽपि स्मर्यते भक्त्यावेशात्, यथा—

नालं द्विजत्वं देवत्वमृषित्वं वा सुरात्मजाः।
प्रीणनाय मुकुन्दस्य न श्रुतं न वहुज्ञता॥
प्रीयतेऽमलया भक्त्या हरिरन्यद् विडम्बनम्।
पुनाति भगवद्भक्तश्चाण्डालोऽपि यदृच्छया॥
अपि चेत् सुदुराचारो भजते मामनन्यभाक्।
साधुरेव स मन्तव्यः सम्यग् व्यवसितो हि सः॥ इति।

**अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥३९॥**

अतोऽन्तरालवर्तित्वादितरत् आश्रमित्वं तु ज्यायो मुख्यकल्पः। लिङ्गाच्च "आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठ" इति लिङ्गाच्चेत्यर्थः। अत्र हि क्रियावत्त्वस्योत्कृष्टत्ववचनात् तदुपयोग्याश्रमरूपोऽप्युत्कर्षोऽनुमीयत इति। स्मर्यत इति चशब्देन समुच्चीयते। सा च स्मृतिः—

संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ।
तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते॥
अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः।
[2]संवत्सरमनाश्रमी स्थित्वा कृच्छ्रमेकं चरेदिति॥

इदानीमिदं विचार्यते—अधराश्रमं गतस्य पूर्वधर्मचिकीर्षादिना तत्पूर्वाश्रमगमनमस्ति न वेति। तत्रादौ स्वमतमाह—

**तद्भूतस्य नातद्भावो जैमिनेरपि नियमात् तद्रूपाभावेभ्यः ॥४०॥**

तदाश्रमीभूतस्यातद्भावोऽर्थात् तत्पूर्वाश्रमिभावो नास्ति, कुतः? जैमिनेरप्यङ्गीकृतेभ्यो नियमात् तद्रूपाभावेभ्यो हेतुभ्यः। तत्र नियमः—"अरण्यमियात्तता न पुनरियाद्" इत्यादिश्रुत्युक्तः। अतद्रूपं चातद्रूपणमवरोहाकथनमिति यावत्। अभावश्च शिष्टाचारस्येति। एतभ्यो हेतुभ्योऽधराश्रमात् त्यक्ताश्रमावरोहो नास्तीत्यर्थः॥

तेषां प्रायश्चित्तानन्तरमप्यवरोहो नास्ति प्रायश्चित्तस्यैवाभावादित्याह—

**न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥४१॥**

[1] 'आत्मयोगैः' इति उ० ह० लि० पु० पाठः।

[2] अयमेव पाठ उ० ह० लि० पु० अपि वर्तते।

पूर्वमीमांसायामधिकारलक्षणे षष्ठाध्याये प्रोक्तमाधिकारिकमवकीर्णिप्रायश्चित्तं, तदपि नैष्ठिकादेर्न भवति, कुतः ? पतनानुमानात् अत्यन्तपतनस्मरणेन तद्योगात् ।

यथा—आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते मतः[1] ( ततः ) ।
प्रायश्चित्तं न पश्यामि येन शुध्येत् स आत्महा ॥

इत्यादिरित्यर्थः ॥

एके तु प्रायश्चित्तस्य भावमाहुरित्याह—

## उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ॥ ४२ ॥

एके तु उपपूर्वं पातकमुपपातकमत्र मन्यन्ते । अतोऽशनवन्मधुमांसादन इवात्रापि प्रायश्चित्तस्य भावमाहुः । कामतो महापातकस्यैव हि मरणान्तं प्रायश्चित्तं नोपपातकेष्विति । तदुक्तमिति प्रायश्चित्तं च तैरुक्तं स्मृतिषु । यथा—"वानप्रस्थो दीक्षाभेदे कृच्छ्रं द्वादशरात्रं चरित्वा महाकृच्छ्रं वर्धयेत् भिक्षुर्वानप्रस्थवत् सोमवृद्धिवर्जं स्वशास्त्रसंस्कारश्चेति[2] ( श्चेति ) । एवं च सति धर्मप्रयोजनं विना वृथा तद्भूतस्यातद्भावे प्रायश्चित्ताभाववचनमिति विवेक्तव्यम् ॥

## बहिस्तूभयथाऽपि स्मृतेराचाराच्च ॥ ४३ ॥

आश्रमभ्रष्टाः कृतप्रायश्चित्ता अकृतप्रायश्चित्ता वा उभयथापि शिष्टैर्व्यवहारेषु बहिः कार्या एव, कुतः ? स्मृतेः,

आरूढपतितं विप्रं मण्डलाच्च बहिष्कृतम् ।
उद्बद्धं कृमिदष्टं च स्पृष्ट्वा चान्द्रायणं चरेत् ॥ इति ।

तथा आचाराच्च—विवाहयज्ञादिषु तेषामव्यवहार्यत्वे शिष्टाचाराच्चेत्यर्थः ॥

इदानीमिदं विचार्यते—किं ब्रह्मविद्या स्वयमेव कर्तव्येति नियमः, उत धनादिना [3]ऋत्विग्द्वारापीति—

## स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥

स्वामिने यजमानस्यैव विद्यायां कर्तृत्वं, कुतः ? तस्यैव फलश्रुतेः, "य एवं वेदेति फलश्रुतेः फलसामानाधिकरण्यस्यैवावगमादित्यर्थः । अयं च विचारोऽदृष्टद्वारा फलोत्पत्तौ बोध्यः । अविद्यानिवृत्तिद्वारा मोक्षजनने च संशय एव नास्ति, तत्त्वज्ञानमिथ्याज्ञाननिवृत्त्योः सामानाधिकरण्येनैव हेतुहेतुमद्भावस्य लोकसिद्धत्वादिति ।

आधुनिकास्तु कर्माङ्गविद्याविषयमेवेदमधिकरणं न तु ब्रह्मविद्याविषयमिति तन्न, अङ्गेषु यथाश्रमभाव इति पूर्वपाद एवास्यार्थस्य मीमांसितत्वात् ॥

---

[1] 'मत' इत्येकस्मिन् 'ततः' इत्यन्यस्मिन् ह० लि० पु० पाठः ।

[2] 'संस्कारश्चेति' उ० ह० लि० पु० पाठः ।

[3] 'ऋतिग्द्वारापीति' उ० ह० लि० पु० पाठः ।
'ऋतिद्वारापि' इति मु०पु० पाठः । ऋत्विग्द्वारा इति तु सम्यक् ।

## आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ४५ ॥

ऋत्विजोऽपि कर्म ब्रह्मविद्या भवतीत्यौडुलोमिराचार्यो मन्यते। हि यस्मात् तस्मै फलाय ऋत्विक्कर्तृकविज्ञानं यजमानेन परिक्रीयते धनादिभिरिति। अतो न फलवैयधिकरण्यं विद्यायाः, धनेन विद्यायाः क्रीतत्वादित्यर्थः ॥

## श्रुतेश्च ॥ ४६ ॥

विद्याया ऋत्विग्निष्ठाया यजमानफलदातृत्वश्रवणाच्च "एवं विदुद्गाता आत्मने वा यजमानाय वा यं कामं कामयते तमागायती" त्यादौ। तत्र च ब्रह्मविद्यात्वं वाऽन्यविद्यात्वं वा न प्रयोजकमित्यर्थः ॥

इदानीमिदं विचार्यते—किं चतुर्थाश्रम एव ब्रह्मविद्याधिकारोऽथवा गृहस्थादिष्वपीति ! तत्र "एतमेव प्रव्राजिनो लोकमि" ति श्रुतेः प्रव्राजिनामेवाधिकारः, तत्र च संन्यासाश्रमे कथम् ऋत्विक् संभवेदिति पूर्वपक्षे सिद्धान्तमाह—

## सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४७ ॥

काण्वे षष्ठेऽध्याये श्रूयते " तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन तपसाऽनाशकेन, एतमेव विदित्वा मुनिर्भवति, एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्तीति"।

तत्र तृतीयवाक्यं तद्वतो विद्यावतो विद्यायाः सहकार्यन्तरस्य प्रव्रज्याश्रमस्य विधिः सपक्षेणैव पाक्षिक एव। यस्मिन् हि पक्षे गार्हस्थ्यादौ विक्षेपप्राबल्येन ब्रह्मैकाग्र्यं न संभवति, तस्मिन् पक्षे व्यासङ्गनिवृत्तिद्वारोपकारिणी प्रव्रज्या ज्ञानाङ्गतया विधीयते न नियमेनेत्यर्थः। नियमे सति वक्ष्यमाणस्य गृहस्थेनोपसंहारस्यानुपपत्तेः।

न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः।
श्राद्धकृत् सत्यवादी च गृहस्थोऽपीह मुच्यते ॥
तत्त्वज्ञानेन मुच्यन्ते यत्र तत्राश्रमे रताः।

इत्यादिस्मृतिविरोधाच्च। तस्मात् पारिव्रज्याश्रमो ज्ञाननिष्ठायां मुख्यकल्प एव, गृहस्थोऽपीत्यपिशब्दस्य स्वरसाच्च।

पाक्षिकत्वे दृष्टान्तमाह-विध्यादिवदिति। यथा "गोदोहनेन पशुकामस्ये" ति विधिः पशुकामभा[1] स्वत्वास्वत्वाभ्यां ( कामनासत्त्वासत्त्वाभ्यां ) पाक्षिकस्तद्वदित्यर्थः ॥

ननु पाक्षिकविद्याङ्गत्वे संन्यासस्य कथं केवलगृहस्थाश्रमेणैव छान्दोग्ये विद्याया उपसंहारो, यथा छान्दोग्योपनिषत्समाप्तौ—"अभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधदात्मनि सर्वेन्द्रियाणि प्रतिष्ठाप्याहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः, स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते" इति तामिमाशङ्कां परिहरति—

**कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४८ ॥**

कृत्स्नस्यैव चातुराश्रम्यधर्मस्य प्रायशो गृहस्थाश्रमे भावात् सत्त्वादेव केवल-गृहिणोपसंहारः कृतः सर्वाश्रमोपलक्षणतया न तु आश्रमान्तराधिकारप्रतिषे-धार्थमित्यर्थः ॥

नन्वेवमपि गृहस्थसन्न्यासिनोरपि (रेव) विद्यायामधिकारो लभ्यते इतराश्रमा-धिकारे किं प्रमाणमित्याशङ्क्याह—

**मौनवदितरेषामप्युपदेशात् ॥ ४९ ॥**

मौनवत् सन्न्यासाश्रमस्येव इतरेषामप्याश्रमाणां विद्यासम्बन्धोऽस्ति । कुतः ? उपदेशात् । "ब्रह्मज्ञानेन मुच्यन्ते यत्र तत्राश्रमे रताः" इत्यादिवाक्येभ्य इत्यर्थः ॥

विद्याया अङ्गान्तरमाह —

**अनाविष्कुर्वन्नन्वयात् ॥ ५० ॥**

आत्मनः सिद्ध्यादिकं योगाभ्यासं चानाविष्कुर्वन् लोकेभ्योऽप्रकाशयन् योगी तिष्ठेत[1] (तिष्ठेत्) । कुतः ? अन्वयात् अन्वयप्रसङ्गात् सिद्ध्यादिप्रकाशने हि समाधिविघ्नस्य लोकानुगमनस्य प्रसङ्ग इत्यर्थः । तथा च स्मृतिः —

गूढधर्माश्रितो विद्वानज्ञातचरितं चरेत् ।
अन्धवज्जडवच्चापि मूकवच्च महीं चरेत् ॥
जना यथावमन्येरन् $पद्येयुर्नैव संगतिम् । इति ।

आविष्करणादिना प्रतिबन्धे तु भरतादिवन्नैहिको विद्यापरिपाक इत्याह—

**ऐहिकम (प्य)[2] प्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५१ ॥**

प्रस्तुतं बलवतो बलवत्प्रतिबन्धाभाव एवैहिकं, तत्पर्यवसायि विज्ञानं भवति, कुतो ? दर्शनात् । भरतादीनां हरिणादिसङ्गप्रतिबन्धेनैहिकज्ञाननिष्ठाभावदर्शना-दित्यर्थः । प्रतिबन्धाश्च व्याध्यादयश्चित्तविक्षेपकाः पातञ्जले सूत्राभ्यां परिगणिताः ॥

**एवं मुक्तिफलानियमस्तदवस्थाधृतेस्तदवस्थाधृतेः ॥ ५२ ॥**

एवं च ज्ञानाभ्यामेव[3] (ज्ञानाभ्यासे च) क्रियमाणेऽप्यैहिकस्य मुक्तिफलस्य नियमो नास्ति, कुतः ? तदवस्थाधृतेः । "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः,

---

[1] 'तिष्ठेत' इति पाठः उ० ह० लि० पु० अपि वर्तते ।

$ 'पद्येयुर्नैव संगतिमि'ति उ० ह० लि० पु० पाठः ।
'पञ्चेपुर्नैव सङ्गतिः' इति मु० पु० पाठोऽपि विशृङ्खलः ।
मु० पु० पाठः असमीचीन इति प्रतिभातीति मुकुन्दशास्त्रिणां टिप्पणी ।

[2] "मप्रस्तुत" इति उ० ह० लि० पु० पाठः ।

[3] 'ज्ञानाभ्यासे' इति उ० ह० लि० पु० पाठः ।

अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत" इत्यादिश्रुतेः परवैराग्यस्यैव मोक्षहेतुज्ञानावस्थात्वावधारणात्। तथा मोक्षहेतुज्ञानावस्थायाः स्मृतिष्वप्यवधृतत्वात्

योगयुक् प्रथमं योगी युञ्जमानोऽभिधीयते।
विनिष्पन्नसमाधिस्तु परब्रह्मोपलब्धिमान्॥
यद्यन्तरायदोषेण दूष्यते नास्य मानसम्।
जन्मान्तरैरभ्यसतो मुक्तिः पूर्वस्य जायते॥
विनिष्पन्नसमाधिस्तु मुक्तिन्तत्रैव जन्मनि।
प्राप्नोति योगी योगाग्निदग्धकर्मचयोऽचिरात्॥

इत्यादिवाक्यैरित्यर्थः।

समाधिनिष्पत्तिश्च संप्रज्ञातावस्थैकेन जन्मना न भवतीति नियमोऽस्ति। अत उत्पन्नज्ञानेनापि वक्ष्यमाणादसकृदावृत्तिप्रायणान्ता[1] (वक्ष्यमाणाऽसकृदावृत्तिः प्रायणान्ता) विद्यायाः कर्तव्येति सूत्रस्यास्य तात्पर्यार्थः। न चैवमैहिकमोक्षावश्यंभावे कस्यापि विश्वासो न स्यादिति वाच्यम्, असंप्रज्ञातसमाधिनैक[2] (समाधिनैव) मुक्तिनिर्णयसंभवात्। किं च फलावश्यंभावनिश्चयो ज्ञानोत्पत्त्यैव जायते। तत्रैहिकत्वनिर्णयाभावेऽपि न क्षतिः। अतएवैहिकत्वनिर्णयाभावेनामरणादसकृदावृत्तिः कर्तव्या मोक्षविलम्बेन सर्वैरेवेति। तदवस्थाधृतेरिति द्विःपाठोऽध्यायपरिसमाप्त्यर्थः।

इति ब्रह्ममीमांसायां विज्ञानयतिकृते विज्ञानामृताख्य ऋजुभाष्ये
तृतीयाध्यायस्य चतुर्थः पादः।

---

[1] 'वक्ष्यमाणात् सकृदावृत्तिप्रायणाता कर्तव्ये'ति उ० ह० लि० पु० पाठः असम्यक्।
[2] यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते।

## अथ चतुर्थाध्याये प्रथमः पादः

इदानीं चतुर्थाध्यायेन विद्यानिष्पत्तेरत्यन्तान्तरङ्गं साधनमभ्यासं विद्याया आकारं च संक्षेपेणोक्त्वा इति विस्तरेण[1] (ऽतिविस्तरेण) विद्याफलं मोक्षद्वयमैहिक-क्रममुक्तिरूपं विचारणीयम्। तत्राद्यपादे ऐहिकमुक्तिर्विशेषतो विचार्यते। विद्यापादे त्वसामान्यत एव विद्या तत्फलं चोक्तमिति न पौनरुक्त्यम्।

### आवृत्तिरसकृदुपदेशात् ॥१॥

यतः पूर्वपादशेषे ऐहिकमप्रस्तुतप्रतिबन्धकमित्युक्तमतो विद्याया असकृदावृत्तिः कर्तव्याऽसंप्रज्ञातसमाधिपर्यन्तं यथा विघ्नेन नाभिभूयते। तत्र प्रमाणमाह—उपदेशा-दिति। "तद्विष्णोर्वेदं सदा पश्यन्ति सूरयः, एतद् ज्ञेयं नित्यमेवात्मसंस्थं नातः परं वेदितव्यं हि किञ्चित्, तमेवैकं जानथात्मानं तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः। योगी युञ्जीत सततमात्मानं रहसि स्थितः"। इत्यादिश्रुतिस्मृतिभ्यां सतताभ्या-सोपदेशादित्यर्थः। आवृत्तेश्च विघ्नोत्सारकत्वं पातञ्जले सूत्रितम् "तत्प्रतिषेधार्थमेक-तत्त्वाभ्यासः" इति। तत्प्रतिषेधो व्याध्याद्यन्तरायनिवृत्तिः। मार्कण्डेयपुराणे चोक्तम्—"पातितः श्रवणे दैवो भ्रमाकर्त्तौ[2] योगी तस्मान् मनोमयं चिन्तयेत् परमं ब्रह्म कृत्वा तत्प्रवणं मनः" इत्यादिना॥

### लिङ्गाच्च ॥२॥

लिङ्गादपि योगरूपात् प्रत्ययावृत्तिरेकाग्रताख्याऽवगम्यते "यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम्। तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणां यच्छेद् वाङ्मनसी प्राज्ञः" इत्यादिरूपादित्यर्थः। न ह्यभ्यासं विना चित्तवृत्तिनिरोधरूपो योगः सम्भवति "अभ्यासवैराग्याभ्यां तन्निरोधः" इति योगसूत्रादिति भावः। इयञ्चावृत्तिरदृष्टजनिका स्वविषयसाक्षात्कारजनिका च भवति,

> मनसश्चेन्द्रियाणां चैकाग्र्यं परमं तपः।
> श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः॥
> मत्वा च सततं ध्येय एते[3] (इति) दर्शनहेतवः॥ इति स्मृतेः।

यत्तु शब्दादेव साक्षात्कारो भवति स्वावृत्तिस्तु विपरीतभावनामात्रं निवर्तयतीति मतं तदस्माभिः पञ्चसूत्र्यां निराकृतम्॥

---

[1] 'इति विस्तरेण' इति पाठ उ० ह० लि० पु० वर्तते।

[2] "प्रातितः श्रवणो दैवो भ्रमाकर्त्तौ" इति एकस्मिन् ह० लि० पु० पाठः।
"प्रातितः श्रावणो दैवो भ्रमाकर्त्तौ" इत्यन्यस्मिन् ह० लि० पु० पाठः।
अत्र पाठत्रयमप्यसम्यक् प्रतिभाति।

[3] 'एते दर्शनहेतवः' इति उ० ह० लि० पु० पाठः।

इदानीं ब्रह्मविद्याया अविद्यानिवर्तकं मुख्यमाकारमवधारयति—

आत्मेति तूपगच्छन्ति ग्राहयन्ति च ।।३।।

यद् ब्रह्म सद्य (सत्य) संकल्पादिगुणकं परतः स्वतश्च निर्विशेषचिन्मात्रं नेति नेतीति निःशेषप्रकृतिपुरुषाद्यखिलप्रपञ्चलयावधिभूतं तदेतदात्मेत्यहमित्युपगच्छन्ति अनुभवन्ति तात्त्विकाः तथैव शिष्यान् मुमुक्षून् ग्राहयन्ति च। अन्यथा तटस्थब्रह्मज्ञानात् साक्षादविद्यानिवृत्त्यसम्भवादित्यर्थः। तथा च श्रुतिः—"तदात्मानमेव वेदाहं ब्रह्मास्मीति, स आत्मा, तत्त्वमसी" त्यादिरिति।

ननु जीवब्रह्मणोर्भेद उक्त इति कथं जीवस्य ब्रह्माहमिति ज्ञानं भवेदिति चेदुच्यते—यथा सांख्यमतेऽन्तःकरणाद् भिन्नोऽपि जीवस्तस्यात्मतया तस्याहमिति प्रमाविषयो भवति, तथैव जीवादिदेहान्तेभ्यो भिन्नमपि ब्रह्म जीवादीनात्मतयाऽन्तःकरणस्याहमिति प्रमाविषयः स्यात्। अन्तर्यामितया जीवादिलयाधारतया च ब्रह्मैव सर्वेषां पारमार्थिकात्मेत्युक्तत्वात्। यथा च जीवात्मताज्ञानाद् देहाद्यभिमानरूपाविद्यानिवृत्तिर्भवति तथैव ब्रह्मात्मताज्ञानाज्जीवादिष्वभिमानस्य निवृत्तिः स्यात्।

नन्वेवं किं जीवोऽपि बुद्ध्यादिवदनात्मैव? तथा च सांख्यादिसर्वशास्त्रविरोध इति चेन्न, सृष्टिकाले च[1] स्वभोक्तृत्वादिना व्यावहारिक्या जीवात्मतायाः सर्वशास्त्रेऽभ्युपगमात्, सृष्टिकाले स्वकारित्वेन[2] (सहकारित्वेन) प्रपञ्चस्य व्यावहारिकसत्तावत्। ब्रह्मापेक्षया तत्तस्या (तु तस्या) प्यनात्मत्वं भारतकूर्मपुराणादिषु दृश्यत एव। यथा मोक्षधर्मे—

अन्यश्च राजन् पुरुषस्तथान्यः पञ्चविंशकः।
तत्स्थत्वाच्चानुपश्यन्ति एक एवेति साधवः।।
ते चैनं नाभिनन्दन्ति पञ्चविंशकमप्युत।
षड्विंशमनुपश्यन्तः शुचयस्तत्परायणाः।।

इति नाभिनन्दन्ति आत्मत्वेनेत्यन्तम्। कौर्मे च

तत्त्वैः सम्पादितं भुङ्क्ते पुरुषः पञ्चविंशकः।
ईश्वरेच्छावशात् सोऽपि जडात्मा कथ्यते बुधैः।। इति।

प्रलयादौ चैतन्यफलोपधानाभावात्, सर्गकाले चैत्य[3] (चैतन्य) फलोपधानस्येश्वरेच्छाधीनत्वाद् बुद्ध्यादिवदेव जीवस्य जडत्वमतो न मुख्यमात्मत्वमित्यर्थः। एतदपि स्मर्यते—

आत्मन्यवस्थितेऽव्यक्ते विकारे चोपसंहृते।
साधर्म्येणावतिष्ठेते प्रधानपुरुषावुभौ।।

---

[1] 'सृष्टिकाले च न' इति मु० पु० पाठोऽयुक्तः।

[2] यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते।

[3] 'चैत्य' इति उ० ह० लि० पु० पाठः।

यथा दारुमयी योषा यथा यन्त्रमयो मृगः ।
तथा सर्वाणि भूतानि ईशतन्त्राणि विद्धि भोः ॥ इति ।

तथा च श्रुतिरपि—"तमेवैकं जानथ आत्मानं नान्योऽतो द्रष्टा, यथा वृक्षो वनस्पतिस्तथैव पुरुषो मृषा, नित्यो नित्यानां चेतनश्चेतनानामि" त्यादिः । चित्स्वरूपत्वेऽपि जीवानां स्वोपाधिसम्बन्धाधीनचैतन्यफलोपधानस्य कादाचित्कत्वेन वाचारम्भणमात्रत्वात् । प्रकृतितद्विकारवदेव जीवानां मृषात्वं न त्वत्यन्तासत्त्वम् "आदरादलोप" इति सूत्रात् । तस्मात् प्रलयमोक्षादौ विषयसम्बन्धाभावात् काष्ठलोष्ठादिवज्जडाः सन्तो जीवाः मध्यन्दिनादित्यवत् सदा सर्वावभासके परमात्मनि विलीयन्ते समुद्रे नदनद्य इव । पुनश्च स एव परमात्मा स्वेच्छयाऽग्निस्फुलिङ्गवत् तानुपाधिसम्बन्धेन स्वतो विभज्यान्तर्यामी सन् प्रेरयति । तथा चोक्तम्—"चक्षुष्मताऽन्धा इव नीयमानाः" इति । अतः स एव मुख्य आत्मान्तर्याम्यमृत इत्यादिश्रुतेरिति सिद्धम् । नन्वेवं जीवानुज्ञानात् कथं मुक्तिरुक्तेति चेत्, देहाद्यभिमानस्य संसारहेतोर्निवर्तकत्वादिति ।

ये त्वाधुनिका जीवब्रह्मणोरखण्डत्वमस्य सूत्रस्यार्थं वर्णयन्ति तन्मतं पञ्चसूत्र्यां विस्तरेण निराकृतम् । किं चोभयथाऽनुभवसंभवेऽपि भेदग्राहकश्रुतिस्मृतिपूर्वोक्तसूत्रजातन्यायाद्यविरोधेनैवास्य सूत्रस्य तात्पर्यं सूचितं, न तद्विरोधेनाखण्डतापरत्वम् । अस्य सूत्रस्य विद्याकारमात्रनिर्णायकत्वात् । स्वातन्त्र्येणाखण्डतापरत्वस्यापि कल्पने वाक्यभेदप्रसङ्गाच्च । "स म आत्मेति विद्यादि" त्यादिश्रुत्यनुसारश्चास्मत्कृतसूत्रव्याख्यान एव दृश्यते । तथा स्मृत्यनुसारोऽपि । यथा कौर्मे—

प्रधानं पुरुषश्चैव तत्त्वद्वयमुदाहृतम् ।
तयोरनादिर्निर्दिष्टः कालसंयोजकः परः ॥
त्रयमेतदनाद्यं तु अव्यक्ते समवस्थितम् ।
तदात्मकं तदन्य[1](तदन्यत्)स्यात्तद्रूपं मामकं विदुः ॥ इति ।

अत्र हि पुरुषादित्रयस्याव्यक्ताख्यब्रह्मात्मकत्वं ब्रह्मभेदश्चोक्त इति ॥

नन्वेवमेकस्मिन्नेव संघाते विदुषां कथमात्मद्वयप्रत्ययो घटते, तत्राह—

**न प्रतीके न हि सः ॥४॥**

प्रतीकमङ्गमंश इति पर्यायाः । ब्रह्मणो वात्मेत्युपगच्छन्ति न प्रतीकेंऽशे जीवे तथा देहावयवदेशे प्रकृतितत्कार्ये च, कुतः ? न हि यस्मात् प्रतीकं जीवादी[2]( दि ) न सः पारमार्थिका (कस्ता) त्त्विक आत्मेत्यर्थः ॥

ननु कथं तर्हि "स एव मायापरिमोहितात्मे" त्यादिश्रुतिर्जीवादेर्ब्रह्मत्वं प्रतिपादयतीत्याशङ्कायामाह—

---

[1] 'तदन्यत् स्यात्' इति पाठ उ० ह० लि० पु० वर्तते ।
[2] 'दि न स' इति उ० ह० लि० पु० पाठः ।

## ब्रह्मदृष्टिरुत्कर्षात् ।।५।।

प्रतीके च जीवादौ ब्रह्मदृष्टिरुपासनाहार्यज्ञानरूपैव मन्तव्या किरणादौ सूर्यादिदृष्टिवत् न पुनस्तत्त्वज्ञानरूपेत्यर्थः। उत्कर्षादिति उत्कर्षार्थमित्यर्थः। ब्रह्मदृष्ट्या हि जीवानामसंसारित्वादिरूप उत्कर्षो भवतीति। अत्र च हेतुः पूर्वमेवोक्तः 'उपदेशान्तरवदि" त्यनेन। "मनो ब्रह्मेत्युपासीत" "आदित्यो ब्रह्मेत्यादेशः" "सर्वं खल्विदं ब्रह्मे" त्यादिप्रतीकोपासनाद्यविभाग[1] (प्यविभाग) गुणेनाहार्यरूपैव वाच्या जडस्य ब्रह्मत्वानुपपत्तेः। अतस्तद्दृष्टान्तेन तत्सहपठितजीवप्रतीकेऽप्याहार्यदृष्टिरेवानुमीयत इति। तत्त्वज्ञानप्रकरणेषु च जीवादिषु ब्रह्मभेद[2] (ब्रह्माभेद) बोधकश्रुतिस्मृतयोऽविभागलक्षणाभेदमात्रं शरीरशरीरिणोरिवाहुर्ब्रह्ममात्रार्थताबोधनायेति विशेषः। व्यतिहारवाक्यं चात्यन्तसाम्यपरमेवेति प्रतिपादितं "व्यतिहारो विशिंषन्ति हीतरवदि"त्यत्र।

ननु यथा "ब्रह्म वा इदमग्र आसीत्, तदात्मानमेव वेदाहं ब्रह्मास्मी" त्यादिश्रवणादहं ब्रह्मास्मीत्याद्युपासनाऽस्ति, तथा "अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानामि"त्यादिनिन्दाश्रवणात् "सूर्य आत्मा जगतस्तस्थुषश्चे" त्यादिश्रुतेश्चादित्योऽहं चण्डोऽहं[3] (चन्द्रोऽहं) वरुणोऽहमित्यादिकमपि विज्ञानमभ्युपगन्तव्यम्। तत्रापि किं सूर्यादिर्ब्रह्मवदात्मतया द्रष्टव्यो जीवो वाऽदित्यादितयाऽथवास्ति प्रकारभेद इत्याकाङ्क्षायामाह—

## आदित्यादिमतयश्चाङ्ग उपपत्तेः ।। ६ ।।

स्वस्याङ्गे चक्षुरादावेवादित्यादिदृष्टिर्बोध्या, न त्वादित्यादिषु ब्रह्मवदात्मतया न वा जीव आदित्यादितया दृष्टिः, कुतः? उपपत्तेः युक्तेः। आदित्यादयो देवाः स्वस्वांशेषु[4] चक्षुर्यत आदित्याधिष्ठातृभावः सङ्घाते तिष्ठन्ति, अतस्तत्तदङ्श[5] (तत्तदंश) द्वारैवाहमादित्योऽहं चन्द्र इत्याद्युपासनाप्युक्तेत्यर्थः। तथा चैवमेव मनुनापि दृष्टिरुक्ता—

"आत्मैव देवताः सर्वाः सर्वमात्मन्यवस्थितमि" त्युपक्रमात्

"खं सन्निवेशयेत् खेषु चेष्टनस्पर्शनेऽनिलम्।
पक्तिदृष्ट्योः परं तेजः स्नेहयोगं च मूर्तिषु।।"

इत्यादिनेति। अत्रात्मा संघात इत्यर्थः। ब्रह्मणस्तु साक्षादेव प्रकृतिपुरुषाधिष्ठातृत्वेन

---

[1] 'द्यविभाग' इति उ० ह० लि० पु० पाठः।

[2] 'ब्रह्मभेदबोधक' इति उ० ह० लि० पु० पाठः।

[3] 'चंडोहं' इति एकस्मिन् ह० लि० पु० पाठः।
'चद्रोहं' इति अन्यस्मिन् ह० लि० पु० पाठः।

[4] 'चक्षुर्मत आदिव्याधिष्ठाभावः संघाते तिष्ठन्ति' इति एकस्मिन् ह० लि० पु० पाठः।
'चक्षुर्मन आदिव्याधिष्ठाभावः संघाते तिष्ठन्ति' इत्यन्यस्मिन् ह० लि० पु० पाठः।
'चक्षुर्मन आदिष्वधिष्ठातृभावैः' इति पाठो युक्तो भाति।

[5] 'तत्तदंशद्वारैव' इति उ० ह० लि० पु० पाठः।

तयोरात्मतया ब्रह्मणि दृष्टपुरुषे ब्रह्मदृष्टिः पूर्वसूत्रद्वयोक्ता युक्तैवेति भावः। अत्र 'उपपत्ते' रिति हेतुतयोपन्यासादाह—ब्रह्मेत्यादिवाक्याद्युपपत्त्यैव निर्णयो न त्वाधुनिकानामयौक्तिकसर्वशास्त्रविरुद्धरीत्येति गम्यते ॥

इदानीमावृत्तिरूपयोगस्य सहभावाङ्गमाह—

## आसीनः संभवात् ॥ ७ ॥

आसीनः पद्मासनायुक्तः[1] (पद्मासनादियुक्तः) सन्नावृत्तिरूपमैकाग्र्यं कुर्यात्, कुतः ? संभवात्। गमनादौ चित्तविक्षेपादुत्थितस्य देहधारणायासेन चित्तचाञ्चल्यात्, शयानस्य च निरा (निद्रा)[2] गमात् पद्मासनादिनैव तादृशबहुदोषपरिहारसंभवादित्यर्थः ॥

ऐकाग्र्यलक्षणसमाधेरङ्गान्तरमाह—

## ध्यानाच्च ॥ ८ ॥

संभवादिति हेतुरुत्तरत्र सूत्रे चाप्यनुवर्तते। चशब्दः समुच्चये, ध्यानेनापि साधनेनावृत्तिरूपः समाधिः सम्पादनीयः। ध्यानमुत्तरसूत्रे वक्ष्यामः ॥

ध्यानस्यापि साधनमाह—

## अचलत्वं चापेक्ष्य ॥ ९ ॥

चित्तस्याचलत्वं धारणां चापेक्ष्य ध्यानं सम्पादनीयमित्यर्थः। धारणाध्यानयोश्च लक्षणं पातञ्जले क्रमेणोक्तम् "देशबन्धश्चित्तस्य धारणा, तत्र प्रत्ययैकतानता ध्यानम्" इति। इदञ्च सूत्रद्वयं व्यासदेवैर्व्याख्यातम्—देशे नाभिचक्रादौ चित्तस्य बन्धः स्थापनं धारणा, तस्मिन्नेव च देशेऽन्तर्याम्यादिरुपधेया[3] (रूपध्येया) लम्बनस्य चित्तस्यैकतानता प्रत्ययप्रवाहः प्रत्ययान्तरेणापरामृष्टो ध्यानम्। "आवृत्तिरसकृदुपदेशादि" त्यनेनोक्ता चावृत्तिरेतयोः फलं समाधिः। तस्यापि लक्षणं योगसूत्रेणोक्तम् "तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिरि" त्यनेन। एतच्च व्यासदेवैर्व्याख्यातम्—ध्यानमेव ध्येयाकारमात्रनिर्भास[4] (निर्भासं) प्रत्ययात्मकेन स्वरूपे रूपेण[5] (स्वरूपेण) शून्यमिव यदा भवति ध्येयस्वभावावेशात्तदा समाधिरित्युच्यत इति। प्रत्ययात्मकत्वं यदा न भासते तदा ध्यानमेव समाधिर्भवतीत्यर्थः। यमनियमप्राणायामप्रत्याहाराश्च शमदमादिमध्ये पातिन इत्यतः पृथक् सूत्रेण नोक्ता इत्यष्टाङ्गयोगसंग्रहः। समाधिफलं

[1] 'पद्मासनायुक्त' इति उ० ह० लि० पु० अपि पाठः।

[2] 'निद्रागमात्' इति उ० ह० लि० पु० पाठः।

[3] 'धेया' इति उ० ह० लि० पु० पाठः।

[4] 'धेयाकारमात्रनिर्भासं' इति एकस्मिन् ह० लि० पु० पाठः। 'ध्येशाकारमात्रनिर्मासं' इत्यन्यस्मिन् ह० लि० पु० पाठः।

[5] 'स्वरूपे रूपेण' इति उ० ह० लि० पु० पाठः। 'स्वरूपेण' इति सम्यक्।

तु साक्षात्कारनिष्ठा, सा च "तदधिगम उत्तरपूर्वाघयोरि" त्यादिसूत्रेण वक्ष्यत इति विभागो द्रष्टव्यः।

संभवादित्यपेक्षया हेत्वन्तरमाह—

**स्मरन्ति च ॥ १० ॥**

स्मरन्ति च वशिष्ठादयः आसनादीनि ज्ञानाङ्गतया।

यमश्च नियमश्चैव तथा चासनमिष्यते।
प्राणायामस्तथा शक्तेः प्रत्याहारश्च धारणा ॥
ध्यानं समाधिरेतानि योगाङ्गानि तपोधन।
आदौ चत्वारि बाह्यानि तदन्यान्यान्तराणि च ॥
अष्टात्मकमिदं विद्धि पवित्रं पापनाशनम्।
ज्ञानं गुह्यतमं प्रोक्तं कीर्तितं ते तपोधन ॥

इत्यादिनेत्यर्थः। ज्ञायतेऽनेनेति ज्ञानम्। तथा योगसूत्रमपि "योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्याते" रिति ॥

योगाङ्गं देशमपि विचारयति—

**यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥**

यत्र स्थाने गृहे वा वने वा गिरिगुहादौ वा एकाग्रता सम्भवति तत्रैव योगाभ्यासः कर्तव्योऽविशेषात्। नात्रारण्यगिरिगुहादिविशेषनियमो मन्तव्यः। अरण्यगिरिगुहादीनां[१] प्रायिकाभिप्रायेणैव शास्त्रेषूक्तत्वात्, विविक्तदेशे हि व्यासङ्गादिदोषाः प्रायशो न भवन्तीति। न पुनर्यो रुग्न[२] (रुग्ण) उत्तरसाधकसापेक्षो यो वा गृह एव जनकादिवत् समाधियोग्यो भवति तेनाप्यरण्यं गन्तव्यमिति नियमोऽस्तीत्यर्थः। तथा च मार्कण्डेयदत्तात्रेयवाक्यम्—

तत्रैवावपथे स्थित्वा यत्र वा स्थैर्यमात्मनः।
युञ्जीत योगी निर्जित्य त्रीन् गुणान् परमात्मनि ॥

इति। त्रीन् गुणान् सुखदुःखमोहान्।

ननु कियत्कालमभ्यासः कर्तव्य इत्यपेक्षायामाह—

**आप्रायणात् तथाहि दृष्टम् ( तत्रापि दृष्टम् ) ॥ १२ ॥**

आदेहत्यागादेवैवं प्रत्ययावृत्तिः कर्तव्या कृतसाक्षात्कारेणाकृतसाक्षात्कारेण वा।

---

१ 'प्रायिका' इत्येकस्मिन् 'शयिका' इत्यन्यस्मिन् ह० लि० पु० पाठः।
'शपिका' इति मु० पु० पाठः। एषु पाठद्वयमयुक्तम्।
२ 'रुग्न' इत्येकस्मिन् 'रुग्न' इत्यन्यस्मिन् ह० लि० पु० पाठः।

कुतः ? तथा हि दृष्टं "जदुभवत्ादिष्विति"[१] (तदुभयवादिष्विति) यद्वा दृष्टं श्रुतं "स यो ह वै भगवान् मनुष्येषु प्रायणान्तमोंकारमभिध्यायीते" त्यादिनेत्यर्थः । तत्र कृतसाक्षात्कारस्याप्यावृत्तिरसंप्रज्ञातसमाध्यर्थमिति प्रागेव प्रतिपादितं प्रतिपादघाते[२] (प्रतिपाद्यते) चेति । तत्रापि दृष्टमिति पाठे तु तत्राप्रायमपि[३] श्रुतिरस्तीत्यर्थः ।

अथेदानीं ब्रह्मविद्यायाः सद्योमुक्तिरूपं फलं पादशेषे च विचार्यते—

## तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥१३॥

तदेवं यथोक्तसाधनैस्तदधिगमे ब्रह्मात्मत्वसाक्षात्कारे सति उत्तरस्याघस्याश्लेषोऽनुत्पत्तिः पूर्वस्य चोत्पन्नस्य विनाशो भवति । अघशब्दोऽच रन्धकत्व[४](बन्धकत्व) गुणेन कर्ममात्रोपलक्षकम्, कर्म चात्र विहितनिषिद्धाचरणं न तु अदृष्टरूपमतो नोत्तराघस्याप्रसिद्धिः । अश्लेषविनाशौ चादृष्टाख्यव्यापारद्वारकाविति । उक्तप्रतिज्ञायां प्रमाणमाह– तद्व्यपदेशादिति । यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते ।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥
ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा ।

इत्यादिस्मृत्या च ज्ञानस्य पापपुण्यानुत्पत्तिविनाशहेतुत्वव्यपदेशादिभ्यः । अत्रोत्तराघस्य प्रमादाशक्तिसमाध्यादिनिमित्तस्यैवाश्लेषो विवक्षितः, ननु[५] (न तु) वृथाकर्मवृथाविकर्मणोः ।

यस्तु विद्याभिमानेन वेदमार्गप्रवर्तनम् ।
छलजात्यादिभिर्जह्यात् स महापातकी भवेत् ॥

इत्यादिभिः स्कन्दादिवाक्यैर्वृथा स्वातन्त्र्ये विदुषामपि प्रत्यवायसिद्धेः । अन्यथा जनकादीनां कर्मानुष्ठानवैयर्थ्यापत्तेश्च । न च लोकसंग्रहार्थमेव तेषां कर्म स्यादिति वाच्यम्, लोकानां कर्मसंग्रहेणास्य स्वतोऽपुरुषार्थत्वेन तत्रापि प्रत्यवायानुत्पादस्यैव फलत्वात् । "उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहमि" त्यादिवाक्यैर्लोकसंग्रहकर्मणः उपकरणे[६] (अकरणे लोकहिंसाया[७] (हिंसया) प्रत्यवायसिद्धेश्चेति । पूर्वकर्मविनाशश्चात्र क्ले[८]-

---

[१] यथामुद्रितम् उ० ह० लि० पु० पाठो वर्तते ।
"तदुभयवादिष्विति" इति पाठः संभवति ।

[२] यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते ।

[३] यथामुद्रितं पाठः उ० ह० लि० पु० वर्तते । "तत्राप्रायणेऽपि" इति पाठः संभवी ।

[४] 'रंधकत्वगुणेन' इत्युभय ह० लि० पु० पाठः ।

[५] 'ननु' इत्युभय ह० लि० पु० पाठः ।

[६] 'कर्मणोपकरणे' इति उ० ह० लि० पु० पाठः ।

[७] 'हिंसाया' इत्युभय ह० लि० पु० पाठः ।

[८] 'पूर्वकर्म विनाशश्चात्र दाह एवं क्लेशाख्य' इति उ० ह० लि० पु० पाठः ।

शाख्यसहकार्युच्छेदरूपः एवं ( एव ) तदाह "सति मूले तद्विपाको जात्यायुर्भोगाः" इति योगसूत्रेण । $अथवा 'तदाह' इति प्रामादिकः पाठः, 'एवम्' इति वाक्यान्तरारम्भ-सूचकम् । तदनुसारेण "पूर्वकर्मविनाशश्चात्र क्लेशाख्यसहकार्युच्छेदरूपः । एवं "सति मूले तद्विपाको जात्यायुर्भोगाः "इति योगसूत्रेण$ क्लेशे सत्येव प्रारब्धाति-रिक्तकर्मणां विपाकहेतुत्वसिद्ध्याऽविद्योच्छेदादेव कर्मविपाकासंभवात् ज्ञानस्य पूर्व-कर्मनाशकत्वकल्पनावैयर्थ्यात् । अत एव भस्मसात्करणमेव स्मर्यत इति ॥

कर्मनाशे सति किं स्यात्तत्राह—

**इतरस्याप्येवमसंश्लेषः पाते तु ॥१४॥**

एवं कर्मक्षयेण देहपाते तु सतीतरस्यापि सुखदुःखाद्यशेषगुणस्यासंश्रयो विदेह-कैवल्यमिहैव भवतीत्यर्थः । कर्मकृतो हि पुनर्वेदारम्भः[१] (पुनर्देहारम्भः) सुखदुःखा-दिकं च । ततश्च कर्मण्यशेषत उन्मूलिते[२] कुत पुनरौपाधिकोऽपि संसारः स्यादिति । अत एव यद्यप्यविद्यापि ब्रह्मात्मज्ञानान्निवर्तते तथापि पूर्वसूत्रेऽविद्यानिवृत्ति विहाय कर्मनिवृत्तिरेव ज्ञानानुक्ता[३] (ज्ञानादुक्ता), कर्मनिवृत्तेरेव साक्षान्मोक्षहेतुत्वादिति बोध्यम् । अस्माच्च सूत्रादनर्थनिवृत्तिरेव परममुक्तिर्न स्वानन्दावाप्तिरित्यवधारणीयम्, आनन्दावाप्तेरवचनात् अवक्ष्यमाणत्वाच्च । अत एव श्रुतिरपि "वद्भवति[४] (यत्"तरति) शोकमात्मवित्, अशरीरं वावसन्तं प्रियाप्रिये न स्पृशतः" इत्यादिः । एतदपि पञ्च-सूत्र्यां विशेषतो विचारितमस्माभिरिति ॥

ननु पाते त्विति कथमुच्यते ज्ञानोत्तरं पूर्वकर्मदाहे तत्क्षण एव मुक्त्यौचित्यादि-त्याशङ्कायामाह—

**अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥१५॥**

पूर्वे पुण्यपापे विनश्यत इत्युक्तं ते अनारब्धकार्ये एवेति मन्तव्यम्, कुतः ? तदवधेः "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य" इति कर्मविमोचनस्य मोक्षावधित्वश्रवणादित्यर्थः । यदि हि ज्ञानेन तत्क्षणादेव मुक्तिः स्यात् तदा तस्य विदुषः[५]स्तावदेव चिरमिति वचनं न युज्यत इति भावः । तस्मात् कर्मपात[६] (देहपात)-पर्यन्तं प्रारब्धकर्मणा प्रतिबन्धादुत्पन्नज्ञानस्य मोक्षे विलयादुपदेशादिकमप्युपपन्न-मिति बोध्यम् ।

---

$ अयं पाठः टिप्पणी प्रतीयते, प्रमादात् मूले पतित इति भाति ।

[१] वेदारम्भ' इत्येकस्मिन् 'देहारम्भ' इत्यन्यस्मिन् ह० लि० पु० पाठः ।

[२] 'उन्मूलिते कुतः पुन नौपाधिकोऽपि' इति उ० ह० लि० पु० पाठः ।

[३] 'ज्ञानानुक्ता' इत्येकस्मिन् 'ज्ञानादुक्ता' इत्यन्यस्मिन् ह० लि० पु० पाठः ।

[४] यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते ।

[५] 'विद्वयस्तावदेव' इति उ० ह० लि० पु० पाः, 'विदुष' इति सम्यक् ।
'विषयस्तावदेव' इति मु० पु० पाठः ।

[६] 'कर्मपात' इति उ० ह० लि० पु० पाठः ।

ननु ज्ञानेनाविद्यानिवृत्तौ कथं देहधारणं कथं चोपदेशादिः स्यादिति चेन्न, अभिमानस्य देहधारणाद्यहेतुत्वात्, देहसम्बन्धस्य कर्मजन्यत्वात्। अभिमानाभावेऽपि स्वस्वस्यादौ[1] देहधारणात्। प्रवृत्तिनिवृत्त्योश्चेष्टसाधनताज्ञानादिजन्यत्वात्। स्वभोग्यसुखसाधनताज्ञानं स्वभोग्यदुःखाभावसाधनताज्ञानं च प्रवृत्तिकारणमित्युक्तत्वात् पञ्चसूत्र्यामिति। अविद्यादिक्लेशानाञ्च विपाकप्रारम्भ एव कर्मसहकारित्वं योगे प्रोक्तम्।

यत्त्वाधुनिकाः अविद्यायाः सर्वव्यवहारकारणत्वं परिकल्प्य तदुपपत्त्यर्थं जीवन्मुक्तस्याप्यविद्यालेशस्तिष्ठतीति वर्णयन्ति[2] ( तन्न ) अविद्याख्यकारणगतस्य विशेषस्य दुर्वचत्वात्। [3]विस्तरतस्तु ते पञ्चसूत्र्यामेव निराकृता इति।

यत्तु अनेकदेहहेतोः प्रारब्धकर्मणोऽपि न फलसमाप्त्यपेक्षा, यावन्न विमोक्ष्ये इति श्रुत्या वर्तमानदेहपातानन्तरमेव मोक्षावगमादिति, तत्र (तन्न,) प्रारब्धकर्मणो मोचनस्यैव तच्छ्रुत्यर्थत्वात्, सूत्रेऽनारब्धकार्ये इत्येव सामान्यतो वचनात्। तन्मते तेनैव त्वंगेन धर्माधर्मयोरुत्पत्त्या संसारानुच्छेदप्रसङ्गात्। विशेषणप्रक्षेपे तु योगभाष्योक्तं कार्यकोटिप्रारम्भविशेषणमेवोचितं ज्ञानिनां जन्माद्यभाववाक्यानि च प्रारब्धसमाप्त्युत्तरमिति विशेषणीयान्येव, अन्यथा ज्ञानिनां कायव्यूहादिषु जन्ममरणाद्युपपत्तेः[4] (द्यनुपपत्तेः)। एतेन देहारम्भककर्मणो (णां) प्रारब्धत्वे भोगेनैव क्षय इति सिद्धिः॥

ननु यदि तदधिगमादेव कर्मक्षयो देहपातानन्तरं च कारणाभावात् स्वयमेवात्यन्तिको विशेषगुणोच्छेदस्तर्ह्यग्निहोत्रादिना विद्यायाः क उपकारः क्रियेत? उत तस्य पूर्वोक्तं सहकार्यङ्गत्वं सम्भवेदित्याशङ्क्याह—

**अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्॥१६॥**

तस्य ज्ञानस्य यत्कार्यं कर्मक्षयादिस्तदर्थकमेवाग्निहोत्रादिकं मन्तव्यम्, कुतः? तद्दर्शनानङ्ग[5] (तद्दर्शनादङ्गत्व) श्रवणादित्यर्थः। अन्यथा नित्याकरणजप्रत्यवायेन प्रतिबन्धात् कर्मक्षयादिरूपाशेषोच्छेदे विलम्बसम्भवादिति भावः। ननु तस्य प्रतिबन्धकत्वे किं प्रमाणमिति चेन्न, ज्ञानिनामपि कर्मकर्तव्यताश्रवणे[6] (श्रवणेन) प्रतिबन्धानुमानादिति। स्वतन्त्रास्तु तत्कार्यायैव तस्यैव ज्ञानरूपाय कार्यायैवेति व्याचक्षते। तत्र (तन्न) तथा सति "तस्मा" इत्येवारब्धं ( रब्धव्यं ) युक्तत्वादिति॥

मतान्तरं ( मतान्तर ) संवादमत्र प्रमाणयति—

**अतोऽन्यापि ह्येकेषामुभयोः॥१७॥**

---

[1] यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते।

[2] 'वर्णयन्ति अविद्याख्य' इति उ०ह०लि० पाठः। किन्तु मध्ये, तन्न, इति सम्यग् भाति।

[3] यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते।

[4] यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते।

[5] यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते।

[6] यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते।

अतस्तद्दर्शनादेव हि एतेषां[1] एकेषां) मते केवलविद्यापेक्षयाऽन्यापि कर्मसमुच्चिताऽपि विद्या मोक्षसाधनम्। अन्येत्युक्तं विवृणोति—उभयोरिति। कर्मणो[2] (विद्याकर्मणो)र्मुक्तिरिति शेषः॥

दर्शनमेवाह—

**यदेव विद्ययेति हि ॥१८॥**

"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती" ति [3]समुच्चयबोधिका श्रुतिश्च श्रूयत इत्यर्थः।

ननु यदेव विद्ययेत्यादिश्रुत्या विद्यायाः कर्माङ्गत्वमेव लभ्यते न समुच्चय इति चेत्, सत्यं, तथाऽऽप्यव्यवस्थया[4] विद्याकर्मणोरन्योन्यं शेषशेषीभावश्रवणेन सहकारित्वमेव, वाक्यानां जात(ज्ञात)पथेन त्वङ्गाङ्गिभाव इत्यन्येषामाशय इति भावः। भूमिकाभेदेन च तैः सहास्माकं विरोधो नास्तीति प्रागेवोक्तम्॥

इदानीं प्रारब्धफलककर्मणो भोगमात्रैकनाश्यत्वमाह—

**भोगेन त्वितरे क्षपयित्वा संपद्यते ॥१९॥**

अनारब्धकार्ययोः पुण्यपापयोर्विद्यया नाश इत्युक्तम्। इतरे त्वारब्धफलके पुण्यपापे भोगेन क्षपयित्वा निरस्य ब्रह्म संपद्यते समुद्रे नदीवदित्यर्थः। अन्यथा "तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्य" इति विलम्बरचनानुपपत्तेरुपदेष्टृत्वाद्यसंभवादित्यर्थश्चेति भावः। अतएव स्मृतिर्ज्ञानिप्रकरणस्था "उपभोगेन पुण्यानामपि क्षये" इति।

इति ब्रह्ममीमांसायां विज्ञानयतिविरचिते विज्ञानामृताख्य ऋजुभाष्ये चतुर्थाध्यायस्य प्रथमः पादः॥



[1] 'एतेषां' इति उ० ह० लि० पु० पाठः।

[2] यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते।

[3] 'समुच्चयबोधिका श्रुतिश्च पूयम, इत्येकस्मिन् 'पूयत' इत्यन्यस्मिन् ह०लि०पु०पाठः। 'समुच्चयऽधिकाश्रुतिश्च श्रम' इति मु० पु० पाठोऽसङ्गतः।

[4] 'अव्यवस्थया' इति उ० ह० लि० पु० पाठः। 'अव्यवस्थाया' मु० मु० पाठः।

## अथ द्वितीयः पादः

पूर्वपादे यथोक्तसाधनैर्निर्गुणब्रह्मविद्यापरिपाकवत ऐहिकी परममुक्तिर्विचारिता। इदानीं सगुणब्रह्मविदुषो पक्वतत्वज्ञानस्य[1] च क्रममुक्तिर्विचारणीया पादत्रयेण। तत्राप्ययं विभागः—द्वितीयपादेन सम्पत्त्युत्क्रान्ती विचारयिष्यति, तृतीयेन चार्चिरादिक्रमेण ब्रह्मलोकगतिं, चतुर्थेन वैश्वर्यं (चैश्वर्यं) भोगानन्तरं तत्रैव मुक्तिमिति। तत्रादौ यथोक्त[2] विद्वदविद्वत्साधारणी मरणकालीना ब्रह्मसम्पत्तिर्ब्रह्मलोकगतिप्रसङ्गेनेव[3] (नैव) विचार्यते—

### वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥

अत्र पूर्वपादशेषसूत्रात् "सम्पद्यत" इत्यनुवर्तते। अथान्तकाले वाक् वाणीन्द्रियं मनसि स्ववृत्तिरहितं सम्पद्यते, दुग्धे जलवदविभक्तं लक्षणानन्यत्वं प्राप्नोति, वक्तुमिच्छत्येव न तु वक्तुं शक्नोतीति यावत्। कुतः ? दर्शनात्। दृश्यते हि मरणकाले हस्तादिव्यापारानुमितवृत्तिके मनसि वक्तुमिच्छतोऽपि वागिन्द्रियस्तम्भः। तथा शब्दाच्च "अस्य सोम्य पुरुषस्य प्रयतो वाङ् मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामि" तीत्यर्थः।

ननु सूत्रे विशेषवचनात् कथं सगुणादिविद्यापरत्वमत्रावगम्यत इति चेत् "अमृतत्वं चानुपोष्य" इति वक्ष्यमाणसूत्रादित्यवेहि। इयं च सम्पत्तिः कारणलयरूपो विनाशो न भवति। "वहन्ति नु संपरिष्वक्त" इत्यत्र लिङ्गशरीरस्य लोकान्तरगमनवचनात्। एवम्[4] नभ्युपगन्तृवैशेषिकादिनिरासार्थकत्वाद् वा। सर्वकारणनाशे वक्ष्यमाणगमनानुपपत्तेश्च। तथा मन आदीनां रागाद्यकारणत्वेन तेषु $तद्विलयासंभवाच्च। कित्वविभागेन मोदकादिवदेकपिण्डतामात्रम् "अविभागो वचनादि" ति वक्ष्यमाणसूत्रादिति बोध्यम्। एवमेव सम्पत्तिरुत्तरसूत्रेष्वपि बोध्या।

यद्यपि श्रुतावेव वाचो मनसि लयोऽसंदिग्धस्तथाप्यस्य सूत्रस्यानुवादमात्रस्योत्तरसूत्रे प्रयोजनसत्त्वान्न वैयर्थ्यम्, एवमनभ्युपगन्तृवैशेषिकादिनिरासार्थकत्वाद्वा।

---

[1] यथा मुद्रितं पाठ एकस्मिन् ह० लि० पु० वर्तते।
'विदुषोपक्वतत्वज्ञानस्य' इति अन्यस्मिन् ह० लि० पु० पाठः।
'विदुषोऽकृततत्त्वज्ञानस्य" ति पाठो भवेत्।

[2] "विद्वदविद साधारणी" इति मु० पु० पाठः।
"विद्वदविदुव साधारणी" इति उ० ह० लि० पु० पाठः।

[3] 'नैव' इति उ० ह० लि० पु० पाठः।

[4] 'अयं पाठ उ० ह० लि० पु० वर्तते।

$ 'तद्विलम्बा' इति मु० पु० पाठः।

## अत एव सर्वाण्यनु ॥ २ ॥

यत एव श्रुतिप्रत्यक्षाभ्यां वागिन्द्रिय ( वागिन्द्रियस्य ) मनस्यविभागरूपा सम्पत्तिः सिद्धा, अत एव दृष्टान्तादपराणि च त्वगादीनि श्रुत्यनुक्तान्यपि सर्वाणीन्द्रियाणि वाचोऽनु पश्चान्मनसि संपद्यन्त इत्यनुमीयत इत्यर्थः । तथा च त्वगादिलये दर्शनशब्दयोरभावेऽपि न क्षतिरिति भावः । इत्थं च स्वप्नादिदृष्टान्तेनाप्यनुमेये स्वप्नमनोरथादौ हि रागा ( वागा ) दिवृत्तयो वचनस्पर्शश्रवणादीनि मनस्येव भवन्ति नैन्द्रियकाणीति ॥

## तन्मनः प्राण उत्तरात् ॥ ३ ॥

तद्विना न सर्वेन्द्रियकं मनः प्राणे वृत्तिमति संपद्यते गन्ध इव वायौ, कुतः ? उत्तरात् . "मनः प्राण" इत्युत्तरवाक्यादित्यर्थः । इदं च स्वस्व[1] ( स्वप्न ) दृष्टान्तेनानुमेयं, स्वस्वप्ने[2] ( स्वप्ने ) हि मनोवृत्तिरपि न तिष्ठति केवलप्राणवृत्तिदर्शनात् । प्राण एव मनसो वृत्तिनिरोधस्तु प्राणवृत्त्यैवावस्थानादनुमीयत इति ॥

## सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥

स प्राणस्तदध्यक्षे तत्स्वामिनि प्राणिनि जीवे संपद्यते, प्राणनापाननादिरूपवृत्तिरहितः संतिष्ठति[3] ( संस्तिष्ठति ), कुतः ? तदुपगमादिभ्यः । "एवमेवेतमात्मानमन्तकाले सर्वे प्राणा अभिसमायान्ति तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनुत्क्रामन्तं[4] ( प्राणमुत्क्रामन्तं ) सर्वे प्राणा अनूत्क्रामन्तीति" प्राणस्य जीवोपगमनानुगमनादिश्रुतेरित्यर्थः । यद्यपि जीवस्यापि वृत्तिस्तदा नास्ति "सविज्ञानो भवति सविज्ञानमेवानूत्क्रामति" इति श्रुतिस्तु स्वरूपचैतन्या[5] प्रत्ययपरत्वेनोपपद्यते, तथापि तादात्म्येन तत एवाविर्भावाज्जीवे प्राणलय उच्यते, प्राणस्योत्क्रमणं च बुद्ध्यौपाधिकमिति । नन्वेवं "प्राणस्तेजसि" इत्युदाहृतवाक्यविरोधः, न, जीवद्वारा प्राणस्य तेजसि लयेऽपि तद्वाक्योपपत्तेरिति ॥

## भूतेष्वतः श्रुतेः ॥ ५ ॥

अतः परं स प्राणसंयुक्तोऽध्यक्षो बुद्धिसंभिन्नः पञ्चभूतेषु सूक्ष्मेषु संपद्यते, क्रियादिरूपा भूतवृत्तिरेव तिष्ठति न त्वन्येषां वृत्तिरिति, कुतः ? श्रुतेः "विज्ञानघन एवैभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ती" ति श्रुतेरित्यर्थः ।

---

[1] 'स्वस्वसदृष्टान्तेन' इति उ० ह० लि० पु० पाठः

[2] 'स्वस्वप्ने इति' उ० ह० लि० पु० पाठः ।

[3] 'संष्ठिति' इति उ० ह० लि० पु० पाठः

[4] यथामुद्रितं पाठ उ० ह० लि० पु० ।

[5] 'स्वरूपचैतन्याप्रत्ययपरत्वेनेति' उ० ह० लि० पु० पाठः ।

जीवस्य सोपकरणस्य भूतेषु लयः शुक्राद्यात्मकभूतेभ्योऽभिव्यक्त्याऽनुमीयते। एतेन "प्राणस्तेजसी" ति वाक्यं जीवद्वारत्वेनैवोपपादनीयम् ॥

ननु प्राणस्तेजसीति वाक्याज्जीवद्वारेणापि प्राणस्य लयः केवलतेजस्येव युक्तः, ननु[1] पञ्चभूतेभ्य इति बहुवचनस्य व्यक्त्यभिप्रायेणाप्युपपत्तेरित्याशङ्क्य परिहरति—

## नैकस्मिन् दर्शयतौ हि ॥६॥

शरीरत्यागकाले जीवो नैकस्मिन्नेव तेजस्यवतिष्ठते, हि यस्मात् श्रुतिस्मृती तथा दर्शयतः, यथाश्रुतिः—"तद्यथा पेशस्कारी पेशसो मात्रामपादायान्यन्नवतरं कल्याणतरं रूपं तनुत एवमेवायमात्मेदं शरीरं देहाद[2] (हित्वा) न्यद्रूपं कुरुत" इत्यनन्तरं "स वा अयमात्मा पृथिवीमय आपोमयस्तेजोवायुमय[3] ( तेजोमयो वायुमय ) आकाशमय" इत्यादिः। स्मृतिश्च—

अण्व्यो मात्राऽविनाशिन्यो दशार्धानाञ्च याः स्मृताः।
ताभिः सार्धमिदं सर्वं संभवत्यनुपूर्वशः ॥

इत्यादिरित्यर्थः। पेशस्कारी स्वर्णकारः, अपादाय विच्छिद्य। ननु श्रुत्यन्तरे क्वायं तदा पुरुषो भवतीति प्रश्ने तौ ह यदूचतुरित्युत्तरेण मरणकाले जीवस्य कर्माश्रयतावचनात् कथं भूताश्रयपरत्वं स्यादिति चेन्न, तत्र कर्माश्रयतावचनेन कर्मतन्त्रतामात्रस्याभिप्रेतत्वात्। अविभागसम्बन्धेन द्रव्यस्य गुणाश्रितत्वासंभवात् उभयाश्रितत्वेनाप्यविरोधाच्चेति ॥

ननु "अस्य सोम्य पुरुषस्य प्रयतो वाङ् मनसि संपद्यत" इत्यादिवाक्यं "तद्यथा पेशस्कारी" त्यादिवाक्यं च विद्याफलपरं च न भवति, तैः कथं विदुषो मरणप्रक्रियाऽवधार्यत इत्याशङ्कायामाह—

## समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥७॥

आसृत्युपक्रमात् आलोकान्तरगमनारम्भाद् विद्वदविदुषोः मरणकालीना संपत्तिः समानैव भवति, कुतः ? "अमृतत्वं चानुपोष्य" चो हेतौ, इदममृतत्वम् अनुपोष्य" विवेकज्ञानाल्लिङ्गशरीरमदग्ध्वैव[4] (मदग्ध्वैव) जायतेऽतो लिङ्गशरीरसत्त्वादविदुष इव विदुषोऽपि यथोक्तसंपत्तिर्युक्ता। प्रक्रियाभेदकल्पने गौरवात् क्रममुक्तौ प्रक्रिया-

---

[1] अत्रत्यः पाठस्त्रुटितो भाति।
'ननु पञ्चभूतेषु, एभ्यो भूतेभ्य' इति उ० ह० लि० पु० पाठः।
'न तु पञ्चभूतेषु, एभ्यो भूतेभ्य' इति पाठो युक्तः।

[2] 'शरीरहेतान्यद् रूपं कुरुत' इत्येकस्मिन् ह० लि० पु० पाठः।
'शरीर हेत्या न्यद् रूपं कुरुत' इत्यन्यस्मिन् ह० लि० पु० पाठः।
'शरीरं हित्वा' इति सम्यग् भाति।

[3] यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते।

[4] 'ज्ञानाल्लिङ्गशरीरमदग्ध्वैव' इति उ० ह० लि० पु० पाठः।

न्तराश्रवणाच्चेत्यर्थः । अर्चिरादिसंपत्तिव्यावर्तनाय आसृत्युपक्रमादित्युक्तम् । नन्विदं सूत्रं "तानि परे तथेत्याह" इत्यागामिसूत्रानन्तरमेवोचितं तेनैव सूत्रेण साधारणसंपत्ति-विचारसमाप्तेरिति चेन्न, "परेऽव्यये सर्व एकीभवन्ती" इत्यादिफलश्रवणेन परसंपत्तौ समानत्वसंशयाभावात् ॥

इदानीं वक्ष्यमाणगमनोपपत्त्यर्थं यथोक्तलिङ्गशरीरस्य भूतपर्यन्तस्य मरणकाले विनाशो नास्तीति प्रतिपादयति –

## तदाऽऽपीतेः संसारव्यपदेशात् ॥८॥

तद् भूतपञ्चकं करणप्राणजीवाश्रयभूतं सूक्ष्मदेहाख्यम् आप्रपीतेः[1] (आ अपीतेः) प्राकृतप्रलयपर्यन्तं जीवन्मुक्तानां तिष्ठति न तु स्थूलदेहेन सह नश्यति, कुतः ? संसार-व्यपदेशात् स्वर्ग(सर्ग)काले जीवस्य पुनः पुनर्गमनागमनरूपसंसरणव्यपदेशात् श्रुतिस्मृ-त्योरित्यर्थः । न हि विभोर्जीवस्य स्वतो गगनादि युक्तं, नापि निराश्रयस्य करणप्राणादेर्ग-तागती (गतागते) संभवत इति । सूक्ष्मत्वेन रागद्रव्यवदाश्रयवियोगे नाशप्रसङ्गादिति । तथा चोक्तं सांख्ये "गतिश्रुतिरप्युपाधियोगादाकाशवदि" ति,

> चित्रं यथाश्रयमृते स्थाण्वादिभ्यो विना यथा छाया ।
> तद्वद् विना विशेषैर्न तिष्ठति निराश्रयं लिङ्गम् ॥

इति च । विशेषैर्भूतैरित्यर्थः ।

> सूक्ष्मा मातापितृजाः सह प्रभूतैस्त्रिधा विशेषाः स्युः ।
> सूक्ष्मास्तेषां नियता मातापितृजा निवर्तन्ते ॥

इति तद्वाक्यादिति ॥

सांख्यवदेवाचार्योऽपि लिङ्गशरीराश्रयभूतं भूतपञ्चकं सूक्ष्ममेवाह—

## सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥९॥

तच्च करणाद्याश्रयभूतपञ्चकं सूक्ष्मं, कुतः ? प्रमाणतस्तथोपलब्धेः । यदि हि स्थूलं स्यात् सूक्ष्मनाडीभिर्निष्क्रमणं न स्यात्, तस्माच्च योगिनां शिलायन्त्रप्रवेश इत्यादिप्रमाणैः सूक्ष्मत्वसिद्धेरित्यर्थः । अतएव च गमनकाले पार्श्वस्थैर्न दृश्य इत्युपपन्नम् ॥

सूक्ष्मत्वावधारणस्य फलमाह—

## नोपमर्देनातः ॥१०॥

यत एव सूक्ष्ममतः स्थूलशरीरस्योपमर्देन दाहादिना नोपपद्यत[2] (नोपमृद्यत) इति शेषः ॥

---

[1] 'आप्रपीतेः' इति उ० ह० लि० पु० पाठः ।

[2] 'नोपद्यत' इति एकस्मिन् 'नोपमत्यत' इत्यन्यस्मिन् ह० लि० पु० पाठः ।

लिङ्गशरीराश्रयसूक्ष्मदेहे प्रमाणान्तरमाह—

अस्यैव चोपपत्तेरेष उष्मा ॥११॥

अस्यैव च सूक्ष्मदेहस्य तेजःप्रधानस्योष्मा स्पर्शेन स्थूलशरीरेषूपलभ्यते न तु स्थूलशरीरस्य, कुतः ? उपपत्तेः, मृते शरीरेऽनुलम्भादित्यर्थः। तथा च श्रुतिः—"उष्म एवष जीविष्यन् शीतो मरिष्यन्नि" ति ॥

प्रतिषेधादिति चेन्न शारीरात् ॥१२॥

ननु अपीति पर्यन्तं लिङ्गशरीराधारभूतपञ्चकमेव पुनः पुनः संसरतीति न युक्तम प्रतिषेधात, [1]अविद्विषोऽपि (अविदुषोऽपि) काण्डे उत्क्रान्तिप्रतिषेधात् "यत्रायं पुरुषो म्रियते तदस्मात प्राणा उत्क्रामन्त्याहो नेति, नेति होवाच याज्ञवल्क्योऽत्रैव समवलीयन्ते स उच्छ्‌वयत्याध्मातो मृतः शेत" इति। तस्मात् सामान्यतः सर्वपुरुषसाधारण्येनोत्क्रान्त्यभावान्न संसरणं सूक्ष्मदेहस्येति चेन्न, शारीराज्जीवादेवायं प्राणानामुत्क्रान्तिप्रतिषेधो न शारीरात्[2] (शरीरात्)। अस्मादित्यत्र, अत्रैव समवलीयन्त इत्यत्र चेदमा प्रकृतपुरुषस्यैव परामर्शादित्यर्थः। मरणकाले जीवस्य प्राणवियोगो नास्तीति तच्छ्रुत्यर्थः। तस्मादविद्विषः[3] (अविदुषः) करणवर्गस्य शरीरादुत्क्रान्तिरस्त्येवेति ॥

प्राणस्य देहादनुत्क्रमणे बाधकमप्याह—

स्पष्टो ह्येकेषाम् ॥१३॥

एकेषां शाखिनां शरीरादुत्क्रमो हि स्पष्ट एवास्ति, यथा "चक्षुषो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रामती" त्यर्थः ॥

स्मर्यते च ॥१४॥

स्मर्यते च गीतादौ व्युत्क्रमो, यथेन्द्रियाणि प्रकृत्य—

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ इति,
अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष बलाद् यमः। इत्यादि च।

नन्वेवं परब्रह्मविदः परममुक्तावपि गतिश्रवणादुत्क्रान्तिः स्यात्, यथा भारते—शुकः किल वैयासकिर्मुमुक्षुरादित्यमण्डलमभिप्रतस्थे ततश्च पित्रा चानुगम्याहूतो भो इति प्रतिशुश्रावेति। न च तदप्यभ्युपगन्तुं शक्यते "न तस्य प्राणा उत्क्रामन्ती"—त्यादिश्रुतेः। तथा च यथा सा गतिश्रुतिर्गौणत्वादिनोपपादनीया तथैवाविद्विषो[4]

[1] 'अविद्वषोपि' इति उ० ह० लि० पु० पाठः।
[2] 'शरीरात्' इति उ० ह० लि० पु० पाठः।
[3] 'अविद्वष' इति उ० ह० लि० पु० पाठः।
[4] 'तथैवाविद्वषो' इति उ० ह० लि० पु० पाठः।

( विदुषो )ऽप्युत्क्रान्तिश्रुतिरुपपाद्यतामिति, मैवं, सशरीरस्यैव शुकस्य योगबलेन विशिष्टदेशप्राप्तौ तदनन्तरमेव देहोत्सर्गस्य तत्रावगमात् ।

शुकस्तु मारुताच्छीघ्रां गतिं कृत्वान्तरिक्षगः ।
दर्शयित्वा प्रभावं स्वं सर्वभूतगतोऽभवत् ॥

इत्युत्तरवाक्यात् । नापि तदानीं परमुक्तिसिद्धा सर्वात्मभावस्य हिरण्यगर्भादिवल्लिङ्गशरीरेऽप्यभ्युपपत्तेः । शुकस्य परब्रह्मवित्त्वेऽपि तदानीं कषायेण ज्ञानापरिपाकतो ज्ञानपरिपाकार्थमादित्यमण्डलप्रदेशस्य वाक्यशेषेण श्रवणाच्च । ततश्च कियद्विलम्बेन विदेहकैवल्यमिति । अन्यथा

"अन्तरिक्षचरः श्रीमान् वायुभूतः स्वनिश्चितः ।
अ(आ)स्थितो दीर्घमध्वानं पावकार्कसमप्रभः" ॥[1]

"इत्यादिना वायुभूतत्वाद्वि[2] ( दि ) वचनानुपपत्तेरिति ॥

कामशेषसत्त्वे निर्गुणविद्विषो[3] ( विदुषो ) विचार्यते—

## तानि परे तथा ह्याह ॥ १५ ॥

तानि जीवाधारभूतानि पञ्चभूतानि परे परमात्मनि मायाख्योपाधिशबले हृदयावच्छिन्ने—

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥

इत्यादिवाक्योक्तं सम्पद्यते[4] ( वाक्योक्ते सम्पद्यन्ते ) वृत्तिशून्यतया पुलीनानि[5] ( प्रलीनानि ) भवन्ति यथा गृहाकाशे धूमः । कुतः ? तथाह्याह, हि यस्मात् तथा श्रुतिराह "तेजः परस्यामि" ति । स्मृतिरपि—"आत्मानमन्विच्छ गुहां प्रविष्टं पितामहास्ते दुर्धगताः पितचेति[6] ( ऽग्रगताः पिता च" इति ) । अस्यां श्रुतौ स्पर्शेनोपलभ्यतया तेजःप्राधान्यात् तेजःशब्दो भूतपञ्चकवाचीत्याशयः ।

अथवा "स यथा सोम्य वयांसि वासो वृक्षं सम्प्रतिष्ठन्ते एवं ह वै तत्सर्वं परे आत्मनि संप्रतिष्ठन्ते पृथिवी च पृथिवीमात्रा चापश्चापोमात्रा च" इत्यादिप्रश्नोपनिषद् यथाहेत्यर्थः । तत्र पञ्चानामपि भूतानां लयकथनात् ।

---

१ 'पाकार्क' इति मु० पु० एकस्मिन् ह०लि०पु० च पाठः ।
'पावकार्क' इत्यन्यस्मिन् ह० लि० पु० पाठः ।

२ 'द्वि' इत्युभय ह० लि० पु० पाठः 'दि' इति सम्यक् ।

३ विद्वषो इत्युभयत्र ह० लि० पु० पाठः ।

४ 'वाक्योक्तसंपद्यते' इति उ० ह० लि० पु० पाठः

५ 'पुलीनानि' इति उ० ह० लि० पु० पाठः ।

६ 'तेद्यगता' इति उ० ह० लि० पु० पाठो वर्तते । एतद्रीत्या 'तेऽग्रगताः पिता चे'ति पाठः संभवति ।

ननु रागादिभूतानां मनआदिपरमात्मपर्यन्तेषु या सम्पत्तिरुक्ता सा कीदृशीत्याकाङ्क्षायामाह—

अविभागो वचनात् ॥१६॥

आकाशे वायोरिवाविलक्षणानन्यत्वमेव सम्पत्तिः न त्वेकत्वं, भिन्नयोरखण्डतारूपैक्यासंभवात्। नापि विनाशो गतिश्रवणात्, अत्र प्रमाणमाह—वचनादिति। "तेजः परस्यां देवताया" मित्यस्याऽव्यवधानेनाविभागस्यैव मधुसमुद्रादिदृष्टान्ते श्रुत्या स्वयं वचनात्। "यथा सोम्य मधु मधुकृतो नितिष्ठन्ति नानात्ययानां वृक्षाणां रसान् समवहारमेकतां रसं गमयन्ति ते यथा तत्र विवेकं न लभन्तेऽमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीति एवमेव खलु सोम्येमाः सर्वाः प्रजा सति सम्पद्य न विदुः सति सम्पद्यामह इति, त इह व्याघ्रो वा वृको वा दंशो वा मशको वा यद् यद् भवन्ति तत्तदाभवन्ति स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" त्यादिभि (इत्यादिभि) रित्यर्थः।

$अत्र हि वाक्ये भेदेन सतामेव सोपकरणजीवानां पृथग्वृत्तिता (पृथगवृत्तिता)-लक्षणमविभागं स्वस्मिन् श्रवणमात्रं§ (संमिश्रणमात्र) दृष्टान्तानुसारेण प्रतीयते, "ते यथा तत्र विवेकं न लभन्त" इति च स्फुटमेव विवेकमत्र[1] (अविवेकमात्र) रूपमैक्यं प्रतीयत इति। नन्वेवं तत्त्वमसीति वचनमपि स्वस्मिन् श्रवणपरमेव स्यादिति कथं ब्रह्मण आत्मत्वसिद्धिरिति चेन्न, एतदात्म्यमिदं सर्वमित्यनेनैव स्वस्मिन् श्रवणस्य (संमिश्रणस्य) प्रमतया तत्त्वमित्यस्य ब्रह्मात्मतापरत्वावगमात्। स आत्मेत्यनेन च साक्षितालक्षणमात्मत्वमुक्तम् तत्त्वमसीत्यनेन तु सम्बोध्यसंघाताद्यध्यक्षत्वमित्यपौनरुक्त्यम्।

किं च अविद्यानिवर्तकब्रह्मात्मताप्रतिपत्त्यर्थमेवाविभागरूपसंपत्त्यादि बोध्यते, अन्यथा तत्र ज्ञानप्रकरणे संपत्त्यादिप्रतिपादने फलासंभवात् ब्रह्मात्मताया एवाभ्यर्हिततया सर्ववेदान्तेष्वौत्सर्गिकार्थत्वाच्च। 'तत्त्वमसि' वाक्यस्याविभागार्थकत्वेऽपि "एष त आत्मा स म आत्मेति विद्यादि" त्यादिश्रुत्या ब्रह्मणि सर्ववस्तूनामात्मत्वं संत्स्यत्येवेति।

एतेन तत्त्वमसिवाक्यस्याखण्डतापरत्वं न भवतीत्यवधारितं भवति, श्रौतदृष्टान्तात् सूत्राच्चाविभागलक्षणैकात्म्यस्यैव 'तत्त्वमसि' वाक्यार्थोपपादकत्वावगमादिति। अत एव वशिष्ठेनापि मोक्षावस्थायां भिन्नयोर्जीवब्रह्मणोरविभागरूपमात्मैक्यमुक्तम् "सा मुक्तिर्ब्रह्मणा चैक्यमनैक्यं प्राकृतैर्गुणैरि"त्यनेन। अत्र प्राकृतैर्गुणैर्यादृशमैक्यं मोक्षकाले जीवस्य निवर्तते ब्रह्मणा सहापि तादृशमात्मैक्यं तदा भवतीति गम्यते, तच्चाविभाग इति। अतस्तदेकवाक्यतया सर्वलक्षणैक्यस्याविभागरूपतावधारणीया। तस्माज्जीवब्रह्मणोर-

---

$ 'अत्र हि वाक्ये भेदेन' इति 'पृथग् वृत्तिता' इति च पाठौ उ० ह० लि० पु० वर्तेते।

§ 'सम्मिश्रणमात्रं दृष्टान्त' इति उ० ह० लि० पु० पाठः। अयमेव पाठो युक्तो भाति।

[1] 'विवेकमात्र' इति उ० ह० लि० पु० पाठः।

विभागरूप एवाविभागः[1] (इति अविभाग) सूत्रात् सिद्धम्। एतच्च पञ्चसूत्र्यां प्रपञ्चितमिति दिक्।

आधुनिकास्तु "तानि परे तथा ह्याह, अविभागो वचनादि" ति सूत्राभ्यां परब्रह्मविद आत्यन्तिकीं सम्पत्तिं परममुक्त्याख्यामाचार्यः प्रतिपादयतीत्याह। तत्र (तन्न), क्रममुक्तिप्रकरणमध्ये सूत्रद्वयस्य परममुक्तिकल्पनौचित्यात्[2] (कल्पनानौचित्यात्)। तेजः परस्यां देवतायामिति विषय[3] (विशेष) वाक्ये (वाक्येन) "सति सम्पद्य न विदुः सति सम्पद्यामहे" इत्यादिवाक्येन च मरणस्वस्त्रयोरेव[4] (सुषुप्त्योरेव) ब्रह्मसम्पत्तेरुक्ततया सूत्रस्यापि प्रकरणानुसारेण तत्परत्वस्यैवौचित्याच्च। परममुक्तावप्यविभागस्त्विष्यत एव, स आत्यन्तिक इत्येव विशेष इति। यदपि तैरुक्तम्, अविभागशब्दोऽत्र औपाधिकभेदनिवृत्तिवाचीति, तदपि न, लक्षणापत्तेः पूर्वाचार्यविरोधाच्च। तथा रागादीनां मनआदिषु तदानीमप्यन्योन्याभावसत्त्वाच्चेति॥

विद्वदविद्वत्साधारणी सम्पत्तिर्विचारिता, अथेदानीं विद्वदुत्क्रान्तिर्विचार्यते—

**तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्**
**तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १७ ॥**

तदेवं हृदवच्छेदेन ब्रह्मण्यविभागापन्नो विद्वान् तेनैव हार्देन हृदयस्थेन ब्रह्मणा "स्वष्टुपासितेनानुगृहीतो ब्रह्मलोकप्रायणेच्छाकृतिभ्यां विषयीकृतः सन् मूर्धन्यया शताधिकया ब्रह्मनाड्या रश्म्यनुसारी भवतीत्युत्तरेणान्वयः। यद्यप्यविदुषामपीश्वराधिष्ठानादेव निष्क्रमणं तथापि तेष्वनुग्रहो नास्तीत्यन्यद्वारेणैव निष्क्रमणमित्यनुग्रहशब्देन प्रतिपादितम्। अस्मिंश्चार्थे हार्दविद्यास्था श्रुतिः प्रमाणम् "शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ती" ति। ईश्वरानुग्रहस्य कारणमाह—विद्यासामर्थ्यादिति।

ननूपासनासामर्थ्याच्चेदीश्वरोऽनुग्राहकस्तर्हि विदेहकैवल्यमेव कथं न ददा[6] (ददाति) इत्यत्राह—तच्छेषगत्यनुस्मृतियोगाच्चेति। विद्याशेषभूता तदङ्गभूता या गत्यनुस्मृतिर्गत्यनुचिन्तनं तत्प्रार्थनमिति यावत्, ब्रह्मलोकमभिसंभवामीत्यादिश्रुत्युक्तम्।

---

[1] अत्र पाठे सन्देहः प्रतिभाति इति मु० शा० टिप्पणी।
"जीवब्रह्मणोविभागरूप एवाविभागसूत्रात् सिद्धम्" इति उ० ह० लि० पु० पाठः।

[2] 'कल्पनानौचित्यात्' इति उ० ह० लि० पु० पाठः।

[3] 'इति विषयवाक्ये' इति उ० ह० लि० पु० पाठः।

[4] 'मरणस्वस्त्रयोरेव' इति उ० ह० लि० पु० पाठः।
'मरणसुषुप्त्योरेव' इति पाठ उचितो भाति।

[5] 'स्वष्टुपासितेन' इति उ० ह० लि० पु० पाठः।
'सुष्ठूपासितेन' इति पाठो युक्तो भाति।

[6] 'ददा' इति उ० ह० लि० पु० पाठः।

आशुतोष अवस्थी
अध्यक्ष
श्री नारायणेश्वर वेद वेदांग समिति (उ.प्र.)

तद्‌योगात् सम्बन्धात् ब्रह्मलोककामनया ब्रह्मलोकगतिमेव ददाति न सद्योमुक्तिमित्यर्थः। समर्थोऽयमीश्वरो "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" इत्यादिश्रवणान्निर्गुणकामनया निर्गुणोपासनाकार्ये[१] सद्योमुक्तिं ददातीत्याशयः।

ईश्वरस्यानुग्रहप्रकारमाह—तदोकोग्रज्वलनं तत्प्रकाशितद्वार इति। ब्रह्मण ओकः स्थानं हृदयं तस्य हृदयस्याग्रे भौतिकं ज्वलनमाधा[२]वापस्थप्रदीपवत् तिष्ठति, तेन ज्वलनेनेश्वरविदारितनाडीद्वारो विद्वानित्यर्थः। यद्यपि सर्वेषामेव हृदयाग्रज्वलनेन द्वारविदारणान्निष्क्रमणं भवति "तस्य हैतस्य हृदयस्याग्रं द्योतते, तेनैवात्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्य" इत्यविशेषश्रुतेः, तथापीश्वराधिष्ठितज्वलनमूर्ध्वमेव विदुषां गच्छतीति विशेषः॥

## रश्म्यनुसारी ॥१८॥

ब्रह्मरन्ध्रेण निष्क्रामति विद्वान् ब्रह्मनाडीसमुद्रा[३](समुत्था) दित्यरश्मीनामनुसारी भवतीत्यर्थः। तदनुगतस्तै रश्मिभिस्त्वयं सुषुम्नामार्गेण प्राणान् सञ्चार्य ब्रह्मरन्ध्रं भित्त्वा गमनं तु प्रकारान्तरमेव, तद्भिन्नैवात्र विद्यैताद्दशगतिरुच्यत इति विशेषः। निष्कामानामपि सगुणनिर्गुणविद्यायाम[४](मु)पनिबद्धायामेव गतिर्दृष्ट्यनुसारतः कल्प्यत इति ताभिरेकीभूय पृथिव्यादिरसवद्देहान्निष्क्रामतीति भावः। तथा हि हार्दविद्यायां श्रुतिः "अथ या एता हृदयस्य नाड्य" इत्यादिना सप्रपञ्चं नाडीभिरादित्यसम्बन्धमाह—"अथ यत्रैतस्माच्छरीरात् क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते ओमिति वा होर्ध्वमीयते स यावन् क्षिप्येन्मनस्तावदादित्यं गच्छत्येतद् वै लोकं द्वारं विदुषामि" त्यादि। तस्माद् रश्मिद्वारोत्क्रामतीति सिद्धम्॥

## निशि नेति चेन्न, सम्बन्धस्य यावद्देहभावित्वात् दर्शयति च ॥१९॥

ननु दिवसे सूर्यरश्मिभिर्देहसम्बन्धान्न[५] तदन्नगत्या जीवस्य निष्क्रमणं स्यान्न तु निशीति चेन्न, नाडीभिः[६] सूर्यरश्मिसम्बन्धस्य यावद्देहभावित्वात्। रात्रावपि निदाघादिना देहे सूर्यरश्म्यनुगमात्। "आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा"

---

[१] 'निर्गुणोपासकार्येव' इति उ० ह० लि० पु० पाठः।
'कार्येण' इति युज्यते पाठः।

[२] यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते।
'आधारास्थप्रदीपवत्' इति पाठो युक्तो भाति।

[३] यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते।

[४] 'विद्यायामपनिबद्धायामिथमेव गतिर्दृष्टानुसारत' इति उ० ह० लि० पु० पाठः।

[५] 'सम्बन्धान्नदन्नगत्या जीवस्य निष्क्रमणं स्यान्न तु निशी'ति उ० ह० लि० पाठः।

[६] 'नाडीतिः सूर्यरस्मि' इति उ० ह० लि० पु० पाठः असम्यक्।

इत्यादिकर्मणः[1] (क्रमेण) सौरतेजसां देहा[2]रम्भकत्वाच्च। तथा श्रुतिरप्येतमर्थं दर्शयति "अमुष्मादादित्यात् प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते ते अमुष्मिन्नादित्ये सृप्ता" इति दहरविद्यास्थवाक्येनेत्यर्थः। ताः मरीचयः। न च रात्रौ मृतस्य गत्यर्थं दिनप्रतीक्षैव कथं नोच्यत इति वाच्यम् "स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छेदि"त्यनेनाविलम्बावगमादिति। तस्माद् दिवैव विदुषो निष्क्रान्तिर्भवतीति न नियमः॥

## अतश्चायनेऽपि दक्षिणे ॥२०॥

अतो दिवा नियमाभावात् तत्सहपठितस्योत्तरायणस्यापि न नियमः इति दक्षिणायनेऽपि विदुष उत्क्रान्तिर्भवतीत्यर्थः। [3]प्रसूर्यरश्मीनामेव गमनद्वारत्वात्तेषां च सार्वकालिकत्वादिति॥

ननु यदि रात्रिदक्षिणायनयोर्ब्रह्मनाड्योराक्रमणं ब्रह्मविदामस्ति तर्हि—

यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ॥

इत्यनन्तरं दिवसरात्र्युत्तरायणदक्षिणायनादिविभागेनानावृत्त्यावृत्तिविभागः स्मृतो विरुध्येतेति तत्राह—

## योगिनः प्रति च स्मर्यते स्मार्ते चैते ॥२१॥

केवलप्राणाभ्यासिनः स्वच्छन्दमृत्यवोऽत्र योगिनः न तु ब्रह्मविदः, [4]ब्रातयोगिनः प्रत्येव गीतादौ कालविशेषः स्मर्यते, योगस्य[5] प्राणाभ्यास एवाधिक्येन सिद्धेः। तदुक्तं वासिष्ठे—

असाध्यः कस्यचिद् योगः कस्यचिद् ज्ञाननिश्चयः।
द्वौ प्रकारौ ततो देवो जगाद परमः शिवः॥
प्रकारौ द्वावपि प्रोक्तौ योगशब्देन यद्यपि।
[6]रूढिमायातः प्राणयुक्तावसौ दृशमिति॥

---

[1] 'क्रर्मण' इति उ० ह० लि० पु० पाठः, 'क्रमेण' इति सम्यक्।

[2] 'देहारंष्टकत्वात्' इति 'देहारष्टकत्वात्' इति च पाठौ ह० लि० पस्तकयोः स्तः। 'देहारम्भकत्वात्' इति भाति।

[3] 'प्रसूर्य' इति उ० ह० लि० पु० अपि पाठः।

[4] 'त्रान योगिन' इति उ० ह० लि० पु० पाठः, 'प्राणयोगिन' इति पाठो भाति।

[5] 'योगशस्मस्य' इति उ० ह० लि० पु० पाठः असमञ्जसः।

[6] यथामुद्रितं पाठ एकस्मिन् ह० लि० पु० वर्तते।
'तथापि रूढिमायातः' इत्यादिपाठः अन्यस्मिन् ह० लि० पु० वर्तते।

ननु रात्र्यादिशब्दैस्तदभिमानिदेवता एव गृह्यन्त इति वक्ष्यति, तत्कथं स्मृतावपि रात्र्यादिकाले मरणसिद्धिस्तत्राह—स्मार्ते चैते इति। एते च रात्रिदक्षिणायने कालौ स्मृतावुक्तौ न त्वभिमानिदेवते इति। स्मृतौ हि तत्कालं वक्ष्यामि भरतर्षभेत्यादिवाक्येभ्यो दिवसोत्तरायणादीनां कालरूपत्वमवगम्यते। श्रुतौ च कालवाचकशब्दाभावात्, "अर्चिषोऽहरह्न आपूर्यमाणपक्षमि" त्यादिपञ्चमीभिः क्रमावगमाच्च न कालपरता, मरणकाले दिनयज्ञादौ[1] (रात्र्यादौ) क्रमासंभवात्। किन्तु नेतृदेवतापरत्वमेव। तदेतत् "आतिवाहिकस्तल्लिङ्गात्" इत्यत्राचार्य एव वक्ष्यति। स्मृत्युक्तानां चाग्निज्योतिर्धूमानां कालोपाधितया कालत्वमुपपादनीयम्। भीष्मस्य ब्रह्मविद्यासत्त्वेऽपि योगगत्यर्थं कालप्रतीक्षणं युक्तं, भूयसि भूय इति न्यायेन साधनप्राचुर्ये फलाधिक्यसिद्धेरिति।

इति ब्रह्ममीमांसायां विज्ञानयतिकृते विज्ञानामृताख्य ऋजुभाष्ये
चतुर्थाध्यायस्य द्वितीयः पादः।

---

[1] 'दिनयज्ञादौ' इति उ० ह० लि० पु० अपि पाठः।

## अथ तृतीयः पादः

ईश्वराधिष्ठानाद् ब्रह्मनाड्योत्क्रान्तस्य देवयानपथा ब्रह्मलोकगतिस्तृतीयपादेन विचारणीया—

### अर्चिरादिना तत्प्रथितेः ॥१॥

देवयानवर्त्मनि न्यूनाधिकपर्वभेदेनापाततो विरुध्यमानानि वहूनि श्रुतिवाक्यानि सन्ति। तत्राचार्योऽधिकपर्वप्रतिपादकश्रुतीः सङ्गमयन् मार्गपर्वणां प्रथनमारभते। सर्वोऽपि ब्रह्मलोकप्रेप्सुरर्चिरादिनैव मार्गेण रश्मीननुसरतीत्यन्वयः। कुतः ? तत्प्रथितेः, "तेऽर्चिषमभिसंविशन्ती"ति श्रुतिप्रसिद्धेरित्यर्थः। तथा च "स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकमि" ति कौषीतकिश्रुतावग्निशब्दोऽर्चिर्लोकपर्याय इति भावः ॥

मार्गस्याद्यपरिबोधं[1] (पर्वविरोधं) परिहृत्य मार्गमध्यस्थानां पर्वणां क्रमविरोधं परिहरति—

### वायुमब्दादविशेषविशेषाभ्याम् ॥२॥

यद्यपि "तेऽर्चिषमभिसंविशन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान् मासेभ्यः संवत्सरं संवत्सरादादित्यमि" ति वाक्ये संवत्सरादब्दादनन्तरमेवादित्यं गच्छतीति श्रूयते, तथापि "यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खण्डे तेन स ऊर्ध्वमाक्रमते स वादित्यमागच्छती" ति श्रुत्यन्तरे वायुप्रत्तेन चक्रवात्याच्छिद्रेणादित्यलोके गमनदर्शनात् अब्दादनन्तरं वायुं गच्छतीति प्रत्येतव्यम्, कुतः ? अविशेषविशेषाभ्यां सामान्यविशेषाभ्यामित्यर्थः। विरोधभञ्जनार्थं संवत्सरादादित्यमिति सामान्यवाक्यस्य वाय्वनन्तरादित्यगमनबोधकेन विशेषवाक्येन सहैववाक्याद्वौचित्यादिति[2] (सहैकवाक्यत्वौचित्यादिति)।

यच्च "मासेभ्यो देवलोकादादित्यमि"ति श्रुत्यन्तरं तत्रापि सामा[3]न्या(न्य) विशेषाभ्यां देवलोकशब्दो वायुलोकवचनः प्राप्तेभ्य[4] ( मासेभ्य ) इति चाब्दद्वारेति बोध्यमिति भावः ॥.

### तडितोऽधिवरुणः सम्बन्धात् ॥३॥

---

[1] यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते।

[2] 'वाक्यद्वौचित्यात्' इति उ० ह० लि० पु० पाठः।

[3] 'सामान्यविशेषाभ्यां' इति पाठ उ० ह० लि० पु० वर्तते।

[4] यथामुद्रितं पाठ एकस्मिन् 'मासेभ्य' इत्यन्यस्मिन् ह० लि० पु० पाठः।

यच्च[१] (यश्च) कौषीतक्युक्तो वरुणलोके[२] (लोकः) स तु "आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतमि"ति श्रुत्यन्तरोक्तात् तडिल्लोकादधि उपरि प्रत्येतव्यः। कुतः? सम्बन्धात्—जलाधिष्ठानाद् वरुणस्य विद्युतश्च सन्निकर्षादित्यर्थः। तदेव[३] (तदेवं) सर्वश्रुतीनामेकवाक्यतयाऽयं मार्गक्रमोऽवधारितः—आदावग्निलोकापरनामकमर्चिः, तत्राऽहः[४] (ततोऽहः), ततः शुक्लपक्षः, तत उत्तरायणम्, ततो वत्सरः, ततो लोकापरनामा वायुलोकः, तत आदित्यः, ततश्चन्द्रः, ततो विद्युत्, ततो वरुणः, तत इन्द्रः, ततः प्रजापतिः, ततो ब्रह्मलोक इति ॥

एवं मार्गव्यवस्था कृता। तत्रायं संशयः—किमेतान्यर्चिरादीनि वर्त्ममात्राणि सोपानवत्, किं वा विदुषां भोगभूमयः, आहोस्वित् गन्तॄणां नेतारो देवरूपा इति। तत्र सिद्धान्तमाह—

## आतिवाहिकस्तल्लिङ्गात् ॥४॥

अतिवहन्त्युपासकानित्यातिवाहिकाश्चेतनाः एव देवा अर्चिरादिशब्देनोक्ताः कुतः? तल्लिङ्गात्। "अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान्" इति प्रार्थनारूपलिङ्गात्। तथा "चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयती" त्यनेन सह पाठाल्लिङ्गादपीत्यर्थः ॥

ननु सर्वमार्गपर्वस्वातिवाहिककल्पयायां गौरवमित्याशङ्कायामाह—

## उभयव्यामोहात्तत्सिद्धेः ॥५॥

गन्तुरुपासकस्य देवयानपितृयानयोरुभयोः पथोर्व्यामोहाद् विशिष्यापरिचायकानां[५] (विशिष्य परिचायकानां) सर्वत्रातिवाहिकानां देवानां[६] सिद्धेरित्यर्थः। लोकशब्दश्च स्थानेष्विव तद्वासिजनेष्वप्युपपद्यत एव। तत[७] लोकगमनं तत[८] लोकेषु भोगश्चाचार्येण(न)[९] निराक्रियते श्रुतिस्मृतिभ्यस्तयोरप्यवगमात्।

---

[१] यथामुद्रितम् उ० ह० लि० पु० पाठः।

[२] 'लोके' इति उ० ह० लि० पु० पाठः, 'लोकः' इति सम्यक्।

[३] 'तदेवं' इति उ० ह० लि० पु० पाठः।

[४] 'तत्रोऽहः' इति उ० ह० लि० पु० पाठः।

[५] यथामुद्रितं पाठ एकस्मिन् ह० लि० पु० वर्तते।
'विशिष्यापरिचयात् तत्परिचायकानां' इति अन्यस्मिन् ह० लि० पु० पाठः। स च युक्ततरः।

[६] 'देवदत्तानां सिद्धेः' इति एकस्मिन् ह० लि० पु० पाठः।
'देवदूतानां सिद्धेः' इति अन्यस्मिन् ह० लि० पु० पाठः, सोऽपि सुष्ठु भाति।

[७] 'तत्तल्लोकगमनं' इति उ० ह० लि० पु० पाठः। इमौ पाठौ युक्तौ प्रतिभातः।

[८] 'तत्तल्लोकेषु' इति उ० ह० लि० पु० पाठः। इमौ पाठौ युक्तौ प्रतिभातः।

[९] 'आचार्येण निराक्रियते' इति उ० ह० लि० पु० अपि पाठः।

ननु भोगार्थं विलम्बे "स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छति" इति श्रुति-विरोध इति चेन्न, वर्त्मनि भोगमनिच्छोरुपासकस्य क्षिप्रगमनसम्भवादिति । ननु यदि मार्गे देवावुभावप्युपासकेन गन्तव्यौ तर्हि किमित्यग्निलोकादिशब्देषु च देवतात्व-माश्रीयत इति चेन्न, उपासनार्थं देवतानामेव श्रुतिभिर्वचनौचित्यात् । ब्रह्मलोक-जिगमिषोर्वर्त्मलोकप्रतिपादने चोत्कटप्रयोजनाभावादिति ॥

विद्युदनन्तरेष्वातिवाहिकेषु विशेषमाह—

**वैद्युतेनैव ततस्तच्छ्रुतेः ॥६॥**

विद्युल्लोकीयेनामरपुरुषेण सहैव ततस्तदुत्तरातिवाहिका वरुणादयो देवा नेतारो न तु केवला एव वरुणादयः, कुतः ? उक्तश्रुत्या विद्युल्लोकस्थपुरुषस्य ब्रह्मपर्यन्तने-तृत्वश्रवणादित्यर्थः ॥

**कार्यं बादरिरस्य गत्युपपत्तेः ॥७॥**

स वेद्यतमं मानवं पुरुषं प्रकृत्य "स एनान् ब्रह्म गमयती" ति गत्यन्ते श्रूयते । तत्र संशयः—किं कार्यं हिरण्यगर्भाख्यमपरं ब्रह्म गमयति, उत परं कारणं मुख्यं ब्रह्मेति । तत्रादौ स्वमतमाह—कार्यमपरं ब्रह्म गमयतीत्याचार्यबादरिर्मन्यते । कुतः ? अस्य गत्युपपत्तेः कार्यब्रह्मण एव गन्तव्यत्वोपपत्तेरित्यर्थः । कारणब्रह्मणः सर्वत्रैकतया तत्प्राप्तये गमनानौचित्यात् कार्यस्य हिरण्यगर्भस्य तु सूर्यवत्[1] (प्र)प्रदेशविशेष एवाधिक्यं व्याप-कत्वन्तु किरणादित्वाद् वा सूर्यस्येवेति तत्प्राप्तये गमनमुचितमिति । दृष्टं च सर्वदेह-व्यापिनोऽपि जीवस्य मूर्ध्न्येवाधिष्ठानातिरेक इति । अथवा अस्य वैद्युतपुरुषस्य कार्य-ब्रह्मलोक एव गमनसंभवादित्यर्थः ॥

**विशेषितत्वाच्च ॥८॥**

प्रजापतेः सतारेश्मप्रपद्य[2] (सभां वेश्म प्रपद्य) इत्यनेन अवश्चहवैन्यश्चान्तुवौ (अरश्च ह वै ण्यश्चार्णवौ) ब्रह्मलोके तृतीयस्यामितो दिवीत्यादिना च ब्रह्मलोकस्य विशेषितत्वात् कार्यं ब्रह्मैव गन्तव्यम् । तथा ब्रह्मलोकान् गमयतीत्यादिना ब्रह्मलोकस्य बहुत्वेन विशेषितत्वादपि कार्यं ब्रह्मैव गन्तव्यम्, ब्रह्मविष्णुरुद्रीयादिरूपेण सत्यलो-कस्यावान्तरतो नानात्वात् न च ब्रह्माण इत्येत इति स्मरणाच्च । परब्रह्मणो गन्तव्यत्वे तु सभादिकं भूर्लोकात्तृतीयत्वं बहुत्वं च नोपपद्येतेत्यर्थः ॥

ननु कार्यपरत्वेऽपि ब्रह्मशब्दो नोपपद्यते कार्यस्य परिच्छिन्नत्वेनाब्रह्मत्वात्, "जन्माद्यस्य यत" इत्यनेन कार्यस्यैव ब्रह्मशब्दार्थतावधारणाच्चेत्याशङ्कायामाह—

**सामीप्यात्तु तद्व्यपदेशः ॥९॥**

---

[1] 'सूर्यवत् प्रदेशविशेष' इति उ० ह० लि० पु० पाठः ।

[2] यथामुद्रितं पाठ उ०ह०लि०पु० अपि वर्तते । अति विश्रृङ्खलोऽत्र मुद्रितो मूलग्रन्थः ।

परब्रह्मणः साक्षात्कार्यत्वेनाल्पन्यूनशक्तित्वेनाविर्भूतब्रह्मात्मभावेन च ब्रह्मसामीप्यात् कार्ये हिरण्यगर्भे ब्रह्मव्यपदेश इत्यर्थः । "एतद्वै सत्यकाम परमपरं च ब्रह्म यदोंकारः, आब्रह्मभुवनाल्लोकात् पुनरावर्तिनोऽर्जुन" इत्यादिश्रुतिस्मृत्योः । कार्येऽपि ब्रह्मशब्दप्रयोगदर्शनादिति भावः । तर्हि नानार्थ तैवास्त्विति चेन्न, "तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते,

यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकम् ।
तद्विसृष्टः स पुरुषो लोके ब्रह्मेति गीयते ॥

इत्यादिश्रुतिस्मृतिभ्यां कारणेऽव्यक्त एव ब्रह्मशब्दस्य मुख्यत्वावधारणादिति ॥

ननु मुख्यब्रह्मोपासकस्य तत्प्राप्त्यभावे सत्युपासनानुरूपफलबोधकश्रुत्यादिविरोध इत्याशङ्कायामाह—

## कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥१०॥

कार्यब्रह्मलोकप्रलयकाले तदध्यक्षेण हिरण्यगर्भेण सहातो ब्रह्मलोकात् परं कारणं ब्रह्म संपद्यते, कुतः ? अभिधानात् । "ते ब्रह्मलोकेषु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे" इत्यादिश्रुतिभिरित्यर्थः । ब्रह्मणः परं तस्यान्तकाले सति अपरस्य कार्यब्रह्मणोऽमृतात्ते ब्रह्मलोकगास्तत्रैव परिपक्वज्ञाना मुच्यन्त इति श्रुत्यर्थः ॥

## स्मृतेश्च ॥११॥

ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥

इत्यादिस्मृतेश्च कार्यब्रह्मणा सह लोकस्थानां ज्ञानिनां परब्रह्मप्राप्तिरित्यर्थः । अतएव कूर्मपुराणे शिववाक्यमपि —

येषां हि वशमापन्ना माया मे पारमेश्वरी ।
लभन्ते निर्मलं शुद्ध निर्गुणन्ते मया सह ॥
न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ।
प्रसादान्मम योगीन्द्रा एतद्वेदानुशासनम् ॥

## परं जैमिनिर्मुख्यत्वात् ॥१२॥

जैमिनिस्त्वाचार्यः "स एतान् ब्रह्म गमयती" ति वाक्ये परं कारणमेव गमयतीति मन्यते, कुतः ? मुख्यत्वात् परब्रह्मण्येव ब्रह्मशब्दस्य मुख्यत्वात्, गौणमुख्ययोश्च मुख्ये संप्रत्यय इत्यर्थः ॥

## दर्शनाच्च ॥१३॥

तथा दर्शनात् "सत्यं ज्ञानमनन्तं ब्रह्म, यो वेद निहितं गुहायां, सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते" ति श्रवणात् । किं च परमेव ब्रह्म उपासको दृष्टवान् अतो दर्शनानुरूपफलं युज्यते "तं यथा यथोपासत" इत्यादिवाक्येभ्यः । अपि

च "तयोर्ध्वमायन्नमृतत्वमेती"—ति गतिपूर्वकत्वममृतत्वं दृश्यते, अमृतत्वं च परब्रह्मप्राप्तावेवोपपत्तेः, कार्यस्य क्षयित्वादित्यर्थः ॥

नन्वेवं "प्रजापतेः सभां वेश्म प्रपद्य" इत्याद्यभिसन्धिने(ना)पि पद्यत इत्याशङ्क्याह—

**न च कार्ये प्रतिपत्त्यभिसन्धिः ॥१४॥**

प्रतिपत्त्यभिसन्धिः फलविधया प्राप्यत्वाभिप्रायः, स च कार्ये ब्रह्मलोके न मन्तव्यः किं तु कारणब्रह्मण्येव। यस्तु "प्रजापतेः सभां वेश्म प्रपद्य" इत्यभिमानः, स च वर्त्मविधयैवार्चिराद्यभिमानादित्यर्थः। एतेन "तृतीयस्यामितो दिवी" त्यादिरप्यर्चिरादिलोकवद् वर्त्मविधयैवोपपादनीय इति भावः। ऐश्वर्यविशेषं च कारणत्वस्याप्युत्तरपादे उपपादयिष्यामः ॥

तदिदं बादरिजैमिन्योर्मतद्वयमुपासकभेदेन समञ्जसीकरोत्याचार्यः—

**अप्रतीकालम्बनान्नयतीति बादरायण उभयथाऽदोषात् तत्क्रतुश्च ॥१५॥**

ये ब्रह्मविष्णुरुद्रान् चतुर्विंशतितत्त्वानि वा ब्रह्मदृष्ट्योपासते ते प्रतीकोपासकाः प्रतीकालम्बनाः प्रतीकशब्दस्याङ्गवाचित्वात्। ये तु ब्रह्म विशेष्यं कृत्वा तैर्विशेषणैरुपासते ये वा केवलब्रह्म विद्वांसः तेऽप्रतीकालम्बनाः। तयोर्मध्येऽप्रतीकाम्बनानेव विदुषो जैमिन्युक्तं परं ब्रह्म नयति ब्रह्मलोकात्तत्रत्यदेवगणः। अर्थात् प्रतीकालम्बनात्[1] (नान्) हिरण्यगर्भादिषु ब्रह्मोपासकान् नाद[2] (नाश) युक्ते कार्यब्रह्मलोके भोगार्थं प्रलयपर्यन्तं स्थापयतीति बादरायणो मतद्वयव्यवस्थायै मन्यते, कुतः? उभयथाऽदोषात्। एवं सत्युभयप्रकारेणोभयमताविरोधादिति।

नन्वत्र किं प्रमाणम्? तत्राह—तत्क्रतुश्चेति। तत्क्रतुरित्यनेनांशेंऽशांशिनी[3] (नांशेनांशिनी) श्रुतिगृहीता (श्रुतिर्गृहीता)। "स यथाकामो भवति तत्क्रतुर्भवति तत्कर्म कुरुते तदभिसंपद्यते तदेव शुक्रः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्ये" ति श्रुतिश्चास्तीत्यर्थः। अथवा चो हेतौ, तत्क्रतुत्वादित्यर्थः। तथा च प्रतीकेषु ब्रह्मोपासकानां प्रतीकसाहित्येनैव फलमुचितम्, कारणब्रह्मविशेष्यकोपासनादिमतां च तत्साहित्येनेति भावः।

ननु ब्रह्मलोकगतान् न परं ब्रह्म नयति देवगण इत्यत्र किं प्रमाणमिति चेत्, मोक्षधर्म एव—

सत्त्वं वहति शुद्धात्मन् पदं नारायणं प्रभुम्।
प्रभुर्वहति शुद्धात्मा परमात्मानमात्मनः ॥

---

[1] 'नान्' इति उ० ह० लि० पु० पाठः।

[2] 'नादयुक्ते' इत्येकस्मिन् ह० लि० पु० पाठः।
'वादयुक्ते' इत्यन्यस्मिन् ह० लि० पु० पाठः।

[3] 'इत्यनेनांशेनांशिनी श्रुतिगृहीता' इति उ० ह० लि० पु० पाठः।

परमात्मानमासाद्य तद् भूमा(ता)यतमानसाः ।
अमृतत्वाय कल्पन्ते न निवर्तंति तद् विधिः ।। इति ।

अत्र हि "ततस्तान् स्वकृतीन् ज्ञात्वा सूर्यो वहति रश्मिभिरि" त्युपक्रम्य वर्त्मपरम्परया देवानां नारायणपर्यन्तानामातिवाहिकत्वमेवोक्तम् । अतो नात्र प्राकृतप्रलयकालीनो नारायणेन सह प्रवेशो विवक्षित इति । ननु परब्रह्मणो व्यापकत्वात् तत्प्राप्तये गतिर्विफलेत्युक्तं सत्युपपत्तेरित्यत्रेति चेन्न, आवरणेभ्यो बहिर्गत्वा प्रकृष्टभोग्यं भुञ्जानः कारणद्रव्यापूरेण हिरण्यगर्भादीन् प्रत्यपीश्वरवदेवेष्ट इत्यस्यैव फलत्वसंभवात् । शास्त्रावगतस्यार्थस्य स्वर्गादिवत् तर्काविषयत्वेऽप्यक्षतेश्चेति ।।

नन्वेवं परब्रह्मप्राप्त्यर्थमपि गत्यङ्गीकारे सति "न तस्य प्राणा उत्क्रामन्ती"-त्यादिविरोध इत्याशङ्क्याह—

विशेषं च दर्शयति ।।१६।।

सकामाकामभेदेनोत्क्रान्त्यनुत्क्रान्तिरूपं विशेषं च विदुषां दर्शयति यथा इति तु कामयमानान्[1] इत्यन्तेन ब्रह्मान्तां गतिमुक्त्वाह "अथाकामयमानां[2] (नो) योऽकामो-निष्काम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येती" ति, तथा "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत" इति च । निष्कामस्यैवैहिकामुष्मिकमुक्तिमुक्त्वाह—शतं चैका च हृदयस्य नाड्यस्तासामि" त्यादिना क्रममुक्तिमर्थात् सकामस्येति ।

नन्वेकस्मात् परब्रह्मोपासनात् कथं फलद्वैतमिति चेत्, ज्ञानपरिपाकापरिपाकरूपविशेषादुपासनाभेदद्वये देहविवेकेनात्मतया च परं ब्रह्मोपास्यते तदाऽविद्याकामादिनिवृत्त्या सद्योमुक्तिः फलम् । यदि ऐश्वर्यादिमदुपास्योपरागेण तटस्थतया वा तदेव परं ब्रह्मोपास्यते तदैश्वर्यरागेणाविद्यानिवृत्त्यभावेन च कारणगर्भान्महैश्वर्यं फलमिति ।

आधुनिकास्तु "अप्रतीकालम्बनान्नयती" त्यादिसूत्रद्वयेनाधिकरणान्तरमेव रचयन्ति । तत्र मन आदि प्रतीकोपासकानां ब्रह्मलोकगमनं भवति न वेति संशये सिद्धान्त आदिसूत्रार्थः । द्वितीयसूत्रार्थस्तु "यावन्नाम्नो गतिमि" त्यादिना श्रुतिर्नामादिप्रतीकानामुपासनेषु ब्रह्मलोकभिन्नं फलविशेषं च दर्शयतीति, तन्न, अस्मिन्नर्थे मतान्तरानुसारेण बादरायण इत्यस्य वैयर्थ्यात्, मतद्वयविरोधपरिहारार्थकत्वे सम्भवति यथाश्रुतार्थपरित्यागेनाधिकरणान्तरकल्पने गौरवाच्चेति ।।

इति ब्रह्ममीमासायां विज्ञानयतिकृते विज्ञानामृताख्य ऋजुभाष्ये
चतुर्थाध्यायस्य तृतीयः पादः ।।

---

[1] 'कामयमान्' इति उ० ह० लि० पु० पाठः, 'मान' इति स्वरान्त पाठः सम्यक् ।
[2] 'अथाकामयमानो' इति उ० ह० लि० पु० पाठः सम्यक् ।

## अथ चतुर्थः पादः

परब्रह्मान्ता गतिर्विचारिता। इदानीं तत्रत्यं फलं परीक्षणीयम्, तत्र चैश्वर्य्यं पश्चात् परीक्षणीयम्। विषयवाक्यानुसारेणाभ्यर्हिततया चादौ मुक्तिः परीक्ष्यते—

### सम्पद्याविर्भावः स्वेन शब्दात् ॥१॥

पादद्वयोक्तप्रकारेण ब्रह्मलोकं सम्पद्य स्वेन जीवस्य तात्त्विकचिन्मात्ररूपेणाविर्भावो भवति ब्रह्मलोकीयभोगानन्तरमिति शेषः। कुतः? शब्दात्। प्रजापतीन्द्रसंवादे "एवमेवैष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत" इति श्रुतेरित्यर्थः। "यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति एवं मुनेर्विजानत आत्मा भवति गौतमे" त्यादिश्रुत्यनुसारादिति भावः। "परं ज्योतिः परं ब्रह्म ज्योतिषामपि तज्ज्योति"रिति वाक्यात्।

अत्राविर्भावशब्देनौपाधिकधर्मनिवृत्तिरेव मुक्तिरिति सूचितम्। स्मर्यते च "मुक्तिर्हित्वान्यथाभावं स्वरूपेण व्यवस्थितिः"। वस्तुतस्त्वत्राविर्भावो ज्ञानमेव। तथा चानेन सूत्रेण ब्रह्मलोकगतस्य मोक्षहेतुर्ज्ञानपरिपाक उक्तः। द्वितीयसूत्रेण च मोक्षो वक्ष्यत इति विभागः॥

ननु तत्र गत्वा मुक्तो भवतीत्यत्र का युक्तिस्तामाह, अथवा ज्ञानपरिपाकात् किं तरतीत्याकाङ्क्षायामाह—

### मुक्तः[1] प्रतिज्ञानात् ॥२॥

ब्रह्मलोके मत्वा[2] (गत्वा) योनिस्थानसंज्ञादिसाद्गुण्येन सत्त्वप्रकर्षात् प्रतिज्ञानं प्रतिपादं वा नानात्मानात्मनां तत्त्वज्ञानं भवति, तस्मात् प्रतिज्ञानान्मुक्तो भवतीत्यर्थः। अथ वा श्रुत्या "न च पुनरावर्तते न च पुनरावर्तते" इति प्रतिज्ञाकरणान्मुक्तो भवतीत्यर्थः॥

ननु संप्रसाद एव परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत इति श्रूयते न तु जीव इत्याशङ्कायामाह—

### आत्मा प्रकरणात् ॥३॥

संप्रसादश्चात्रात्मैव मन्तव्यः, कुतः? प्रकरणात्। "यत्रैतत् स्वतः[3] समस्तः संप्रसन्नः स्वप्नं न विजानातीत्येष आत्मेति होवाचे"त्यनेनादौ जीवस्य प्रक्रान्तत्वात्। धर्मधर्म्यभेदेन च धर्मिशब्देन धर्मा लक्ष्यन्ते सम्प्रसादरूपधर्मेण पूर्वप्रक्रान्तत्वात् तेनैव

---

[1] 'मुक्तं' इति उ० ह० लि० पु० पाठः। 'परिज्ञानात्' इति मु० पु० पाठः।

[2] 'मत्वा' इत्येकस्मिन् 'गत्वा' इत्यन्यस्मिन् ह० लि० पु० पाठः।

[3] 'स्वप्तः इति उ० ह० लि० पु० पाठः।

धर्मेण जीवस्योपन्यास इति बोध्यम् । अस्यां श्रुतावात्मशब्दस्तु परमात्मवाची प्रक्रम-स्त्वसौ जीव एव आत्मेति वचनादिति ।।

ननु किमियं मुक्तिरपि जीवन्मुक्तिक्रममुक्त्यादिरूपा उतात्यन्तिको लय इत्याकाङ्क्षायामाह—

## अविभागेन दृष्टत्वात् ।।४।।

समुद्रेण नदनदीनामिवाविभागेन लक्षणानन्यत्वरूपेणात्यन्तिकलयरूपैव मुक्तिः, कुतः ? दृष्टत्वात् । "ते ब्रह्मलोकेषु परान्तकाले परामृताः तत्परिमुच्यन्ति सर्वे, यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय तथा विद्वान् नामरूपाद् विमुक्तः परात्परं पुरुषमुपैति दिव्यमि" त्यादिवाक्यैरित्यर्थः ।।

## ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ।।५।।

"स्वेन रूपेणाभिनिष्पद्यत" इत्यत्र स्वशब्दो जीवस्य स्वरूपवाचीति स्वयं व्याख्यातवान् । जैमिनिस्त्वाचार्यः स्वेन ब्राह्मेण रूपेणैश्वर्येणाविर्भावं वदति न तु जीवेन, कुतः ? उपन्यासादिभ्यः । स्वशब्दस्य जीवब्रह्मोभयसाधारण्येऽपि वाक्य-शेषे परब्रह्मण एवैश्वर्योपन्यासात् "स तत्र पर्येति यक्षन् क्रीडन् रममाण इति, मनसै-तानकामानपश्यन्नमते[1] (रमते) य एते ब्रह्मलोक" इति च । तथा "स सर्वांश्च कामा-नाप्नोती" ति फलदर्शनात् । तथा गत्यर्वैयर्थ्याय चेत्यर्थः[2] । जीवानामपि पर-मेश्वरतुल्यैश्वर्यशक्तिवद्[3] विद्याकामकर्मावृत्तावद्धकालेऽप्यस्तीति प्रतिपादनायाविर्भाव-वचनम् । तथा च ब्रह्मणः सदृशेनैश्वर्येण सत्यसंकल्पत्वादिना जीवोऽभिनिष्पद्यत इति श्रुत्यर्थः ।।

## चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ।।६।।

औडुलोमिस्त्वाचार्य आह—स्वेन ब्राह्मेण चैतन्यतन्मात्रेण रूपेणाविर्भावो भवति, कुतः? उभयोरपि ब्रह्मजीवयोश्चिदात्मकत्वादित्यर्थः । अत्र शब्दतन्मात्रादिवन्निर्विशेष-चैतन्ये चिति तन्मात्रशब्द इति ।।

तदेवास्य मतत्रयस्याविरोधं स्वमाह—

## एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ।।७।।

एवमपि मतभेदेऽपि त्रयाणामविरोधं बादरायणो मन्यते । कुतः ? उपन्या-सात्, मतत्रयस्यैव श्रुत्या वाक्यभेदेनोपन्यस्तत्वात् । तर्हि श्रुतावेवाविरोधः कथं

---

[1] 'रमते' इति उ० ह० लि० पु० पाठः ।

[2] अयं पाठ उ० ह० लि० पु० वर्तते ।

[3] 'ऐश्वर्यशक्तिव विद्याकामावृतावद्ध' इत्येकस्मिन ह० लि० पु० पाठः ।
'ऐश्वर्यशक्तिश्च विद्याकामावृतावद्ध' इत्यन्यस्मिन् ह० लि० पु० पाठः ।
अत्रत्यपाठे सन्देहः प्रतिभातीति, इति मु० शा० टि० ।

स्यात् ? तत्राह—पूर्वभावादिति । जैमिन्युक्तस्यैश्वर्यस्य व्यासाद्युक्तमोक्षात् पूर्वमुत्पत्तेरित्यर्थः । वादर्यौडुलोम्युक्तयोश्च पक्षयोर्विरोध एव नास्ति । जीवस्य स्वरूपचैतन्येनाविर्भावो हि व्यासपत्रे[1] (पक्षे) औपाधिकरूपनिवृत्तिमात्रम्, ब्रह्मचैतन्येनाविर्भावस्तु तन्मात्रताव्यवहारयोग्यत्वमित्येव कालकृत्वात्* । व्यासस्य द्वितीयपक्षेऽपि ज्ञानस्यापि मोक्षात् पूर्वमुत्पत्तेरविरोध इति ॥

इदानीं मुक्तेः पूर्वभाविन्यैश्वर्ये "स तत्र क्वचिदि" त्यादिश्रुत्युक्तेऽयं विशेषश्चिन्त्यते—किं ब्रह्मलोके विदुषो भोगः संकल्पमात्रेणैव भवति, किन्मात्रेवराज्यसाधना-[2]( कि वा विषयार्जनादिसाधना ) न्तरापेक्षयेति तत्र सिद्धान्तमाह—

संकल्पादेव तु तच्छ्रुतेः ॥ ८ ॥

तत् जैमित्युक्तं मुक्तेः पूर्वभाविजीवस्य ब्राह्ममैश्वर्यं संकलपमात्राद् भवति न तु विषयार्जनादिक्लेशक[3]मपेक्षते, कुतः ? श्रुतेः, "यं यं कामं कामयते सोऽस्य संकल्पादेव समुत्तिष्ठति" ति श्रुतेरित्यर्थः ।

ननु कार्यब्रह्मलोके भवत्वैश्वर्यं कार्यब्रह्मलोकाद् ब्रह्माण्डाद् वहिः परं ब्रह्म गतस्य तु कथमैश्वर्यभोगः संभवेत्, कारणादीनां[4](करणादीनां ) कारणे विलयादिति । न च परब्रह्मणि गतस्य जैमिन्युक्तैश्वर्यभोग एव विप्रयाणमिति वाच्यम्, परं ज्योतिरुपसंपद्य स्वेन रूपेणाभसंपद्यत इत्यव्यधानेन पठितत्वात्, "स तत्र पर्येति जक्षन् क्रीडन् रममाण" इति वाक्यात् परब्रह्मणोऽपि भोगसिद्धेरिति, उच्यते—परब्रह्मणि द्विविधा गतिः, एका विलयरूपा, सा च प्राकृतप्रलयात्यन्तिकप्रलययोरेव भवति । द्वितीया च गगनपक्षिणामिव सर्वावरणाद् वहिष्ठे मायाशवलब्रह्मणि लिङ्गदेहस्य संध[5]मात्रम्—

हृदाकाशस्थितो यो हि यद्यसंपुटमध्यगः ।
अनन्ता रश्मयस्तस्य दीपवच्चरतो हृदि ॥
ऊर्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्यमण्डलम् ।
ब्रह्मलोकमतिक्रम्य तेन यान्ति परां गतिम् ॥

---

१ 'पत्रे' इति उ० ह० लि० पु० पाठः । 'पक्षे' इति सम्यक् ।

* यथामुद्रितं पाठ एकस्मिन् ह० लि० पु० वर्तते ।
'कारनकृत्वात्' इत्यन्यस्मिन् ह० लि० पु० पाठो भाति किन्तु सोऽप्यस्पष्टः ।

२ यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते ।

३ यथामुद्रितं पाठ एकस्मिन् ह० लि० पु० वर्तते । अन्यस्मिन् 'क्ष्य' इति पाठो भाति । 'कर्मापेक्ष(क्ष्य)ते' इति सम्यग् भाति । 'क्लेशकमपेक्ष्यते' इत्यपि संभवि ।

४ 'कारणादीनां' इत्येव पाठ उ० ह० लि० पु० वर्तते ।

५ यथामुद्रितं पाठ उ०ह०लि०पु० वर्तते, 'संधिमात्रम्' 'संघमात्रम्' वा भाति पाठः ।

इति याज्ञवल्क्यादिभ्य इति । तथा च करणाविलयात् कारणब्रह्मणि गतस्यापि कारणापूरितस्य लिङ्गदेहस्य कारणसत्त्वनिमित्तप्रकृष्टपदार्थभोगातिशयः संभवतीति । अत एव मोक्षधर्मे परब्रह्मगतस्यापि पाक्षिकमनआदिकं तिष्ठतीति स्मर्यते, यथा—

विमुक्तः सर्वपापेभ्यः प्रविष्टस्तमनामयम् ।
परमात्मानमगुणं न निवर्तति भारत ॥
श्लिष्टं तत्र मनस्तात इन्द्रियाणि च भारत ।
आगच्छन्ति यथाकालं गुरोर्निर्देशकारिणः ॥ इति ।

ईश्वराज्ञया लीलावताराथं स्वजीवरूपेश्वरांशाधिष्ठिता अण्डमध्ये आगच्छन्ति गच्छन्ति च यावद् भोगसमाप्तिमित्यर्थः । अत्र च बाह्यकरणप्रतिषेधार्थमेव संकल्पादेवेत्युक्तम् नन्वीश्वरस्य[1] ( नत्वीश्वरस्य ) प्रकृतितद्गुणादीनां वा कारणत्वं निराकृतमिति बोध्यम् ॥

अत एवा[2] ( एव चा ) नन्याधिपतिः ॥ ९ ॥

अत एव अप्रतिहतसंकल्पत्वादेव स[3] ब्रह्मसंपत्तिरनन्याधिपतिः नास्त्यन्योऽधिपतिर्यस्य स्वराडित्यर्थः । ईश्वरस्तु तस्येच्छां संपादयत्येव न तु विवा(घा) तयतीति सोऽपि तस्येश्वर इति भावः । यद्वा अन्य ईश्वरातिरिक्तो नास्त्यधिपतिर्यस्येत्यर्थः । एवं च सति सूत्रस्य तत्स्थान्यपदस्य च साफल्यं भवतीति बोध्यम् । अन्यथा संकल्पादेवेतिपूर्वसूत्रादेव स्वातन्त्र्यलाभादिदं सूत्रमन्यपदं च मन्दप्रयोजनं स्यादिति । विदुषां स्वाराज्यं च "स स्वराड् भवति तस्य सर्वेषु कामचारो भवतीति" श्रुतेः,

"सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति ॥"

इति स्मृतेश्च सिद्धमिति ॥

इदानीमिदं विचार्यते—तस्य सिद्धस्य कार्यब्रह्मलोके परब्रह्मलोके वा किं मनोमात्रेणैव भोगः, किं वा स्थूलदेहोऽपि भोगार्थमुत्पद्यत इति—

अभावं बादरिराह ह्येवम् ॥१०॥

भावः—उत्पत्तिः । बादरिराचार्यः सिद्धस्य ब्रह्मलोकेऽभावमनुत्पत्तिं मन्यते, येनैव लिङ्गदेहेन ब्रह्मलोके गतं तदतिरिक्तदेहस्याभावं मन्यत इति यावत् । तन्न[4]

---

[1] 'नन्वीश्वरस्य' इति उ० ह० लि० पु० अपि पाठः ।

[2] यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते ।

[3] 'स ब्रह्मसंपन्नोऽनन्याधिपतिः' इति उ० ह० लि० पु० पाठः, स च सम्यग् भाति ।

[4] यथामुद्रितं पाठ उ० ह० लि० पु० अपि वर्तते ।

(तन्व) भावे सन्ध्यवदित्यागामिसूत्रस्वरसेनायमर्थोऽवगम्यते। स्वोक्ते प्रमाणमाह—ह्येवमिति। यस्माच्छ्रुतिरेवमाह "धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामीति" स्थूलशरीरं धूत्वा त्यक्त्वा अकृतं कारणं ब्रह्मलोकम् अति[1] (अभि) लद्मी (लक्ष्मी) कृत्य सम्भवामि तिष्ठामीति प्रार्थना॥

भावं जैमिनिर्विकल्पामननात्॥११॥

जैमिनिराचार्यः सिद्धस्य भावमुत्पत्तिं देहरूपेण मन्यते, कुतः? विकल्पामननात्। "स एकधा भवति द्विधा भवति त्रिधा भवती" त्यादिना सिद्धस्य देहरूपेण बहुभवनम् एकद्वित्र्यादिरूपसंख्यायाम् इच्छाविकल्पकथनादित्यर्थः।

जगतः प्रलये प्राप्ते नष्टे च कमलोद्भवे।
मद्भक्ता नैव नश्यन्ति स्वेच्छाविग्रहधारिणः॥

इत्यादित्यपुराणस्थेश्वरवाक्याच्च स्फुटं तेषां देहग्रहणं सिद्धम्॥

तदनयोर्भावाभावयोर्विरोधं परिहरत्याचार्यः—

द्वादशाहवदुभयविधं वादरायणोऽतः॥१२॥

अत उभयलिङ्गदर्शनादुभयविधमेव वादरायणोऽनुमन्यते भावमभावञ्चेति। यदा सशरीरजां[2] (तां) कामयते तदैव सशरीरो भवति, यदा शरीरं न कामयते तदा पूर्वं भावं गतेन लिङ्गदेहेनैक एवावतिष्ठत इति। द्वादशाहवदिति। यथा द्वादशाहः सत्रम् अहीनश्च भवतीत्युभयलिङ्गदर्शनात् द्वादशाहः सर्वकालयोः सत्रे विकल्पस्तद्वदित्यर्थः॥

तत्र सशरीरत्वेऽशरीरत्वे चोभयथैव भोगमुपपादयति सूत्रद्वयेन—

[3] तन्वभावे सन्ध्यवदुपपत्तेः॥१३॥

जाग्रत्स्वप्नयोः सन्धौ भवः सन्ध्यः "स्वपुः[4] (पुः) सन्ध्यं तृतीयस्थानम्" इति श्रुतेः। तनोः स्थूलदेहस्याभावे स्वप्नवदेव मनोमात्रेणैव ब्रह्मलोके पित्रादिसर्वकामभोगोपपत्तेरित्यर्थः। पञ्चमी च पूर्वसूत्रोक्तार्थं प्रति हेतुतायामिति॥

भावे जाग्रद्वत्॥१४॥

तनोर्भावे पुनर्जाग्रद्वदेव स्थूलभोगोपपत्तेरित्यर्थः। नन्वेवं कारणब्रह्मण्यपि

---

[1] 'अभिलद्मीकृत्य' इति उ० ह० लि० पु० पाठः।

[2] 'शरीरजां' इत्येकस्मिन् ह० लि० पु० पाठः।
'शरीरतां' इत्यन्यस्मिन् ह० लि० पु० पाठः।

[3] 'तनुभावे' इति सूत्रांश उ० ह० लि० पु० वर्तते, स चासम्यक् प्रतिभाति।

[4] 'स्वपुः' इति उ० ह० लि० पु० पाठः।

विकारस्वीकारे ब्रह्माण्डादित्यस्तत्र[1] (दितस्तत्र) को विशेषो येन कार्यकारणरूप-[2]मन्तर्बाह्यविभाग इति चेन्न, महदादिक्रमेण सृष्टेरेवान्तर्विशेषान। तत एव सृज्य-मानानां च मालिन्यात्। ब्रह्माण्डाद् बहिस्तु केवलप्राकृततया सृष्टेर्विशुद्धत्वादिति। तथा चाभौतिकसृष्टेरुत्कर्षः श्रूयते "स्वेच्छामयस्य नतु भूतमयस्ये" ति। स्वेच्छाया[3] प्रकृत्याख्यमायाशक्तिनिर्मितस्य न तु पञ्चभूतनिर्मितस्येत्यर्थः।

ननु विविधस्थूलशरीरस्य कथमेकेन मनसा युगपदनेकशरीराधिष्ठानं सम्भवेत्! सम्भवे वा शरीरभेदैर्नैवकदा[4] (भेदैर्नैकदा) भोगयोगादिरूपविरुद्धनानाकार्यानुप-पत्तिरित्याशङ्कां दृष्टान्तेन परिहरति—

**प्रदीपवदावेशस्तथा हि दर्शयति ॥१५॥**

यथैकः प्रदीपोऽनेकासु दशास्वंशत आविशति, एवमेव सिद्धस्य चित्तं स्वांशै-रनेकेषु स्थूलदेहेष्वाविशति, कुतः? हि यस्मात् श्रुतिरेवं दर्शयति "न पश्यो मृत्युं पश्यति न रोगं नोत दुःखतां सर्वं ह पश्यः पश्यति सर्वश इति सर्वं सर्वश आप्नोति सर्वं देहं तत्समसंख्यैः स्वलिङ्गशरीरांशैर्व्याप्नोतीत्यर्थः। अत एव पातञ्जलसूत्रम् "निर्माणचित्तान्यस्मितामात्रादि" ति। अस्मितामात्रात् अहङ्काराद्योगी निर्माणचित्तानि करोतीत्यर्थः। तथा मोक्षधर्मेऽपि—

दीपाद्दीपसहस्राणि यथा मर्त्याः प्रकुर्वते।
प्रकृतिस्तथा कुरुते पुरुषस्य गुणान् बहून्॥ इति।

गुणान् मनआदीनि स्वांशैः कुरुत इत्यर्थः।

ननु प्रदीपस्यावयवित्वाद्दंशाः संभवन्ति मनसस्तु "यावदात्मभावित्वाच्च न रोध" इत्यनेन नित्यत्वस्योक्तत्वान्नावयवित्वं ततश्च नांशित्वमिति चेन्न, अतःकरणस्य विभुत्वमते गगनस्य श्रोत्रादिवदंशसम्भवात्, अणुत्वमते प्रतिनियतमनसो नित्यनिरंश-त्वे[5]ऽहं (पि) तस्यैवोदासीनमनोभिः संहत्य महापृथिव्यादिवदवयविनो महामनसः स्वीकर्तव्यत्वेनांशसंभवादन्यथा "एवं सोम्य ते षोडशानां कलानामेका कला विशिष्टा-ऽभूत् सान्नेनोपसमाहिता तयैतर्हि वेदाननुभवस्यन्नमयं हि सोम्य मन" इत्यादिश्रुति-विरोधापत्तेरिति। अतएवोक्तं पातञ्जले "जात्यन्तरपरिणामः प्रकृत्यापूरादि" ति। तस्मादणुपक्षेऽवयविनः कार्यं मनसोंऽशैरनेकदेहेष्वावेशः सम्भवतीति।

[1] यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते।
[2] 'रूपामन्तर्बाह्य' इत्येकस्मिन् ह० लि० पु० पाठः।
'रूपामन्तर्बाह्य इत्यन्यस्मिन् ह० लि पु० पाठः।
[3] यथामुद्रितं पाठ उ० ह० लि० पु० वर्तते। 'स्वेच्छया' इति 'स्वेच्छामयस्य' इति वा सम्यक्।
[4] 'भेदैर्वैकदा' इति उ० ह० लि० पु० पाठः।
[5] 'निरंशत्वेऽपि' इति उ० ह० लि० पु० पाठः।

नन्वेवं सिद्धस्य स्वमनोंऽशैर्विविधशरीरप्रवेशतो विविधभोगस्वीकारे सति स्वनिर्मितगजतुरगादिशरीरेषु दुःखभोक्तृत्वापत्तिरिति मैवम्, तत्र जीवान्तराण्येव तत्तन्मनोविशिष्टं निर्माय गजादिशरीरेषु प्रवेश्याधिष्ठातृतयैव निजमनसोऽवस्थानाङ्गीकारात् सिद्धस्य, यथा परमेश्वरस्य विश्वान्तर्यामिनयेति। प्रदीपवदावेशस्तु स्वभोगाधिष्ठानशरीरेष्वेव, यथा विष्ण्वादिदेवानां कृष्णादिशरीरेषु, कृष्णस्य वा षोडशस्त्रीसहस्रगेहस्थषोडशसहस्रशरीरेष्विति।

सिद्धानां चांशांशिमनसोरयं विशेषः—अंशिमनःसंकल्पादेवांशभूतानां मनसामुत्पत्तिसंहारज्ञानेच्छाव्यापारादिकं तन्त्रत्वाच्च न पुनर्वैपरीत्यमिति, "प्रवृत्तिभेदे प्रयोजकं चित्तमेकनेकेषामि" ति पातञ्जलसूत्रादिति। एतेन विष्णुशिवादीनामंशावतारेषु ज्ञानादिशक्तितारतम्यमंश्यपेक्षया ज्ञानाद्यल्पत्वं चोपिपादित[1] (चोपपादितं) वाक्येषु कृष्णादीनां विष्ण्वाद्यंशत्वं चोपाध्यंशेनौपाधिकम्, आत्मैक्येन पितुः पुत्रेष्विवांशत्वासंभवादिति बोध्यम्॥

ननु ब्रह्मलोके विदुष ऐश्वर्यविशेष आविर्भवति नेह लोके इत्यत्र का युक्तिस्तत्राह—

स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि॥१६॥

स्वाप्ययः सुषुप्तं, स्वं ह्यपीतो भवतीति व्युत्पत्त्या श्रुतौ स्वमिति[2] (स्वपिति) नामनिर्वचनात्, संपत्तिर्ब्रह्मलोकप्राप्तिः, तयोरन्यतरापेक्षं सदेव तयोरन्यतरमपेक्ष्यान्यतरानन्तरमेवेति यावत्, तदैश्वर्यमाविष्कृतं व्यक्तम् हि भवति नाप्रदायैहिकप्रपञ्चदर्शनप्रतिबन्धादित्यर्थः। अत्र च श्रुतिः प्रमाणमिति भावः। तत्र ब्रह्मलोके तदैश्वर्याविर्भावे श्रुतिः "संकल्पादेवास्य पितरः समुत्तिष्ठन्ती" त्याद्यनन्तरं "त इमे[3](ऽ) सत्याः कामा अनृतापि(भि)धानाः यो यो ह्यस्येतः प्रैति न तमिह दर्शनाय लभतेऽथ ये चास्येह जीवा ये च प्रेताः यच्चान्यदिच्छन्न लभते सर्वं तदत्र गत्वा विन्नत[4] (विन्दत) इत्यादिः। सुषुप्तौ च येषु ज्ञानादिशक्तितारतम्यमंश्यपेक्षया ज्ञानाद्यल्पत्वं चापि प्रतिपादितं तदैश्वर्याविर्भाव[5]-श्रुतिः "न तत्र रथा रथयोगाः पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजत" इत्यादिः। अत्रचा[6]विष्कृतमिति वदद्भिराचार्यैः श्रुत्यनुसारेण सर्वे कामा अविद्यादशा-

---

[1] एकस्मिन् ह० लि० पु० 'चोपिपादित वाक्येषु' इति पाठः।
अन्यस्मिन् च 'चापिपादितवाक्येषु' इति पाठः।

[2] 'स्वमिति' इति उ० ह० लि० पु० पाठः।

[3] 'इमे सत्याः कामा अमृनृतापिधाना' इति उ० ह० लि० पु० पाठः।

[4] 'विन्नत' इति उ० ह० लि० पु० पाठः।

[5] 'भावे श्रुतिः' इति उ० ह० लि० पु० पाठः।

[6] 'चारिः कृतम्' इति उ० ह० लि० पु० पाठः।

यामप्यन्तापिधानाः[1] (अनृताभिधानाः) सर्वजीवेषु सन्तीति सूचितम्। अनृतं च स्वाभाविकं कामकर्मादिकं विकाराणां वाचारम्भणमात्रत्वात्। तदेव त्यै[2] (त्वै)श्वर्यशक्तितिरस्कृतं भवति "कालकर्मतमोरुद्धं पुनरध्यगमद् विभु" रित्यादिस्मरणात्। अथवा अनृतमैहिकप्रपञ्चमत्यलोकीयकामापेक्षयाऽल्पकालस्थायित्वेन वाचारम्भणभायत्वात्। तथा च श्रुतिः "त इमे[3] (ऽ)सत्याः कामाः अनृतापि(भि)धाना" इति। अत एव सत्कार्यवादोऽभ्युपगम्यते सांख्यादिभिरिति बोध्यम्॥

नन्वेवं सत्येतादृशैः पूर्वस्व(स)[4]र्गसिद्धैरेव सृष्ट्यादिसम्भवात् किं नित्यसिद्धेनेश्वरेणेति सांख्याभिप्रेतमित्याह—

जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च ॥१७॥

तेषां च मनसा सह ब्रह्मसायुज्यं गतानां जगद्गोचरव्यापारं महदादिसृष्टिं वर्जयित्वैवान्यसृष्टौ संकल्पमात्रेणैश्वर्यं मन्तव्यम्, कुतः? प्रकरणात्। विद्याफलप्रकरणे "स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ती" त्यादिनाऽवान्तरसृष्टेः[5] (सृष्टेरेवोक्तत्वात्)। सन्निहितत्वाच्च (महदादिसृष्टेः असन्निहितत्वाच्च)। महदादिसृष्टेर्विद्याप्रकरणे पाठाभावाच्चेत्यर्थः। च शब्देनानुपपत्त्यादयोऽपि ग्राह्याः। सिद्धस्य ह[6] (हि) नित्यसंकल्पाद्यभावेन सर्गाद्यकालीनः संकल्पः स्वजनकसंकल्पान्तराभावेन न सम्भवति। प्रकृतिस्वातन्त्र्यं च निराकृतमेव। ईश्वराभ्युपगमे तु नायं दोषः, धर्मिग्राहकप्रमाणेनेश्वरस्य नित्यसंकल्पादिनिमित्ततयैव सिद्धेरिति॥

ननूपासनादिसिद्ध एव देवताविशेषो महदादिप्रकरणेषूपदिश्यत इत्याशङ्क्यापाकरोति—

प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥१८॥

ननु जगत्सृष्टावपि सिद्धो जीवविशेषः सूर्य उपदिष्टोऽस्ति "यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः, दिव्ये ब्रह्मपुरे ह्येष आत्मा संप्रतिष्ठित" इत्यादिश्रुतावेष इत्यादिना प्रत्यक्षस्यैव विकारस्य पूर्वोक्तसृष्टीश्वरत्वोपदेशादिति चेन्न, आधिकारिकमण्डलस्थोक्तेः। अधिकारिणो हिरण्यगर्भस्य मण्डलमाधिकारिकमण्डलं सूर्यमण्डलं निखिलज्योतिर्मण्डलस्य प्रधानांशरूपं तत्स्थस्य तदन्तर्यामिणो नित्यपरमेश्वरस्यैव शाखाचन्द्र-

[1] 'अनृताभिधाना' इति उ० ह० लि० पु० पाठः।

[2] यथामुद्रितमेकस्मिन् 'तदेव त्वैश्वर्य' इति अन्यस्मिन् ह० लि० पु० पाठः।

[3] "इमेः सत्या कामा अनृतापिधाना" इमि उ० ह० लि० पु० पाठः।

[4] 'स्वर्ग' इति उ० ह० लि० पु० पाठः।

[5] सृष्टेरेवोक्तत्वात् महदादिसृष्टे च (व) सन्निहितत्वात् इति उ० ह० लि० पु० पाठः। रसन्निहितत्वाच्च इति पाठः सम्यक् प्रतीयते।

[6] 'ह' इति उ० ह० लि० पु० पाठः।

न्यायेन प्रदर्शनार्थमभेदेनोपासनार्थं वा एष इत्यादिशब्दैः प्रत्यक्षवदुक्तत्वात्, ननु[1] (न तु) स्वरूपत एव प्रत्यक्षत्वमुक्तमित्यर्थः ॥

ननु कथमेवं कल्प्यते, श्रुतिवलात् प्रत्यक्षसूर्य एवेश्वरो भवतु तदतिरिक्तेश्वरकल्पनायां गौरवाच्चेत्याशङ्कायामाह—

**विकारावर्त्ति च तथा हि स्थितिमाह ॥१९॥**

न केवलं मण्डलरूपे विकार एव ब्रह्म प्रत्येतव्यम् किन्तु विकाराद् बहिरपि, कुतः ? हि यस्मात् तथा बहिरन्तर[2] रूपेण द्विविधामेवेश्वरस्य स्थितिमाह श्रुतिः "तदन्तरस्य सर्वस्य तत्व[3] (तदु) सर्वस्यास्य वाह्यतः" इत्याद्या । तथा स्मृतिरपि प्रकृत्यन्तमावरणं पुरुषं चोक्त्वा सर्वेषां बहिर्वावरणमीश्वरोपाधिभूतमायाख्यशक्तिमाह—

विष्णुशक्त्या महाबुद्ध्येर्वृत्तौ संश्रयधर्मिणौ । इति ।

प्रकृतिपुरुषयोर्विभुत्वेऽपि तदुभयसंयोगेनाभिव्यक्ते[4](क्त) भागयोरेव ब्रह्मशक्त्यावृतत्वं वाध्यम् । अथवा आवरणसंश्रयणे अधिष्ठेयत्वमात्रम् । तस्मादादित्याद्यतिरिक्तः परमेश्वरोऽस्ति, स एवादित्यादिमण्डलेषु परिदृश्यत इति सिद्धम् ॥

किं च स्पष्टमेवादित्यादिभ्यो भिन्नमपि आदित्यादिस्थमात्मान्तरं श्रुतिस्मृती दर्शयत इत्याह—

**दर्शयतश्चैवं प्रत्यक्षानुमाने ॥२०॥**

प्रत्यक्षानुमाने श्रुतिस्मृतीति (स्मृती) । तत्र "य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरम्" इत्याद्या श्रुतिः । स्मृतिश्च—

पूजयेद् ब्रह्मविष्णवर्करुद्रविश्वात्मकं शिवम् ।
व्रतोपवासैर्विधिवच्छ्रुत्या विगतमत्सरः ॥
योऽसावतीन्द्रियः शान्तः सूक्ष्मोऽव्यक्तः सनातनः ।
वासुदेवो जगन्मूर्तिस्तस्य सम्भूतयो ह्यमी ।
ब्रह्मा विष्णुश्च भगवान् मार्तण्डो वृषवाहनः ॥
अष्टोत्तरसरश्चैव (शतश्चैव) एकादशगणाधिपाः ।
द्वादशैव तथादित्याः पितरो मातरस्तथा ॥
इमा विभूतयः प्रोक्ताश्चराचरसमन्विताः ।
ब्रह्माद्याश्च त्रयो मूलमव्यक्ताधिपतेः स्मृताः ॥

---

[1] 'ननु' इति उ० ह० लि० पु० पाठः ।

[2] 'अन्तररूपेण' इति उ० ह० लि० पु० अपि पाठः ।

[3] 'तत्व' इति उ० ह० लि० पु० पाठः ।

[4] 'क्ते' इति उ० ह० लि० पु० पाठः ।

शक्तिमद्भावरूपहेतुवचनाद् ब्रह्मादिभ्योऽतिरिक्त ईश्वर एव शक्तिशक्तिमदभेदाद् ब्रह्माद्यात्मक उक्त इति ॥

भोगमात्रसाम्यलिङ्गादपि जगद्व्यापारे नास्ति सिद्धस्य शक्तिरित्याह—

भोगमात्रसाम्यलिङ्गाच्च ॥२१॥

"सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति, स यथैतां देवतां सर्वाणि भूतान्यवन्ति एवं हैनं सर्वाणि भूतान्यवन्ति, तेन एतस्यै देवतायै सायुज्यं सलोकतां जयती" त्यादिश्रुतौ परमेश्वरेण सह तद्विदुषां भोगमात्रं समानं श्रूयते। अनेन च लिङ्गेनानुमीयते महदादिसृष्टौ तस्य शक्तिर्नास्ति किं तु परमेश्वरस्यैवेतीत्यर्थः। श्रुतौ-- ब्रह्मणा परब्रह्मणोपास्येनेत्यर्थः। अवन्तु[1] (अवन्ति) सेवकरूपा लयन्तीसर्थः (लषन्तीत्यर्थः)। सायुज्यं चोपास्ये प्रविश्य तेन सहैकीभावेनैकरूपो भोग इति। एकत्वरूपा तु मुक्ति-रुपाधेरत्यन्तलयादत्यन्तलय इति विशेषः। अत्रेश्वर[2]मपि भोग इति स्मर्तव्यम्।

नन्वेवमुपासासिद्धातिरिक्तेश्वराभ्युपगमे "ब्रह्म वेद ब्रह्मैव भवति स इदं सर्वं भवती" त्यादिश्रुतिविरोध इति चेन्न, अधिष्ठात्रादिरूपेण प्रायशः सर्वव्यापकत्वेनैव ब्रह्मत्वसर्वभावयोः फलवाक्यैरुक्तत्वात्, "सर्वं समाप्नोषि ततोऽसि सर्वः" इति गीतादौ तथा वचनदर्शनात् न तु मृत्तिकाया घटशरावादिभाववदखिलकार्यकारण-त्वेनेति ॥

नन्वेवं सातिशयत्वादैश्वर्यस्य तेषां कषायसंभवे पुनरावृत्तिरपि स्यादित्या-शङ्क्याह—

अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥२२॥

ये कार्ये ब्रह्मणि गता वा परब्रह्मणि वा भोगार्थं गतास्तेषां तद्भोगसमाप्त्यनन्तरं पुनरावृत्तिर्जन्म नास्ति, कुतः? शब्दात् "ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते" इति शब्दप्रामाण्यादित्यर्थः। यच्च कषायसंभव इत्युक्तं, तन्न, ब्रह्मलोकादधिकसुखस्य नित्य-त्वेनासाध्यतया तत्र कषायासंभवादिति।

अत्र चायं विशेषः—कार्यब्रह्मणि गतानामपुनरावृत्तिरौत्सर्गिकी कारणब्रह्मणि गतानां चापुनरावृत्तिर्नियता,

आब्रह्मभुवनाल्लोकात् पुनरावर्तिनोऽर्जुन।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥

इति श्रीकृष्णवाक्यात्। न चात्र विष्णुलोकादनावृत्तिवद् योगयुक्तः विष्णुलोकादप्या-वृत्तिस्मरणेनाप्तवाक्ये[3] (नात्र वाक्ये) मामित्यनेन परमात्मन एवोक्तत्वादिति। अना-वृत्तिशब्दादिति समग्रसूत्रस्य पुनः पाठः शास्त्रसमाप्तिसूचनार्थः।

---

[1] 'अवन्ति' इति उ० ह० लि० पु० पाठः।

[2] 'अत्रेश्वरमपि' इति उ० ह० लि० पु० पाठः।

[3] 'स्मरणेनात्रवाक्ये' इति उ० ह० लि० पु० पाठः।

[अत्रायं ब्रह्ममीमांसानिर्गलितार्थः संक्षेपादुच्यते—यश्चेतनविशेषो नित्यज्ञाने-च्छादिवन्मायाख्यनिजशक्तिवशात् सर्वेश्वरः क्लेशकर्मविपाकाशयैरौपाधिकैरप्यपरामृष्टोऽपि स्वान्तःस्थैः प्रकृतिपुरुषादिशक्तिभिरन्योन्यसंयोगान्महदादिकं सृजति ऊर्णनाभिप्रभृतिरिव तन्त्वादिकं ततश्च तावेवान्तः प्रविश्यान्तर्यामी स न* धारयति प्रकृत्यापूरेण स्थापयति च कर्मफलानि च प्रयच्छति महाराज इव सेवापराधयोः फलं, पुनश्च तानेवान्ते स्वात्मन्युपसंहृत्याद्वितीयः, सत्वेक [1](सन्नेक) एवावशिष्यते समुद्रे तरङ्गबुदबुदादिवत् क्षणभङ्गुरं मायेन्द्रजालादिसदृशं महोदधिरिव पृथिवीतत्कार्याणां प्रलये, अतश्च भिन्नं किमपि न भवति "सर्वं खल्विदं ब्रह्म तज्जलानि" ति श्रुतेः।

यस्मिंश्च विकारजातं सर्वं वाचारम्भणमात्रं समुद्रे तरङ्गबुद्बुदादिवत् क्षणभङ्गुरं मायेन्द्रजालादिसदृशं, यस्य च सूर्यकिरणादिवत् सर्वे जीवा अंशाः, यदधीनसत्तास्फूर्तिकत्वात्तु प्रकृतितद्गुणजीवादयोऽपि स्वप्ने वस्तु[2] (स्वाप्नवस्तुवद्) दृश्यत्वेन स्वतः सिद्धत्वाभावेन च न परमार्थसन्तः, यश्च स्वतो मायातद्गुणजीवादिभ्यो भिन्नाभिन्नो जीवाविलक्षणचिन्मात्रोऽपि न तेषां दोषैः कदापि लिप्यते, अत एव च यः पञ्चविंशतितत्त्वानामात्मा जीव इव कार्यकारणसंघातस्य तन्तुरिव च पटस्य, यदपेक्षया च भोक्तात्मा जीवोऽपि प्राणादिवज्जडतयाऽनात्मैव, तमेव परमात्मानं परं ब्रह्म निखिलवेदान्तमहावाक्यार्थभूतं शमदमादिसाधनसम्पन्नो विद्वान् "स म आत्मेति सोऽहमिति" मायाजीवादिविवेकेनात्मतया साक्षात्कृत्याविद्याकामधर्माधर्मादिक्षये निखिलदुःखादिहैवात्यन्तं विमुच्यते "न तस्य प्राणा उत्क्रामन्ती" ति श्रुतेः।

यस्तु मायाजीवाद्यविवेकेन तदेव ब्रह्मोपास्ते, यो[3] वाऽतिरिक्तब्रह्मांशासीन्तन्निष्ठानापन्नः सोऽप्रतीकालम्बनतयाऽर्चिरादिकार्यब्रह्मलोकान्तवर्त्मना ब्रह्माण्डात् सावरणाद् बहिः कारणब्रह्मणि मायाशबले गत्वा हिरण्यगर्भादीन् प्राप्यैश्वर्यं तु[4]—परमेश्वरेच्छया तल्लीलावताररूपेण $अन्ते च परब्रह्मण्येवोपसंहारात्,

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिश्चये॥

इति सर्वसम्मतानां तात्पर्यग्राहकलिङ्गानामत्र दर्शनात्, ब्रह्मशेषतयैव सांख्यादिशास्त्रैरेव जीवतत्त्वस्य निरूपितत्वात्, तन्निरूपणस्य पूर्वमीमांसानिरूपितकर्मशेषतयैवा$विर्भूयते स्वेच्छया तत्रैव मुच्यते, ब्रह्मविष्णुरुद्रादिषु पञ्चविंशतितत्त्वेषु वा ब्रह्मदर्शनं तु विद्वान-

* 'न.' इति पाठो युक्तो भाति।
[1] 'सन्नेक एवावशिष्यत' इत्यादि पाठः उ० ह० लि० पु० वर्तते।
[2] 'स्वप्ने वस्तु' इति उ० ह० लि० पु० पाठ'।
[3] प्राय ईदृश एव पाठ उ० ह० लि० पु० वर्तते।
[4] ह० लि० पु० अपीदृशः पाठः, स चायुक्तः।
$ एतच्चिह्नान्तर्गतः पाठ इह प्रमादादागतः।

प्रतीकालम्बनतया कार्यं ब्रह्मलोकं प्राप्य तत्रैव भुक्त्वा द्विपरार्धान्ते परिपक्वज्ञानश्चेत् ब्रह्मादिभिः सहैव मुच्यते, "तत्र प्राप्तविवेकस्यानावृत्तिश्रुतिरि"ति सांख्यसूत्रात्। नो चेत् सर्गान्तरेऽधिकारिब्रह्मादिरूपेणाविर्भवतीति। इदन्तु पञ्चसूत्र्यामुक्तमिति। योगात् महदादिकं सृजति ऊर्णनाभिप्रभृतिरिव तन्त्वादिकं, ततश्च तानेवान्तः प्रविश्यान्तर्यामी स न[1] (नः) धारयति प्रकृत्यापूरेण स्थापयति च कर्मफलानि च प्रयच्छति महाराज इव सेवापराधयोः फलं, पुनश्च तानेवान्ते स्वात्मन्युपसंहृत्याद्वितीयः सन्नेक एवावशिष्यते महोदधिरिव पृथिवीतत्कार्याणां प्रलये। अतश्च यतो भिन्नं किमपि न भवति "सर्वं खल्विदं ब्रह्म तज्जलानि" ति श्रुतेः।

यस्मिंश्च विकारजातं सर्वं वाचारम्भणमात्रं समुद्रे तरङ्गबुद्बुदादिवत् क्षणभङ्गुरं मायेन्द्रजालादिसदृशं, यस्य सूर्यकिरणादिवत् सर्वे जीवा अंशाः, यदधीनसत्तास्फूर्तिकत्वात्तु प्रकृतितद्गुणजीवादयोऽपि स्वाप्नवस्तुवत् दृश्यत्वेन स्वतः सिद्धत्वाभावेन च न परमार्थसन्तः, यश्च स्वतो मायातद्गुणजीवादिभ्यो भिन्नाभिन्नो जीवाविलक्षणचिन्मात्रो* अतएव च यः पञ्चविंशतितत्त्वानामात्म[2] (त्मा) जीव (जीव इव) कार्यं (कार्य) कारणसंघातस्य तन्तुरिव च पटस्य, यदपेक्षया च भोक्तात्मा जीवो (ऽपि) प्राणादिवज्जडतयाऽनात्मैव, तमेव परमात्मानं परं ब्रह्म [3]निखिलवेदान्तमहावाक्यार्थभूतं शमदमादिसाधनसम्पन्नो विद्वान् 'स म आत्मेति सोऽहमिति, मायाजीवादिविवेकेनात्मतया साक्षात्कृत्याविद्याकामधर्मादिक्षये निखिलदुःखादिभिरिहैवात्यन्तं विमुच्यते "न तस्य प्राणा उत्क्रामन्ती" ति श्रुतेः।

यस्तु मायाजीवाद्यविवेकेन तदेव ब्रह्मोपास्ते, यो वाऽतिरिक्तब्रह्मा स्वामी तन्निष्ठामापन्नः सोऽप्रतीकालम्बनतयाऽर्चिरादिकार्यब्रह्मलोकान्तवर्त्म[4] नां(ना) ब्रह्माण्डात् सावरणात् बहिः कारणब्रह्मणि मायाशवले गत्वा हिरण्यगर्भादीन् प्रत्यप्यैश्वर्यं भुक्त्वा

---

[1] 'न' इति उ० ह० लि० पु० पाठः।

* पूर्वपुस्तके किञ्चिदधिकः पाठः इति मु० शा० टिप्पणी।

[2] "आत्मा जीव कार्यकारणसंघातस्य...जीवो प्राणादिवज्जडतयाऽनात्मे"ति उ० ह० लि० पु० पाठः।

[3] 'विलिख्य' इति मु० पु० पाठोऽयुक्तो भाति।

[4] 'वर्त्मना' इति उ० ह० लि० पु० पाठः।

[ ] कोष्ठान्तर्गतेषु पृष्ठद्वयपाठेषु प्रमादाद् द्विरुक्तिः प्रतीयते असमञ्जसा च सा। अत्र सूत्रे मध्ये द्विरुक्तिः प्रतिभातीति मु० शा० टिप्पणी।
अत्रायं समञ्जसः पाठः सम्भवी—"अत्रायं ब्रह्ममीमांसानिर्गलितार्थः संक्षेपादुच्यते—यश्चेतनविशेषो नित्यज्ञानेच्छादिवन्मायाख्यनिजशक्तिवशात् सर्वेश्वरः क्लेशकर्मविपाकाशयैरौपाधिकैरप्यपरामृष्टोऽपि स्वान्तःस्थैः प्रकृतिपुरुषादिशक्तिभिरन्योन्यसंयोगान्महदादिकं सृजति ऊर्णनाभिप्रभृतिरिव तन्त्वादिकं, ततश्च तानेवान्तः प्रविश्यान्तर्यामी स नः धारयति, प्रकृत्यापूरेण स्थापयति च कर्मफलानि च प्रयच्छति

परमेश्वरेच्छया तल्लीलावताररूपेण शश्वदाविर्भूय च स्वेच्छया तत्रैव मुच्यते। ब्रह्म-विष्णुरुद्रादिषु पञ्चविंशतितत्त्वे ( तत्त्वेषु ) वा ब्रह्मदर्शनं तु विद्वानप्रतीकालम्बनतया कार्यब्रह्मलोकं प्राप्य तत्रैव भुक्त्वा द्विपरार्धान्ते परिपक्वज्ञानश्चेद् ब्रह्मादिभिः सहैव मुच्यते, "तत्र प्राप्तविवेकस्यानावृत्तिश्रुति"रिति सांख्यसूत्रात्। नो चेत्, सर्गान्तरेऽधिकारिब्रह्मादिरूपेणाविर्भवतीति। इदन्तु पञ्चसूत्र्यामुक्तमपि पुनः स्मर्यते।]

इदं शास्त्रं जीवनिरूपणपरं न भवति "अथातो ब्रह्मजिज्ञासे" ति परब्रह्मविचारस्यैव प्रतिज्ञातत्वात् अन्ते च परब्रह्मण्येवोपसंहारात्।

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिश्चये॥

इति सर्वसम्मतानां तात्पर्यग्राहकलिङ्गानामत्र दर्शनात्। ब्रह्मशेषतयैव सांख्यादिशास्त्रैरेव जीवतत्त्वस्य निरूपितत्वात्। तन्निरूपणस्य पूर्वमीमांसानिरूपणवद् व्यर्थत्वात्[1]।

---

महाराज इव सेवापराधयोः फलम्। पुनश्च तानेवान्ते स्वात्मन्युपसंहृत्याद्वितीयः सन्नेक एवावशिष्यते महोदधिरिव पृथिवीतत्कार्याणां प्रलये। अतश्च भिन्नं किमपि न भवति "सर्वं खल्विदं ब्रह्म तज्जलानि"ति श्रुतेः।

यस्मिंश्च विकारजातं सर्वं वाचारम्भणमात्रं समुद्रे तरङ्गबुद्बुदादिवत् क्षणभङ्गुरं मायेन्द्रजालादिसदृशं, यस्य च सूर्यकिरणादिवत् सर्वे जीवा अंशाः। यदधीनसत्तास्फूर्तिकत्वात्तु प्रकृतितद्गुणजीवादयोऽपि स्वाप्नवस्तुवत् दृश्यत्वेन स्वतः सिद्धत्वाभावेन च न परमार्थसन्तः, यश्च स्वतो मायातद्गुणजीवादिभ्यो भिन्नाभिन्नो जीवाविलक्षणचिन्मात्रोऽपि न तेषां दोषैः कदापि लिप्यते। अत एव च यः पञ्चविंशतितत्त्वानामात्मा जीव इव कार्यकारणसंघातस्य तन्तुरिव च पटस्य। यदपेक्षया च भोक्तात्मा जीवोऽपि प्राणादिवज्जडतयाऽनात्मैव। तमेव परमात्मानं परं ब्रह्म निखिलवेदान्तमहावाक्यार्थभूतं शमदमादिसाधनसम्पन्नो विद्वान् "स म आत्मेति सोऽहमिति" मायाजीवादिविवेकेनात्मतया साक्षात्कृत्याविद्याकामधर्माधर्मादिक्षये निखिलदुःखादिभिरिहैवात्यन्तं विमुच्यते "न तस्य प्राणा उत्क्रामन्ती"ति श्रुतेः।

यस्तु मायाजीवाद्यविवेकेन तदेव ब्रह्मोपास्ते, यो वाऽतिरिक्तब्रह्मांशस्तन्निष्ठामापन्नः सोऽप्रतीकालम्बनतयाऽर्चिरादिकार्यब्रह्मलोकान्तवर्त्मना ब्रह्माण्डात् सावरणाद् बहिः कारणब्रह्मणि मायाशबले गत्वा हिरण्यगर्भादीन् प्रत्यप्यैश्वर्यं भुक्त्वा परमेश्वरेच्छया तल्लीलावताररूपेण शश्वदाविर्भूय च स्वेच्छया तत्रैव मुच्यते। ब्रह्मविष्णुरुद्रादिषु पञ्चविंशतितत्त्वेषु वा ब्रह्मदर्शनं तु विद्वानप्रतीकालम्बनतया कार्यब्रह्मलोकं प्राप्य तत्रैव भुक्त्वा द्विपरार्धान्ते परिपक्वज्ञानश्चेद् ब्रह्मादिभिः सहैव मुच्यते "तत्र प्राप्तविवेकस्यानावृत्तिश्रुति"रिति सांख्यसूत्रात् (१-८३), नो चेत, सर्गान्तरेऽधिकारिब्रह्मादिरूपेणाविर्भवतीति। इदन्तुपञ्चसूत्र्यामुक्तमपि पुनः स्मर्यते।" इति।

[1] यथामुद्रितं पाठ एकस्मिन् ह० लि० पु० वर्तते।
'पूर्वमीमांसानिरुपितकर्मनिरूपणवत् व्यर्थत्वात्' इत्यन्यस्मिन् ह०लि०पु० पाठः।

न चात्र ब्रह्माखण्डतया जीवनिरूपणेन (निरूपणे न) वैयर्थ्यं स्यादिति वाच्यम्, तथा सति तस्यैव मुख्यतः शास्त्रार्थतयाऽ"थातो जीवब्रह्मजिज्ञासे"त्येव प्रतिज्ञासूत्रं युज्येत न पुनरेकदेशप्रतिज्ञाकरणम्। किं वाऽखण्डता यदि कुत्रापि सूत्रे स्फुटमुपलभ्यते[1] तदेवमपि (चेदेवमपि) दया ? (तथा) कथञ्चित् कल्प्येत, तदेव तु नेति कथं यथाश्रुतार्थं परित्यज्य मुमुक्षवः श्रद्दधीरन्निति दिक्।

ब्रह्मादिभिरशक्येऽस्मिन् ब्रह्मतत्त्वनिरूपणे।
साहसं मद्विधस्येदं भगवान् क्षन्तुमर्हति॥
येन भूयो न धीदुःखं भोक्ष्ये दृश्यमनोऽतिगः।
त्वय्यनन्ते सुखाब्धिस्थे शयिष्ये च गतज्वरः॥
अथवाऽज्ञानतोऽप्यस्मिन्नपराधोऽल्पकोऽपि मे।
सर्वकर्तुर्हि भवतो दारुयन्त्रसमा वयम्॥
किं चापराधः कर्तुः स्यान्नाहं कर्ता चिदात्मकः।
नापि बुद्धि[2] (बुद्धे)र्विवेकित्वाद् धर्माधर्मसमुद्भवः॥
मत्साक्षिबुद्धिकृतया सेवया शास्त्ररूपया।
आत्यन्तिकीं दुःखहानिमीशस्तस्यै प्रयच्छतु॥

इति ब्रह्ममीमांसायां विज्ञानयतिकृते विज्ञानामृताख्य ऋजुभाष्ये
चतुर्थाध्यायस्य चतुर्थः पादः।

---

इति न्यायवेदान्तसांख्ययोगाचार्य श्रीकेदारनाथत्रिपाठिसम्पादितं
ब्रह्मसूत्रविज्ञानामृतभाष्यं
सम्पूर्णम्।

* श्रीकृष्णार्पणमस्तु *



---

[1] 'उपलभ्यत तदेवमपि' इति उ० ह० लि० पु० पाठः।
[2] 'नापि बुद्धी विवेकित्वात्' इति उ० ह० लि० पु० पाठः।

आशुतो[illegible] अवस्थी
[illegible]
श्री [illegible] (उ.प्र.)

## ब्रह्मसूत्रपाठभेदाः

| शाङ्करमतेन | विज्ञानभिक्षुमतेन | अ० | पा० | सू० |
|---|---|---|---|---|
| कम्पनात् | प्राणः कम्पनात् | १ | ३ | ३९ |
| पत्यादिशब्देभ्यः | पत्यादिशब्देभ्यश्च | १ | ३ | ४३ |
| कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा | ···निरवयशब्दकोपो वा | २ | १ | २६ |
| गुणाद् वा लोकवत् | गुणाद् वाऽऽलोकवत् | २ | ३ | २५ |
| अभिसन्ध्यादिष्वपि चैवम् | अभिसन्ध्यादिष्वप्येवम् | २ | ३ | ५२ |
| प्रथमेऽश्रवणात् | प्रथमे श्रवणात् | ३ | १ | ५ |
| अन्याधिष्ठितेषु | अन्याधिष्ठिते | ३ | १ | २४ |
| स एव तु··· | स एव च··· | ३ | २ | ९ |
| तथान्यप्रतिषेधात् | तथान्यप्रतिषेधाच्च | ३ | २ | ३६ |
| न वा विशेषात् | न वाऽविशेषात् | ३ | ३ | २१ |
| काम्यास्तु यथाकामं समुच्चीयेरन् न वा पूर्वहेत्वभावात् | ( विज्ञानामृतभाष्ये इदं सूत्रं नास्ति ) | ३ | ३ | ६० |
| अक्षरधियां त्वविरोधः | अक्षरधियां त्ववबोधः | ३ | ३ | ३३ |
| शेषत्वात् पुरुषार्थवादो यथान्येष्विति जैमिनिः | शेषत्वात् पुरुषार्थवादो यथा-ह्यन्येष्विति जैमिनिः | ३ | ४ | २ |
| तच्छ्रुतेः | तत्श्रुतेश्च | ३ | ४ | ४ |
| शमदमाद्युपेतः स्यात्तथापि तु तद्विधे-स्तदङ्गतया तेषामवश्यमनुष्ठेयत्वात् | शम······तथापि तद्विधे··· तेषामवश्यानुष्ठेयत्वात् | ३ | ४ | २७ |
| सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् | सर्वान्नानुमतिः प्राणात्यये तद्दर्शनात् | ३ | ४ | २८ |
| तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात् तद्रूपाभावेभ्यः | तद्भूतस्य ······नियमातद्रूपा-भावेभ्यः | ३ | ४ | ४० |
| आप्रायणात् तत्रापि हि दृष्टम् | आप्रायणात् तथाहि ( तत्रापि ) दृष्टम् | ४ | १ | १२ |
| भूतेषु तच्छ्रुतेः | भूतेष्वतः श्रुतेः | ४ | २ | ५ |

---

## सहायकग्रन्थसूची

१—ब्रह्मसूत्रविज्ञानामृतभाष्यम् ( प्रस्तुतप्रकाशने आदर्शग्रन्थः )
अडकरोपनामक श्रीमुकुन्दशास्त्रिसम्पादितम्
प्रकाशनकालः—१९०१ ई० वर्षम्
प्रकाशकः—श्रीहरिकृष्णदासः, विद्याविलासप्रेस, चौखम्बा, काशी ।

२—ब्रह्मसूत्रं सभाष्यम् ( भाष्यकारो विज्ञानभिक्षुः )
ग्रन्थसंख्या—२८१०९
सङ्कलितपृष्ठसंख्या—४४८ ( पूर्णम् )
लिपिकालः—१९५४ संवत्
The Sanskrit Manuscripts Volume VII P. N. 134
सरस्वतीभवनपुस्तकालय, सम्पूर्णानन्द सं० विश्वविद्यालय, वाराणसी ।

३—ब्रह्मसूत्रव्याख्या (विज्ञानभिक्षुकृता) पत्रावली (ऋजुभाष्यम् इति नामान्तरम्)
ग्रन्थसंख्या—२८२११
पत्रसंख्या—१—२०१, २०१—५१९ पुनः १—१२० = ६३९ ( पूर्णा )
लिपिकालः—१९४४ संवत्
The Sanskrit Manuscripts Volume VII P. N. 144
सरस्वतीभवनपुस्तकालय, सम्पूर्णानन्द सं० विश्वविद्यालय, वाराणसी ।

